सजलनयना वदेदेवं "न तावन्तं कालमहं व्रजेन्द्रमेकाकिनं पाठशालायां त्यक्तुं शक्नोमि, गृह एवागत्योपाध्यायः पाठयतु, ततो यावती विद्या लब्धा भविष्यति तावत्यैवालं, न हि सम्पादितविधेन कस्यचित्सेवा कर्तव्या, काल्याः कृपया चिरायुरयं जीवत्वरोगदृढगात्रः, भोजनाच्छादनयोः का वा चिन्तास्य" इति । प्रातर्दशघण्टावादनकालात् प्रभृति सायं चतुर्घण्टावादन-पर्यन्तकाले त्रयस्समायान्त्युपाध्याया मां पाठयितुम् । एतादृशेन प्रबन्धेनाष्टा-दशे वयसि समाप्तमभूमेऽध्ययनम् ।

महता सुखेन याति कालः । कस्यापि वस्तुनो नास्ति न्यूनता । मन्ये मे ( अष्टादशवर्षपर्यन्तं ) केनापि प्रकारेण कष्टं नाभूदिति । एतावतापि मातुर्मम नासीन्मनोरथः पूर्णः ।

किञ्चिदन्यदप्यत्र वच्मि । यदाहं सायं बहिर्विहरणाय गच्छामि, तदा माता मे स्वयमेव हस्ताभ्यामलङ्करोति वस्त्रादिभिर्माम् । न जानामि, कुतो मामेवमलङ्कृतं चिरमवलोकयति माता मे ।

शयनगृहन्तु मम पितुश्शयनागारस्य पार्श्व एवासीत् । रात्रौ यावदहं न स्वपिमि तावन्मातापित्रोरपि नेत्रयोर्नायाति निद्रा । रात्रंदिवमपि तयोरहं दृष्टि-विषय एवासम् । शयनानन्तरमपि रक्षन्ति स्म मां भटा निर्निद्रम् । इत्थमेव च सुखेन व्यतीतास्सप्तदश हायनाः । अष्टादशे न वयसि न्यधीयत मया पदम् ।

एकदा च रात्रौ दशघण्टावादनसमये यावदहं शयनागारं गतस्ताव-देतान् कतिचन शब्दानशृणवम् । माता मे पितरमवादीत् "शृणु, वचनं ममाङ्गीकुरु, व्रजेन्द्रस्य विवाहं कारय, महती मे समुत्कण्ठा, कस्यचिदुच्च-कुलीनस्य धनवतो गृहात्कन्यामानय, व्रजेन्द्रोऽधीदानीमष्टादशवयस्क ," इति । पिता तु किंचिदप्यवदन्नेव शिरश्चालयामास । विरराम च सद्य एव तयोरालापः ।

एवमेव चानुदिनं वदति मे माता । अहमपि शृणोमि तथैव । पितुस्तु वाक्यैस्तस्य नास्ति सम्मतिरित्यज्ञायत । स किलामन्यत 'यदाहमितोऽपि किंचिदधिकवया भविष्यामि तदा विवाहो मे भवितेति । परन्तु न पितु-

रिच्छा पूर्णाभवत्, मातुरेव चाभिमाये वलवानासीत्। अष्टादश एव वयसि कलकत्तानगरे कस्यचिद्धनिकस्य कन्यया सह विवाहो मेऽभवत्।

विवाहसंरम्भोऽतिमहान्मम गृहे। वस्त्रभूषणान्यप्यत्यधिकानि। गृहालङ्करणं च विशेषत आसीत्। बन्धुमित्रादीनां समावेशोऽपि सुमहान्। नृत्यगीतवाद्यादीन्यप्यासन्नधिकाधिकानि। मन्ये वध्वा अपि सौन्दर्यम्महदेव स्यात्। किं बहुना सर्वमप्यधिकादप्यधिकमेवासीत्। किन्तु मनसि ममानन्दस्य परमधिकता नासीत्। अस्तु। इदमुत्तरत्र निरूप्यताम्। इदानीं तु यदारब्धं वक्तुं तदेव ब्रवीमि।

धनवतो गृहे विवाहो ममाभूदित्येवाहमश्रौषम्। विवाहसंरम्भोऽप्यधिकाधिक एवासीत्। किन्त्विदमेवाश्चर्यस्थानम्, यद्वरस्य मम गृहे विवाहसंरम्भोऽयमेतादृशः, यत्र तु विवाहस्तत्र किमपि नास्ति, कन्याया गृहे कोऽपि विशेषो न दृश्यते। यद्यपि श्वशुरगृहं ममातिविपुलदीर्घं किंचिदलङ्कृतं चासीत्, परं यथा विवाहगृहेण भाव्यं न तथासीत्। इदमन्यन्ममात्यधिकविस्मयबीजं यदस्मद्गृह ईदृशो विवाहसंरम्भः, परं विवाहार्थं सह मया विना पितरं कोऽपि नायासीत्। कारणं चात्र केनापि न पृष्टम्। अत एवाहमपि तूष्णीमेवासम्। कियदधिकं वच्मि, कन्यादानमपि तूष्णीमेव नाममात्रस्याभूत्। अन्यान्यस्त्रीणां नासीन्न्यूनता, परं वधूस्तु तत्र नादृश्यत क्षणमपि। कारणन्तु किमपि न मया सुचिरं विचारयताप्यधिगतम्।

न कस्याप्यामन्त्रणं कृतम्। न वा कश्चिदागतः। परं श्रुतं मया भोजनगोष्ठ्यपि निवृत्तेति। अन्यदपि विवाहकालिकं क्रियाजातमेवमेवासीत्।

वरवध्वोः सम्मेळनमपि भवति न वेति न मया लज्जया पृष्टम्। अत एव मया पूर्वमेवोक्तं 'सर्वमप्यधिकादप्यधिकमेवासीत्, किन्तु मनसि ममानन्दस्य परमधिकता नासीत्' इति। किमिदं विचित्रकृत्यम्! किं वास्य कारणम्? बह्वेव पर्यालोचि मया, परन्तु न किंचिदप्यवागम्यत। अस्तु। एवमेव विवाहं निर्वर्त्य पुनरपि वयं प्रतिनिवृत्ता- म्मो गृहान्।

स्वगृहे वसतो मम कृतविवाहस्य व्यतीतानि सप्तदिनानि । एषु सप्तसु दिवसेष्वेकदापि न मया तस्या मुखमपि दृष्टम्, या मयोढा। अस्मिन्विषये गेहस्थेषु कस्यापि किमपि प्रकाशयितुमिच्छा नासीत्, अत एवाहमपि मूक एवासम् ।

एकदा चाहं ममोपवेशनगृहे सह मित्रमण्डल्योपविष्टस्सल्लपन्नासम् । तदाले च कश्चिद्भृत्य आगत्य 'आह्वयति भवन्तं प्रभु' इत्यवादीत् । अहमपि झटिति पितुरुपवेशनगृहं गतोऽपश्यं पितरं दुर्मनायमानं सुखशायिकायां शयानम् । तात्कालिकेनाकारेण मूर्तिमतीव चिन्ता तस्यासूच्यत । नाहमज्ञासिप किमपि कारणमस्य । अनयैव चिन्तया पराभूतस्तातो न मामागतमप्यज्ञासीत् । समीपमुपसृत्य च सविनयमहमवादिषम्—तात किमहं भवद्भिराहूतः ? इति । पितात्ववादीत्—'आम्, कः ? व्रजेन्द्र ? आगच्छ' इति । ततः परममतः स्थितायां कस्यांचिच्चतुष्पदोपवेशिकायामुपवेष्टुं मामाज्ञापयदिङ्गितेन। अहमपि यथाज्ञमुपाविशमुपवेशिकायाम् । ततश्च तातो मन्दमन्दमेवं जगाद—'व्रजेन्द्र ! त्वयाद्य श्वशुरगृहं गन्तव्यम्, तेषां किलायं कुलाचारः, यत्कन्यया सह वरेण कुलदेवता पूजनीयेति, अद्य प्रातरेव सम्बधिनाऽऽमन्त्रण प्रैष्यत, त्वया मया वध्वाचैव गन्तव्यं भविष्यति, शकटद्वयमानेतुमाज्ञाप्यत पूर्वमेव, त्वमहं चैकेन शकटेन गमिष्याव, वधूस्तु मधुसिंहेन तत्पत्न्या च सहापरेण शकटेन गमिष्यति, त्वदुपयोगाय वस्त्राणि मदीयवस्त्रागारे सान्ति, अद्यैव गत्वा सन्नद्धो भव, मा विळम्ब कुरु, नास्त्यवकाशः,' इति ।

सद्य एव चाहमपि तदाज्ञां पालयितुं ततोऽगच्छम्। पितुर्वस्त्रागारे मदुपयोगाय निहितं नवीनं वस्त्रादिकमपश्यम्। दृष्ट्वा च किंचिद्विस्मितोऽभवम् । साधारणत प्रतिदिनं यादृशानि मयोपयुज्यन्ते ततोऽप्यल्पमूल्यानि सर्वाण्यासन् । साधारणं कृष्णदशमान्तरीयम्, साधारणमेव वस्त्रकवचम्, अत्यल्पमूल्यमेकमुत्तरीयम्, द्वे जङ्घावरणे, द्वे पादरक्षे चा सन् । सर्वमपि नवीनमेवादृश्यत । किमपि निश्चेतु नाशकम् । अचिन्तयं च मनस्येवम्—"किमस्य सर्वस्य कारणम्'विवाहस्त्वभूत्परं वध्वा दर्शनमपि नाभूत्।एतादृशेन महासंरम्भेण विवाहार्थमगच्छाम तत्र किमपि नासीत् । श्वश्रू श्वशुरावप्येताविति न मया

ऽज्ञायेताम् । न कापि विवाहस्य रीतिरासीत् । किमिदं ? विवाह उत क्रीडा ? सप्त दिनान्यतीतानि, एकदापि पत्न्या मुखमपि नावालोकयत । किमेषां गूढोऽभिप्रायः । किमपि न हृदयङ्गमं भवति । किञ्चिद मन्यत्, यावतः कालादहं स्मरामि मातैव मदर्थं नानाविधानि बहुमूल्यानि वस्त्राणि निर्मांति । स्वयं परिधापयति च स्वहस्तेन माम् । एवं स्थिते किमिदम् ! इद प्रथममेवाहं श्वशुरगृहान्यामि । महानानान्दस्य कालः । किमिदमेव वस्त्र मस्मिन्दिने मयोपयोज्यम् ? अस्तु, सर्वमपीदं भवतु ।" इति ।

यथा तथा वा भवतु, महामन्देहकलुषितेन मनसा धृतवस्त्रः पादरक्षे नियोज्य पादयोर्वस्त्रागारान्निरगाम् । उपवेशनगृहे च पितरमपि सन्नद्ध-मपश्यम् । किन्तु सोऽपि साधारणानि वस्त्रादीन्येव धारयन् दृष्टः । अह-मवादिषम्—'तर्ह्यहं गत्वा मातरं प्रणम्यागच्छामि' इति । पितावादीत्—"न हि, नास्त्यवकाशः, शकटे सज्जे, मया सहागच्छ" इति ।

यावदहमुपवेशनगृहान्निर्गच्छामि तावत्पितुर्मम दृष्टिर्मद्धस्तेऽपतत् । द्रुत-मेव सोऽवादीत्—'आनय, तत् हीरकाङ्गुलीयकम्, मह्यं देहि, नाधाङ्गुलीयक-धारणस्यावश्यकता' इति । अङ्गुलीयकं चेदं बहोः कालान्मद्धस्त एवासीत् । सद्य एव च निष्कास्याङ्गुल्या अङ्गुलीयकं पितुर्हस्तेऽदाम् । ततः परं पित्रा सहैवाहमपि शकटे समुपाविशम् । शकटारोहणसमये च गृहपृष्ठभागे द्वार-समीपस्थं शकटान्तरमपश्यम् । किन्तु नेदमस्मदीयमपि तु वैतनिकम् । इद-मेव मत्पत्न्यर्थं इति च निरचिनवम् । किमपि वा स्तु, उभावप्यावां शकटे-समुपविष्टावभूव । प्रतस्थे शकटोऽपि । किंचिदन्यदप्यत्रैव कथयामि पूर्वं यदा विवाहाय गतस्तदा दक्षिणाभिमुखं शकटोऽयासीत्, अद्य तूत्तराभिमुखं गच्छति । पाठकाः ! अपि जानीथ रहस्यम् !

इति प्रथमचक्रम् ।

---

# प्रथमभागे द्वितीयचक्रम् ।

## इन्द्रजालम् ।

यदा पुनश्शकटः प्रस्थितः स किल पंचघण्टावादनसमयः। प्रस्थानसमयात्प्रभृति शकट उत्तराभिमुखमेव याति । नगरं पृष्ठतः कृतम्, श्यामापणवीधोस्थसेतुप्रभृतयश्च क्रमेणातीताः । भगवान् सहस्रांशुरपि क्रमेणास्ताचलशिखरारोहणसन्नाहपरोऽभूत् । सान्ध्यं तमश्च गगनपथविहरणपरं क्रमाद् दृष्टिगोचरोऽभूत् । शकटश्च यथायथाऽग्रतः प्रयाति तथातथा निश्शब्दताप्यभिवर्धमानाऽऽसीत् । उभयतश्च पार्श्वयोर्विना घनं वनं न किंचिदन्यद्दृश्यत । क्वचित्क्वचिच्च कुटीरो यः कश्चिदावालोक्यत । कुटीरस्थानां च दीपानां प्रकाशाः कुटीर एव व्यलीयन्त । एतादृशस्य च वनस्य परतस्समतला भूमिरासीत् । यत्र किल गच्छन्नहं झिल्लिकानां कटुरवं शकटस्य घडघडाकारं च विना न किंचिदन्यदश्रौषम् । इयद्दूरमागतोऽस्मि, परं सह पित्रा न किंचिदवादिपम् । यदा पुनर्यं कंचिदर्थमुद्दिश्याहमपृच्छं तदा सङ्केतेनैवोत्तरयति स्म पिता मे । नगराद्बहिर्निर्गत्य च नाहन्तमवालोकयं शकटम्, यत्र मधुसिंहो मत्पत्नी चास्तामिति सम्भावयामि । अद्यत्वे च रात्रिस्समागता, अत एव नास्ति सम्भावनापि शकटदर्शनस्य । महदुत्कण्ठितोऽपि लज्जया न शकटमधिकृत्य तं किमपि पितरं प्रष्टुमशकम् । किं क्रियतां ! अवशस्तूष्णीमेव यथापुरं शकटे समुपविष्टोऽभूवम् । ततोऽपि तूष्णीक एवासीत् । स किलैकदापि परावृत्य नापश्यच्छकटन्तम् । स्थिरनिष्पन्दः परं किञ्चिच्चिन्तायुक्तश्चासीत् ।

सीन्तीस्थानपर्यन्तं तु मार्गः परिचितचर एव मे । तत्र किल मन्मित्रस्यैकस्योद्यानमासीत्, यत्राहं यदा कदाचिन्मित्रस्यानुरोधेन गच्छन्नासम् । परन्तु ततः परं मनः कुत्र यातीति न निश्चेतुं समर्थोऽभवम् । कदाचिच्च मनसि किल शङ्कादरङ्ग्यारम्परी समुदगात्, भयेन च कम्पितमिवाभूच्चेतः,

परं तातस्यावलोकनादेव शंकापिशाचिकास्सर्वा अप्यस्तमगुः । प्रसन्नमिव चाभूच्चेतः । एवं किल समालोचयम् "अहो ! मम विभ्रमः ! तातेन सह यामि, यत्र कुत्र वा स मां नयतु, किमत्र भयस्थानम् ?" इति ।

अथास्मि किंचिदिव शान्तहृदयः । मृदुसुगन्धिना शीतळेन वातपोतेन शरीरसंस्पर्शिना बलादिवापहृतहृदयो न्यमीलयं लोचने । कियन्तं कालमहमस्वाप्समिति तु नाहमिदानीं वक्तुं शक्नोमि । किन्तु केनचिज्झणझणात्कारेण हठात्प्रतिबोधितस्ससम्भ्रममुदतिष्ठम् । शकटाद्बहिश्शिरः प्रसार्य भीषणगाढान्धतमसमयं वनमपश्यम् । रात्रिरपि मन्ये यामद्वयमत्यक्रामत् । कियद्दूरमागतोऽस्मि कुत्रागतोऽस्मि, किमप्यहं नाज्ञासिषम् । तातमपि स्थिरगम्भीरमूर्तिं यथापूर्वमेवोपविष्टमेवालोकयम् । एतावत्येव च समये शकटोऽपि कस्यचिज्जीर्णतरस्य खण्डगृहस्य समीपं प्राप्य निरुद्धगतिरभूत् । न जानामि किमिति दूरादेव तस्य खण्डगृहस्यावलोकनमात्रेणैव मनसि भयस्य सञ्चारोऽभूत् । शकटनिरोधानुपदमेव तातादेशाज्झटित्यवातरं शकटात् । अन्धकारावृतत्वाच्च तस्य देशस्य शकटस्थं दर्पणदीपं गृहीतुं शाकटिकमाज्ञापयत्तातः । गृहीतदर्पणदीपे शाकटिके ऽग्रतो गच्छति पश्चादेव तमनुससार तातः । अहमपि च पृष्ठतस्तातस्यागच्छम् । दर्पणदीपालोके च यावच्छक्यं तस्य खण्डगृहस्य पुरोभागमवालोकयम् । खण्डगृहस्यावलोकनेन च पूर्वमस्य नवीनतादशायामतिसुन्दरबहुमूल्यसर्वातिशायिगृहता सुखेनैव हृदयङ्गमाभूत् । कालस्य विचित्रया गत्या तस्यैतादृशीं दशामवलोक्यापूर्व एव कश्चिद्भावो मनसि समुदैत् । द्वारस्याग्रभाग एव चतुरश्रा काचनवेदिकासीत्, यस्याः किल सैतोरिवाधोरन्ध्रान्वितो भाग आसीत् । वेदिकायाश्चाधोभागे काचन शुष्का कुल्यासीत् । ततश्चाग्रत एवातिविशालोन्नतं प्रधानद्वारमासीत् । यत्र किल पृथुलल्लोहशलाकामयं कवाटद्वयमासीत् । आसीच्च द्वारं पिहितं कवाटाभ्याम् । किंचिदुन्नमितमुखश्च खण्डगृहस्योपरिस्थितान्कवाटशून्यानतिविपुलान् गवाक्षानवालोकयम् । प्राथमिकस्य शिरोगृहस्योपर्यपि चन्द्रशालास्ति नवेति तु नाज्ञायतान्धकारेण । सर्वतश्च घनं वनमभूत् । खण्डगृहस्य भित्त्यादिष्वपि क्वचित्क्वचित्तस्याः प्ररूढास्समदृश्यन्त ।

ततश्च तातः किंचिदिवाग्रतो गत्वा तस्यामेव लोहशलाकामय्यां कवाटिकायां पादेन प्राहरत् । प्रहारक्षण एव च झणझणात्कारः कश्चिदुत्पन्नो व्यलीयत दिशासु । कवाटे चान्तर्दत्तार्गळे अभूताम् । अत एव च कवाट-प्रहरणादुपरम्य किंचिदुच्चैस्स्वरेणाह्वयत्तातः—'राय ! राय !' इति । अलब्धे चोत्तरे पुनराह्वयत्—'राय ! राय !' । प्रतिशब्दश्चाश्रूयत—'कः ? राय ? आगतोऽस्मि !' इति ।

कियतः कालादनन्तरं सझणझणात्कारं कवाटे समुद्घाटिते अभूताम् । करगृहीतदीपश्च कश्चित्पृथुगात्रो मल्लस्समदृश्यत । बहिश्शाकटिकहस्त-स्थितस्य दर्पणदीपस्यान्तर्मल्लहस्तस्थस्य दीपस्य च प्रकाशे तस्य विपुलोन्नतं गात्रम्, कण्ठस्थं च यज्ञोपवीतम्, भट्टाचार्योचितं च वस्त्रं, श्मश्रुलं च मुखम्, स्फुटमदृश्यत । मल्लस्सस्मितमवादीत्—"आगच्छत ! आगच्छत ! कुत इयान्विलम्बः ? मया तु नेतःपरं भवन्तस्समायास्यन्तीत्यालोच्यत, आगच्छ ! आगच्छ !" इति । सादरश्चान्तः प्रवेशायाभ्यर्थयामास । तातश्च शाकटि-कं शकटनयनमाज्ञापयत् । सहैव घडघडात्कारेण शकटमयासीत् । द्वारं च सझणझणात्कारं व्यधीयत कपाटाभ्याम् ।

अन्तःप्रविश्याग्रत एव कञ्चनातिविशालतमं भूभागमपश्यम् । यत्र च स्वत एवोत्पन्नानां स्तम्भानां वीथिका काचिदासीत् । झिल्लिकादिरुतस्यापि नासीत्तत्राभावः । ततः परश्चाङ्गणं किंचिददृश्यत । पार्श्वद्वये च तस्य विपुलतमे सोपानपङ्क्ती आस्ताम् । दक्षिणपार्श्वस्थश्च सोपानैरारुहाम वयम् । विशालतमे च कुत्रचिच्छाले प्राविशाम । वन्दनप्रतिवन्दनानि च विशेषतस्तत्राभूवन् । तातो मामेवमवादीत्—"अयमेव तव श्वशुरः, प्रणमैनं !" इति । तत्क्षण-विहितप्रणामं च मामाशीर्भिरन्वगृह्णात् । एकतश्च कोणे शालस्य कुत्रचिच्चतुष्प-दायां लेखनपीठिकायां निहितो दर्पणदीपो भाविनीमिव मदीयां दशां प्रकटय-न्मन्दमन्दं प्रचकाशे । यस्य चालोके द्वित्रपादान्तरितभागस्थमपि वस्तु सुदूर-निहितमिव कृच्छ्रेणावगोचरनीयमासीत् । मशकमक्षिकादीनामपि नासी-न्न्यूनता । भित्तिस्थेषु च द्वित्रेषु कोष्ठकेषु जीर्णानां पुरातनानां पत्राणां राण्डा-

स्समदृश्यन्त । शालमध्यभागे च कुत्रचितटल्याधारदारुलम्बिनि लोहवलये जीर्णतमानां तूलिकोपधानादीनां बन्धनमेकं लम्बमानमदृश्यत । शालश्चायं यद्यपि विपुलतमोऽथापि दुर्गन्धपूर्ण आसीत् । नासिका च यत्र स्वयमेव सङ्कुचन्ती कृच्छ्रादिव निश्वासमार्गमदात् । दक्षिणे पार्श्वे च किञ्चिदास्तरणमदृश्यत, यत्र सर्वेऽपि वयं समुपाविशाम ।

पित्रा खलूक्तम्—"अयमेव तव श्वशुरः" इति । अनेन च शब्देन शङ्काकलङ्कितमभूच्चेतः । विवाहदिवसे किल कश्चिदन्य एव पुरुषः कार्यं कुर्वन्नास्त, स हि गौरवर्णोऽन्यादृशाकारश्चासीत् ।

अचिन्तयं चैवमहम्—"कदाचित्तस्मिन् दिने कार्यपारवश्येन मया श्वशुरः सम्यङ्न दृष्टस्स्यात् । पुनस्तदालोकनस्य प्रसक्तिस्तु नैवासीत् । अतश्चायमेव मम श्वशुरस्स्यात् । यदा हि तात एव वदति तर्हि कोऽत्र सन्देहः !" इति ।

एतदन्यच्च चिन्तयत्येव गृहस्यानुपमां शोभामालोकयति मयि काचिददृष्टपूर्वा रमणी रजतपट्टबद्धं किञ्चिज्जलधूम्रपानयन्त्रं हस्तेन गृह्णन्ती समागत्य दत्वा च श्वशुरस्य हस्ते तत्प्रतिन्यवर्तत यथागतम् । श्वशुरश्च सबहुमानसमुदाचारं तदेव यन्त्रं तातस्य हस्तेऽदात् । तातश्चैकदेव पीत्वागादीत्—"पानीयमत्र न नवीनं पूरितं" इति । श्रुत्वैव च श्वशुरोऽपि गृहीत्वा जलधूम्रपानयन्त्रं बहिर्निरगाच्छालात् । नाहं जानामि किमिति तातोऽपि तमेवानुबहिर्निरगात् । एकाकी चाहमासं तत्र ।

यथायथा व्यतीताय समयस्तथातथा ऽऽवेगोऽपि मम वर्धमान आसीत् । चतुर्दिशं सन्देह एव केवलं मूर्तस्समदृश्यत । विवाहे सन्देहः ! पत्न्यां सन्देहः ! स्थाने, काले, श्वशुरे, श्वशुरगृहे च सन्देहः ! किमिति विमज्य, सर्वत्रैव सन्देहो म आसीत् । कियदधिकमुच्यताम्, पाठकाः ! स्वप्ननां पित्रर्यपि मे सन्देह उदभूत् ! तस्मिन् किल दिने विवाहोऽस्मद्गृहदक्षिणदिशायां नगरे धनवतो गृह आसीत् । अद्य तु वयमुत्तरस्यामागतास्स्मः ।

किमिदं स्थानम्, तदपि न जानामि । न जानामि किमिति मनस्येतादृशी व्याकुलता समजायताद्येति ।

यदा किलाहमेतदन्यच्च स्थिरचित्तश्चिन्तयन्नासम्, तदा केषाञ्चित्सल्लपतां फुसफुसात्कारः कर्णगोचरोऽभूत् । किन्तु कीदृशस्सल्लाप इति नाज्ञायत । पुनरप्यहं तदेकमना विवृत्य कर्णौ श्रोतुमारभम् । पूर्वगवक्षादायात्ययं शब्द इति चाज्ञासिषम् । महानभूत्सन्देहः । किमिदं रहस्यम् ? उत्थाय चाहं मन्दमन्दं गवाक्षनिकटमगाम् । हन्त ! हन्त ! यमदूतनिभाभ्यां द्वाभ्यां भोजपुरप्रान्तीयाभ्यां दण्डधराभ्यां सह सल्लपति तातः । तत्रैकस्य दण्डधरस्य हस्ते समस्ति दीपः । भयानके तत्रान्धकारे अञ्जनाचलनिभयोर्द्वयोस्तयोः पापिनोर्दण्डधरयोराकृतिस्स्वतो भयावहापि द्विगुणमिव मे भयमजीजनत् । जडीकृतदेहश्चाहं भयेन कम्पमानोऽपि किञ्चिदिव स्थिरीभूय निश्शब्दमवस्थितो गवाक्षरन्ध्रे कर्णं निधाय तेषामालापमश्रौषम् ।

तातः—"तर्हि युवाभ्यामङ्गयकारि किल ?"

दण्डधरः—"नहि नहि—प्रभो ! किं शतस्यैव रूप्याणामियन्महत्कार्यं कुर्वः, कार्यस्य सदृशं वेतनं ददत ।"

तातः—"जानाम्यहम्, अल्पेन युवां कार्यं न करिष्यतः । अस्तु, शतं शतं युवां प्रत्येकं गृह्णीतम् । किमिदानीमपि वा तुष्यथः ?"

अन्यो दण्डधरः—"शृण्वन्तु प्रभवः । पञ्चशतं रूप्याण्यावाभ्यां दीयन्ताम् । सर्वमपि कार्यं सम्पूर्णं भविष्यति । परन्त्वत्र हठात्कारः मात्रयापि माऽस्तु, अन्यथा त्वेकदैव सर्वे वयं मृता भविष्यामः ।"

तातः—"युवाभ्यां पञ्चशतम्, रायाय पञ्चशतम्, गृहाधिपाय पञ्चशतं च यदि दास्यामि किमवशिष्येत मद्यम् ?" । द्वावपि दण्डधरावब्रूताम्—तर्हि किं भविष्यति ? नमोऽस्तु प्रभवे, इति । उक्त्वा चैवमुभावपि गन्तुं सन्नद्धावभूताम् । तदा तातस्त्वरितमवादीत्—'एवमस्तु, आकर्णयतमाकर्णयतम् !

किमित्येत्थं शैघ्र्यं क्रियते ' अस्तु, तथैव दास्यामि । किन्तु पश्यतम् । कोलाहलो मास्तु । अन्यथा कष्ट स्यात । अथैतानि शत रूप्याणि गृह्णन्ताम् ' इति । एतावदुक्त्वा पञ्चाशद्रौप्यखण्डपत्रमेकैकमेकैकस्य हस्ते न्यधात् । उभावपि तौ सुतरामेव तुष्टावभूताम् । यदा तु तौ गन्तुमुदयुञ्जन्तौ तदा तातस्तौ पुनराहूयावदत्—"शृणुत शृणुत । पाश्चात्यवनेऽह स्थास्यामि, साङ्केतिकशब्दश्रवणोत्तरक्षण एव झटिति युवाभ्यामागन्तव्यम्" । 'तथैवास्तु, सुतरामेव सम्यक्' इत्युक्त्वा तावप्यगच्छताम् । तातोऽपि ततो' ऽगच्छत् । अहमपि सभयकम्पमेवागत्याऽऽस्तरणे समुपाविशम् । किन्तु सन्देहभयाभ्यामभिभूतस्य स्वेदक्लिन्नमभून्मे शरीरम् ।

अहमचिन्तयम् । 'किमय स्वप्न ' किमयमेव मम प्रिय पिता - हन्त ! कीदृश नृशस कर्म ! कीदृशीय मन्त्रणा !! किमर्थेय यन्त्ररचना !!!- सद्य एव चाह हतबुद्धिर्मृतप्रायश्चाभूवम् । चतुर्दिशमन्धतमोऽद्दश्यत । अक' म्पत च हृदयम् । उपवेशनासमर्थश्चाऽऽस्तरणे समविशम् । यद्यपि नाह सर्वथैव निश्चेतनोऽभवम्, तथापि बाह्यानीन्द्रियाणि मे कस्मिन्नपि कर्मण्ययोग्यान्यासन् ।

कियन्त कालमस्यामवस्थायामहमासमिति न जानामि । क्रमेण चेतना समजायत, सुतेग्थित इव चाभूवम् । लोचने तु तदानीमपि नोद्मीमिलनाम् । एतानि च वाक्यानि कर्णकुहरमविशन्—"अहो ! बालोऽय मनभिज्ञ क्लेशस्य ! कदापि नानेनान्वभूयत कष्टम् । एतावद्दूरमागतश्शकटारूढ , अतएव निद्रयापहृतो शेत । मन्ये तपस्वी श्रान्तोऽयमिति । राय ! एकदा शब्दापयतु नाम ! महान्कालोऽतीत , भोज्यमपि सर्वममूर्च्छीतम् ।" इति । अय च शब्दस्तस्यैव मल्लस्य, य किल हस्तगृहीतदीप कवाटोद्घाटनायागतोऽभूत् । किमित्येवमुच्यत, मच्छ्वशुरस्येति वक्तव्यम् ।

तातस्तु प्रेमगद्गदेन स्वरेण—"व्रजेन्द्र ! व्रजेन्द्र !! शरीरन्तु सुस्थ किल' किमित्येव शेषे ' उत्तिष्ठ, यत्किंचिद्भु यताम्, पश्य तव श्वशुर कियत कालाच्छब्दापयति, उत्तिष्ठोत्तिष्ठ, मनस्तु सुस्थ किल ' ' इत्यवदत् । "अथकि" इति वदन्ने

वाहमुदतिष्ठम् । को वा तदानीं बुभुक्षति किमपि वा। सन्देहभयाभ्यां क्षमकृर्ति गतस्तदासम् । एकदा चापवार्य पितरमद्राक्षम् । हन्त ? कीदृशी भयावहा मूर्तिः । रक्ते कुटिलभ्रूणी च लोचने समदृश्येताम् । भयानकं कार्यं कर्तुमुद्युक्त इवादृश्यत ।

श्वशुरोऽवादीत्—"आगच्छ, स्त्रियः किल भवन्तं द्रष्टुमुत्सुका बहोः कालाद्वयाकुला भवन्ति । त्वं हि सुप्तोऽभूरिति नाहं किमप्यब्रुवम् । पाणिपादं प्रक्षाल्य विशोध्य च वदनमुपयुङ्क्ष्व यावद्रुचि यत्किञ्चित् । विश्रमस्व च ततः ।" इति । अहमप्यप्रतिब्रुवाण एव किमपि सहैव तेन गन्तुमास्तरणादुदतिष्ठम् ।

प्राविशाव च वनितागारम् । इदमपि सभागृहमिवाभूत् । किन्तु अन्धे तमसि न सम्यक्सर्वमवलोकितुमशकम् । श्वशुरस्य हस्त एक एव दीप आसीत् अस्यैवालोके यावत्साध्यं गमनागमनार्थं मार्गं परमवालोकयम् अङ्गणात्परतः कुत्रचिन्महति गृह आवामगच्छाव । तत्र च कोष्ठके कुत्रचिदेको दीपो मन्दप्रकाश आसीत् । पटलं चाधः पतनाय कृतसन्नाहमिवादृश्यत । सुधाया नाममात्रमपि नासीत् । इष्टकाश्च सर्वा लवणोद्गिरणात्क्रमेण चूर्णीभूय पतमाना आसन् । विचित्रः कश्चन गन्धस्तत्र प्रवहन्नासीत् ।

किमनेन । तदपि गृहमुल्लङ्घ्य वामभागस्थं गृहं प्राविशाव । इदं च गृहं न नितरामेव महन्नापि वाल्पम् । गृहे च तिस्रः स्त्रिय उपविष्टा आसन् । तत्रैका प्रौढाथापि किञ्चिल्लज्जावती, अन्ये च द्वे वृद्धे । अल्पीयस्येव काले गृहं तत्कालत्रयेनापश्यम् । गृहस्य वामभागे च कुत्रचिद्बहुसङ्ख्यानि स्थालानि चषकान्यन्यानि च पात्राणि निहितान्यासन् । अल्पीयस्याश्चैकस्याः त्रिपादपीठिकाया उपरि सीमकलितलोहपत्रनिर्मिता मञ्जूषैका निहिता समदृश्यत् । समीप एव तस्याः कुत्रचन वस्त्रनिधानदारुणि घण्टातकानि, कूर्मासकाः, चेलानि च निहितान्यासन् । तत्समीपे च मञ्जूषा काचिदासीत् । दक्षिणतश्च किञ्चिदास्तरणमदृश्यत सोपधानकम् । भित्तिषु च सर्वत्र

चित्रपत्राणि सयोजितान्यासन् । पटलाधारदारुस्थवल्याल्म्बमान शिक्यमेकमासीत्, यत्र मृत्कलश एको निहितोऽभूत । गृहमध्यभागे च कुत्रचित्तात्र कानिचन भक्ष्याण्यासन् । तत्समीप एव रल्लकम्बल एक आस्तृत आसीत् । श्वशुरस्तु मा रल्लकम्बलपर्यन्ते नीत्वा हस्ते रूप्यचतुष्टय च दत्वावादीत् "पश्य येय जनन्या मम पार्श्वे समुपविष्टा साते श्वश्रू । इमानि रूप्याण्युपहारीकृत्य पादयो प्रणम ।" इति । अहन्तु क्षण भ्रान्त इवातिष्ठम् । यथसोऽवदत्तत्तदहमप्यकरवम् । रूप्याणि तानि समर्प्य प्राणमम् ।श्वश्रूरप्याशिषोऽवादीत् , पर न जाने किमिति । किमधिकेन, तयोरपि वृद्धयो प्रणाम कर्तव्य एवासीत् । ताभ्यान्तूच्चैस्वरेणैवाशिषो दत्ता । श्वशुरोऽवादीत् "कथय मात ! कीदृशो जामाता ? रूपेण खलु कार्तिकेय !" एतावत्येव अन्या जरठाब्रवीत् "गणेश इव च गुणै " इति । ततश्चास्मिन् विषये विकराल महद्धास्यमभूत् । यद्यापि मे सन्मुख इव ।

श्वशुरोऽब्रवीत् "मातस्त्व जामातर भोजय पायय च, अह तु रायस्य परिचर्यायातस्मि ।" इति । एतावदुक्त्वा च मत्समिमुख परावृत्यावादीत् "तर्हि भवान् भुनक्तु गच्छाम्यहम्, मा कुर्वत्र लज्जाम्, इद किल भवदीयमेव गृहम्" इति । एतावदुक्त्वा चागच्छत् ।

एतावत्पर्यन्त तु नाह भक्ष्ये हस्तमप्यदाम् । निर्व्यापार एवासम् । यदैव श्वशुरो बहिर्निरगात् श्वश्रूरपि मे तदैवापसार्य मुखप्रावरण मद्धस्तार निकटे मम समुपाविशत् । हस्तेन च मे हस्त परिगृह्याब्रवीत्—"भुङ्क्ष्व वत्स भुङ्क्ष्व । कस्या कृते करोषि लज्जाम् । किं वयमन्या काश्चित्स्म त्व किन्न मे प्रियो जामाता ! त्वयि मे कियती प्रातिरीति किं त्व जानीषे । अहो महत्कष्टमभूत् ! उम् वत्स ! किमय भोजनस्य समय ? किं तवैव बहिरसमर्चीनाया शय्याया शयन युज्यते ? भुज्यताम्, भुक्तपीतश्शेष्व, चतुष्पदमञ्चमसन्नद्धोऽस्मि । एतावद्दूर शार्कग्नागमनात्, कष्टम् ! अस्य वदन शुष्कमासीत् । भुङ्क्ष्व वत्स यत्किञ्चिद्भुङ्क्ष्व ।" इति ।

महदिद कष्टमापतितम् ! यथा यथैते निर्वघ्नन्ति भुङ्क्ष्व भुङ्क्ष्वेति तथा तथा भय मेऽभिवर्धते । किनप्यब्रुवाणस्तूष्णीमुपविष्टोऽभूवम् । आकाशपाताले एकीकर्तुमारभम् , एतेषामादर च द्रष्टुम् । एतावत्येव समये श्वश्रूर्मे किमपि विस्मृत स्मृतवतीवाश्चर्येण झटित्यूचे—"किमिद ! एतावतापि गोपिका दुग्ध न ददाति । मातस्त्वमेन भोजय । तेभ्योऽह निवेदयामि नैतावतापि गोपिका दुग्धमानयवतीति ।" इति एवमुक्त्वा श्वशूरगात् ।

मम वृद्धश्वश्रूरवोचत् "किमिद ! जामातुर्मम नैतावतापि ह्रीरपैत् । भुङ्क्ष्व, हस्त प्रसारय, अल लज्जया, नेत परमधिक कष्ट देहि ।" इति ।

किं कियताम्, इच्छा तु नैव जायते भोक्तुम्, तस्या वार्तापि सह्या न भवति । महति निर्बन्धे जाते कमप्यन्यमुपायमपश्यन्मन्दमेव मब्रुवम्—"नास्ति मे क्षुधा ।" इति ।

किन्तु—कश्शृणोति मे वचनम् ? पूर्वापेक्षयाप्यधिक निर्बद्धुमार भन्त । ततश्च ता बहुधा तर्कवितर्कादिकरणानन्तरमित्थ निरचिन्वन्त—"यदि मृणा स्वयमागत्य भोजयेत्तदायम्भुञ्ज्या" दिति ।

पाठका ! किं 'मृणा' इति नामान्यदापि कदाचिद्भवद्भिश्श्रुतम् ? एतेषा किल वाक्यैर्निश्चिनोमि 'मृणा' इति मत्पत्न्या एव नाम्न एकदेश इति । पर मत्पत्न्या पूर्णं नाम 'मृण्मयी' ति वा, 'मृणालिनी' ति वा स्यादिति नाद्यापि प्रकटीभवति । भवतु यत्किञ्चिदपि वा । ममत्वयमेव लाभ । सप्तदिवसेभ्यो यामहमन्विष्यामि, यस्याश्च कृते सर्वमिदमसहिष्ट, सा किलाद्य समीपमुपसर्प्स्यति क्षणान्तरे । यथाह पूर्वमास तथैव च तदापि ।

वृद्धा पुनरवादीत्—"ओ हीरामात ! गच्छ, मृणामानय, न चेन्नाय भोक्ष्यति ।" इति । "अस्तु ग च्छामि" इति वदन्त्येवागाद्धीरामाता । हीराया किल मातैतावत्पर्यन्त तूष्णीमेवोपविष्टासीत् । अतएव नाहमेता सम्यगालोकयम् । अथ तु गच्छन्त्या दीपालोके मुखमपश्यम्, सैवेयम्, या पूर्वं श्वशुराय जलघटमानयन्त्रप्रदानायागताभूत् । वृद्धावादीत् । "वत्स मस ेव दिवसान्वियान्भे ा ? किमेत पर मृणा विना भोक्ष्यस्येव न !

भवतु, सम्यगेवेदम् , इदमेव हि काङ्क्ष्यते । इतस्त्व मृणा स्वर्णदृशा लोचनेन पश्य, प्रधानमहिषीं च कुरु ।" इति ।

एतावत्येव समये बहिर्झणझणात्कारोऽश्रूयत । वृद्धा च तदैव बहिर्निरगात् । बहिरेव चाय शब्दोऽश्रूयत—"मृणे ! गच्छ, त्वा विना स भोजनमपि न करोति । गच्छ निजहस्तेन भोजय ।" इति । यदा किलेदमेवाहमालोचयन्नासम् , तदैव कयाचन सुन्दर्या दर्शनमदीयत द्वारे ।

ततश्च सापसार्य मुखप्रावरणमेकदैवागत्य मम पार्श्वे समुपाविशत् । अह तु किमपि वक्तुमशक्त एव मनस्यालोचयम्—"किमियमेव मे सप्तदिवसपूर्वविवाहिता पत्नी ? हन्तहन्त ! कीदृशोऽय व्यापार ! कीदृश चेद पश्यतोहरत्वम् ! किञ्चेद भयानक कर्म !" इति एकरूपेण तदीय मुखमालोकयन्नेवासम् । सा किल सर्वाङ्गसुन्दरी, गौरवर्णा, सुन्दरे कर्णान्तविश्रान्ते हरिणशावकस्येव च तस्याश्चञ्चले लोचने, मदनचापविजयिन्यावीषद्वक्रे च भ्रुवौ, चम्पककुसुमशोभना च नासा , निम्बफलगर्वसर्वस्वहारिणौ चोष्ठौ, मुक्तानामिव मनोहरा दन्तानामावलि , शारदाष्टमीचन्द्रशकलानुकारि च फाल चासीत् ।

सभयविस्मयमहन्तदीय वदनचन्द्रमसमवलोकयन्नासम् । सुन्दर्या ओष्ठौ किञ्चित्समकम्पेताम् । क्रमेण चास्मयत मुग्धमधुर सहैव कटाक्षपातेन। वीणाविजयिना स्वरेणावादीच्च—"किमित्येवमवलोकयसि माम् ।" इति अहन्तु तदापि तूष्णीम्भूत एवासम् । अतएव च पुनरपि झङ्कृतमञ्जीराया —"किमिति पातयसि दृष्टिं मयि ।" इति । अहन्तु किञ्चिदिवावष्टभ्य धैर्यं सविस्मयमवदम्—"त्वामह न जानामि, का त्वम् ?" इति । पुनस्त्या त्वेवमुक्तम्—"मा त्व न जानीषे ? हन्त ! कुत्र गच्छामि, किमालपामि, किं वा करोमि ? अह किल तव प्रियास्मि ।" इति । अहमब्रवम्—"पश्य छल मा कुरु, सत्य भण, कासि त्वम् ? स्त्रिय किल स्वभावतो दयावत्यो भवन्ति, माकलङ्कयात्मीया जातिम् , ब्रूहि दयया, कुत्राहमागतोऽस्मि?

यत्राहं जाले रहस्यमये बद्धोऽस्मि ? किमयं स्वप्नः, उत सत्यमेव, किमपि न ज्ञातुं प्रभवामि ।" इति । रमण्या चोक्तम्—"त्वजोन्मत्ततामितः, बहुभुत् ! भोक्ष्यसि न वा, वद ? हरे राम ! कीदृशोऽयं पुरुषः, आत्मीयां पत्नीमपि ज्ञातुं न शक्नोति !" इति । एतावदुक्त्वा च गातुमारभत ।

"दृष्टश्रुतमपि को विस्मरति ।

॥ द्विपदी ॥

अयमीदृश इति मन्ये विधिना मम मृतिरिह विहितेति ।
नाहमजानां हृदि ते कपटः श्यामेयान्भवितेति ॥
दत्त्वाशां वितनोषि निराशां लज्जा कुत्र गता ते ।
प्रथमनिरीक्षण एव विलीनं मम हृद्भृङ्गशतं ते ॥
त्वयि विरहाम्बुधिमग्नामपि मां मुक्त्वा यातेऽकरुणम् ।
कुत्र नु यामि वदामि च किमहं को भविता मे शरणम् ॥
जीर्णं गात्रं शीर्णं हृदयं भवति शिरश्च विदीर्णम् ।
आगच्छ प्रिय मास्तु विलम्बः कण्ठे लग मे तूर्णम् ॥"

अहो कीदृशमिदं सुन्दरम् गीतम् ! न मयैतादृशं गीतमितःपूर्वं कदापि श्रुतम् ! सा हि सुन्दरी हस्तेन मे हस्तं परिगृह्य सप्रेमभरमगासीत् । भीतचकितश्चाहं मन्त्रमुग्ध इवासम् । सा च कमलनयना भक्ष्यमेकैकशयेन मे वदने निधातुमारभत । अहमपि नापारयं प्रतिषेद्धुम् । स्थालस्थितानि सर्वाण्यपि भक्ष्याण्यभक्षयम् । सा च हरिणेक्षणा भृशन्तुष्टावादीत्—"पश्ये-दानीमहं कियत्प्रसन्नास्मि ? इदमेवाकांक्ष्यत् । किं जलधूमं पिपाससि ?" इति । अहं तु—"नास्ति मेऽभ्यासः" इत्यवदम् । तदा सा पुनरप्यवादीत्—"तर्हीतः किं चिकीर्षसि" इति ।

अहं च—"किं मदीयमेकं वचनमङ्गीकरिष्यामि ? यद्यदहं प्रक्ष्यामि तस्य तस्योत्तरं वादिष्यामि !" इत्यवदम् । साब्रवीत्—"किं तत् ! त्वमसि मे भर्ता, अहं तव प्रिया ! यत्त्वं प्रक्ष्यसि किमित्यहं तन्न वदि-

ष्यामि ?" इति । ततश्च पुनरहमवोचम्—"तर्हि का त्वमसि ? किमिदम् हृदयं मम किमित्येवं विह्वलीभवति । ओः, किमिदम् ! किमित्यात्मा मे विभ्रमति ! शिरश्च किमिति घूर्णते ? स्पृशामि ते चरणौ, कथय किमहं भोजितोऽस्मि त्वया ? कथय कथय का त्वमसि ?" इति । तया तु सोच्चैर्हासमुक्तम् ? "हहह हाः अहम् ? काहम् ? मां किं न जानीषे ? अहमस्मि तव सर्वस्वभूता । अहमस्मि नौस्तव संसारसागरस्य । पुनरपि मिलिष्यामि ! यदा स्वमात्मन्यवस्थितो भविष्यसि तदा मां प्रत्यभिज्ञास्यसि । अहमस्मि त्वदीया—त्वदीयाया अपि त्वदीयास्मि !" इति । ततः परन्तु किमपि श्रोतुमहं नाशकम् । किमारब्धम्, किञ्चाभूदिति नाहमपारयं ज्ञातुम् ।

क्रमेण च शिथिलतामगुस्सर्वाण्यङ्गानि । अन्ततश्चाहमवष्टभ्य धैर्यमुच्चैरुदघुषम्—"तात कुत्रासि !" इति । इतःपरं च किमभूदिति न स्मरामि, मूर्छितः पतितोऽस्मि धरण्याम् ।

इति प्रथमभागे द्वितीयं चक्रम् ।

---

## प्रथमभागे तृतीयं चक्रम् ।

---

### कारागृहवासः ।

कियन्तं कालं निश्चेतन आसमिति नाहं जानामि । यदा पुनश्चेतनाभूत्, अज्ञासिषं तदा, 'सर्वाङ्गीणमस्ति शैथिल्यम् । शिरस्तु नोत्थापयितुं शक्यते । शरीरे नास्ति वस्त्रकवचम् । पादयोश्च न स्तो जङ्घावरणे । केवलमेकमेव वस्त्रं कटिबद्धं वर्तते' इति । इदं चाज्ञानाम्—"नास्मि शय्यायाम्, किन्तु तृणेषु निविष्टोऽस्मि, तृणमयमेव च शिरोनिधानमपि", इति । उन्मील्य लोचने समपश्यम्, घोरतमन्तमोऽदृश्यत । महदेव भयं

समजायत, कुत्राहमस्मि, कथमत्रागतोऽस्मि, इत्येतदालोच्यारुदन् । अश्रु च धारया पतितुमारभत । प्रालपं चैवमहम्—"केनेयमीदृशी मेऽक्रियत दशा ? हा तात ! किं भवानेव मे जन्पदः ? किमिदमेव पितुः कर्तव्यम् ? मातः ! त्वं कुत्रासि ? एतावता हि कालेन न मां त्वं क्षणमात्रमपि दृष्टय-गोचरे पर्यत्यजः, अद्य कुत्र गतासि ? पश्य त्वदीयस्य भजेन्द्रस्य कीदृशी दशेति ? एतावन्तं कालमहं कस्मिन् भ्रमजाले बद्ध आसम् ? किमेतावतः कालस्यानन्तरं मदीयं जीवनरहस्यमुद्घाटितमभूत्, हा संसार ! कस्यास्ति शक्तिस्त्वदीयां मायां ज्ञातुम् ? आम्, एवमिदम्, अवश्यमेवेदमेवम् ! धनम्, ऐश्वर्यम्, बन्धवः, मित्राणि, पत्नी, माता, पिता, इत्यादिकं सर्वम-प्यसत्यमेव ; अद्याहमवागच्छम्, संसारेऽस्मिन् नास्ति कोऽपि मदीय इति । अद्यैव च सर्वमिदं स्मृतिपथमारोहति—'तस्यां पापपुर्यां मातापित्रोर्गुप्तः परामर्शः, तस्यैव परामर्शस्य फलभूतो विवाहस्य बाह्यसमारोहः, चिन्तायुक्त-स्य पितुरवलोकनम्, पित्रा सहात्र नरके समागमनम्, पितुर्दण्डधराभ्यां सल्लापः, तस्या धूर्ताया वञ्चकता", इत्यादिकम् । इदं च सर्वमालोचयन्नहं निश्चिनोमि, एते खलु मां मारयितुमिच्छन्तीति । किन्तु कमहमपराधमकरवमिति न जानामि । हे सर्वात्मन् भगवन् ! तव तु किमप्यविदितं नास्ति खलु ! केन पापेनेयं मे दशाभूत् । प्राणाः खलु निर्जिगमिषन्ति, दयामय ! दयां कुरु, उद्धरैनमापद एतस्याः ! इति ।

यदाहमेतदन्यच्च चिन्तयन् सशब्दं रुदंश्चासं तदैव पटलाधार-दार्वधोभागे किञ्चिदिव प्रकाशोऽदृश्यत । सम्यगवलोक्य च पटलाधारदार्व-धोभागस्थरन्ध्रमार्गेण प्रविशतस्सूर्यकिरणस्यायं प्रकाश इति निरचिनवम् । क्षणान्तरे च स्पष्टमेवार्यम्णो मयूखा अन्तःप्रविष्टास्समदृश्यन्त । ततश्च चतुर्दिक्ष्वेव भित्तिस्थान् रन्ध्रानपश्यम् । क्रमेण च तस्य गृहस्याकार-स्पष्टं दृष्टिगोचरोऽभूत् । गृहं चेदं पञ्चहस्तदीर्घं हस्तत्रयविशालं चासीत् । एकोऽपि गवाक्षस्तत्र नाभूत् । केवलमेकमेव द्वारमतिविशालोन्नतमायसेन कवाटेनाऽऽयसशृङ्खलानिबद्धेन पिहितमासीत् । भित्त्यादिकं च सर्वं दृढ-

मासीत् । एकस्यैव पुरुषस्य निवासयोग्यमभूत्तद्गृहम् । तृणमयमास्तरणं विना नासीत्तत्र किञ्चिदपि । अहं च सावधानं चतुर्दिशं सम्यगन्विष्यापि बहिर्निर्गमनमार्गमपश्यन् हताशस्तूष्णीमुपविष्टोऽभवम् ।

एकदा चाहमुच्चैरुद्घुषम्—"किमस्ति कश्चित् रक्षितुं मम प्राणान्!" इति अयं च शब्दस्तत्रैव गृहे व्यलीयत । किं क्रियताम् , किमपि न निश्चेतुमशकम् । एकदा चालोचयम्—"भित्त्यवलम्बेनोपर्यारुह्य रन्ध्रैः पश्यामि यः कश्चिदपि वा दृष्टिगोचरो भवति न वेति !" इति । बहुशः प्रयत्नेऽपि नाशकमारोढुम् । भित्तिः किलात्यन्तमेव श्लक्ष्णासीत् । अन्ततश्च श्रान्त उपाविशम् । शिरश्च घूर्णितुमारभत । उपवेशनासमर्थश्च हठात्पतितोऽभवम् । पतनसमये च शिरसि जातेन ताडनेन मूर्छितोऽभवम् ।

इति प्रथमभागे तृतीय चक्रम् ।

---

## अथ चतुर्थं चक्रम् ।

### पलायनम् ।

---

नाहं जानामि कियन्तं कालमस्यां दशायामहमासमिति । अकस्मा- च्चातिविकटेन झणझणात्कारेण प्रतिबोधितस्ससम्भ्रममुदतिष्ठम् । उन्मील्य लोचने पुरतस्स्थं स्थालहस्तं कञ्चन पुरुषमपश्यम् । अथ च तदीयेन वेषेण सैनिको भृत्य इवादृश्यत । तत्करस्थिते च स्थालेऽन्नादिकमासीत् । द्रुततर- मुत्थाय चाहं तदीयौ चरणाववलम्ब्य सभयकम्पमवदम्—"योऽपि कोऽपि वा भव त्वम्, मम तु त्वमेव परमेश्वरोऽसि—उद्धरास्या आपदो माम् ; तपस्विनो मे कुरु साहाय्यकम् , भविष्यति ते श्रेयः, यदस्ति किञ्चिन्मन्नि-

कटे तत्तुभ्यं दास्यामि, रक्ष माम् ।" इति । किन्तु कश्शृणोति । स किल निजचेष्टितैरात्मनो बधिरतामिव कुत्रचिदपि कर्मण्यनधिकारमिव चासूचयत् । पुरस्ताच्च मे वारिपूरितं किञ्चित्पात्रं तच्च भोज्यपूरितं स्थालं निधाय तथैवातिष्ठत् । क्षुधा पिपासया च परवशीकृतोऽहं यत्किञ्चिदलभ्यत तदेव भुक्त्वा पीत्वा च किञ्चिदिव शान्तक्षुत्पिपासोऽभूवम् । सोऽपि स्थालादिकं गृहीत्वा पिधाय द्वारमगच्छत् । महता दुःखेन व्यतीयाय तद्दिनम् ।

सूर्यप्रकाश एव मे घटिकायन्त्रमभूत् । तेनैव कालं निश्चिन्वन्नासम् । प्रतिक्षणं तेष्वेव रन्ध्रेषु पश्यन्नासम् । एवमालोकयत्येव मयि क्रमेण भास्करांशवो दूरेऽभवन् । आजगाम च क्षणेनैव तमः । तस्मिन्नेवान्धे तमसि स्थितोऽहमेकाकी रुदन्नासम् । आन्तरया भक्त्या भगवन्तं स्मरन्नासम् । अश्रु च धारया नेत्राभ्यां पतदासीत् । पुनश्च झणझणात्कारं कवाटिकोद्घाटिताभूत् ।

तमेव च पुनरपि भोज्यहस्तं पुरस्स्थितं पुरुषमपश्यम् । परिरभ्य हस्ताभ्यां तदीयौ पादौ बहुरुदं मार्ल्पं च । किन्तु किमपि प्रयोजनं नाभूत्, स हि मूको बधिर इव चाभूत्, यथाहि कश्चित्किमपि न शृणोति किमपि वक्तुं न शक्नोति । भवतु यथातथा वा । तस्मिन्नेवान्धकारे यावद्बुभुज्यादम् । सोऽपि स्थालादिकं गृहीत्वा यथापूर्वं द्वारं पिधायागच्छत् ।

क्रमेणावर्धत रात्रिः । तेभ्य एव रन्ध्रेभ्य आगत्य गृहं सर्वं व्याप्नोत्तमः । यावदासीद्बहिस्तमः ततोऽप्यधिकेन व्याप्तमासीन्मे हृदयम् । कियन्ति दिनान्यत्र स्थातव्यम्, किमप्यहं न जानामि, सत्यमेव मयात्रैव–मर्तव्यम्, किन्तु केन कारणेनेयं मे दशाभूत्, किमपि न हृदयमवतरति ।

एवमेव चाहं रुदन्प्रलपन्नुत्पतन्निपतंश्चायापयं रात्रिम् । पुनस्तेभ्य एव रन्ध्रेभ्योऽन्तरागतेन प्रकाशेन सूर्यमुदितमज्ञासिषम् । उत्थितोपविष्टश्चाहं पुनस्तत इतोऽन्वेष्टुमारभे । पलायनप्रयत्नं विनान्यत्कार्यमेव तत्र मे किमासीत् । अकस्मादेव किञ्चित्स्मृतिपथमागात्–एतादृशान् कारागृहानधिकृत्य पूर्वं मया

चरितेषु पठितमासीत्, श्रुत चासीद्वहुभ्य —'एतादृशेषु स्थानेषु प्राय सुरङ्गापि भवती' ति । झटित्यवे चापसार्य तृणानि वह्न्वेषिषम् । किमपि चिह्न नोपालभ्यत ।

ततश्चोत्थाय भित्तिषु सर्वत्र सम्यगालोकयितुमारभे । द्विस्त्रिश्च परिवृत्य परिवृत्या लोकयतो मे हठादेव पाश्चात्यभित्तौ कुत्रचित्किञ्चिल्लिखितमिव दृष्टिगोचरत्वमभजत् । विस्मित्य पुन परिमृष्टमिवादृश्यत । किमस्ति तत्र लिखितमिति ज्ञातु महत्येव समजायतोत्कण्ठा । बहुशश्च प्रयतमानो नापारय पठितुम् । अन्ततश्च महता प्रयत्नेन कानिचिदक्षराणि लिखितान्यपठम् । तत्र किल वक्राक्षरैर्दूरदूरे—"शशिबाला" इति लिखितमासीत् ।

स्त्रिया नाम लिखितं दृष्ट्वा क्षणमहमभूवमुद्भ्रान्त इव । अहो कीदृश श्रवणहारि नामेदम् ! अत्रान्धकूपे स्त्रियो नाम किमिति लिखितमास्ते ? अचिन्तयमहमेवम्—"किमेतेऽत्रैवानीय जनाना प्राणान् हरन्ति ? हन्त ! हन्त ! न जानामि कया सुन्दर्याऽत्रैतद्धन्तगतया प्राणा पर्यत्यज्यन्त ! मन्ये सैवान्यानप्यत्रागतान् सावधानीकुर्वन्त्येवमात्मीय नाम लिखितमिति । का नाम स्याच्छशिबाला ? जानामि काचिद्धतभागधेया कुलकामिन्यप्यत्र कारागारे बन्दीकृताभूत, अन्ततश्च निज पातिव्रत्य रक्षन्त्यात्मीयान्प्राणा-न्पादादिति । शशिबालेति हीद नामोच्चारणमात्रेणेव सञ्जनयति कमप्या-नन्द मनस" इति ।

एवमाद्याभिश्चिन्ताभिस्सहैव कालोऽप्यभिवर्धमान आसीत् । सवि-कटशब्द पुनरायसकवाटिकोत्पाटिताभूत् । इत पूर्वं यो भोज्यमानयन्नासीश्च तदानीमदृश्यत स । किन्त्वन्य एव परमसुन्दरो बालस्समालोक्यत । स हि कवचावृताङ्ग शिरसि दधानश्शिरस्त्राणं वसानो वस्त्र मनोहर गौरवर्ण-कमनीयवदनश्चासीत् । श्मश्रुणो नामैव नासीत् । सप्तदशाष्टादशवर्षदेशी-यस्स ममाग्रे स्थालचषकादिक निधाय तूष्णीम्भूतोऽतिष्ठत् । अचिन्तय चा-हम्—"रङ्गा निशिचरनिकर निवास । निवसति सत्पुरुष कथमत्र" इति ।

"पापपुर्यामस्यां नरककुण्डे चात्र कोऽयमत्यद्भुताकारस्तेजस्वी बालकः ? स्यात्कदाचित्करुणानिधिना भगवता ममैवोद्धाराय प्रेषितोऽयम् ।" इति च ।

सविनयं व्यजिज्ञपं चैवमहम्—"भ्रातः ! यदि त्वमपि कश्चिदीश्वर-सृष्टेषु जीवेष्वन्यतमः, यदि चास्ति त्वयि किञ्चिदपि पौरुषम्, तर्हि रक्ष मामापदोऽस्याः । दिनद्वयात्सतितोऽस्म्यत्रापदि । पश्य ! आलोचय ! दुःखिनां साहाय्यकं क्रियताम् ! आपन्नस्य संरक्षणं हि मनुष्यमात्रस्य प्रधानतमो धर्मः । पालय त्वमपि शास्त्रीयामाज्ञाम् । यावज्जीवमहं तव दासभूतः स्थास्यामि । निर्गच्छन्ति मे प्राणाः ।" इति बालकस्तु सङ्केतेनैवावादीत्—"तूष्णीं भव" इति ।

अस्मिन्नेव समये बहिः पदशब्द इवाश्रूयत । कश्चित्पुरुषोऽन्तरागतोऽभूत् । अस्य किल मूर्तिर्निरामेव भयावहासीत् । दर्शनमात्रेणैव हृदयं मे कम्पितुमारभत । अयं किल स एव दण्डधरः पुरुषः, येन सह मम पितुर्द्रव्यन्यूनाधिकभावादिविषये सल्लापः पूर्वमासीत् । भयेन च मे मूर्छेव समजायत । आगत्यैव च सोऽपि सकोपं मामुद्दिश्यावादीत् "अरे धूर्त ! किमेतैस्सह त्वं सल्लपसि ?" ( बालकं दृष्ट्वा सगौरवम् ) किमिति भवानत्र तिष्ठति ?" इति ।

बालस्तु निर्भयं प्रत्यवादीत्—"रामसिंह ! आगतोऽस्म्यहमेनं द्रष्टुम् । पश्यायं रोदिति । न जानामि किमित्येतस्य दुःखेन ममापि हृदयं दुःखितं भवति ?" इति ।

भोजपुरप्रान्तीयस्स भृत्यस्तमोधमममवादीत्—"किं त्वदर्थं मया स्थातव्यम् ? मोक्ष्यसि न वा, किमिति न वदसि ? न मोक्ष्यसि चेच्चूर्णयिष्यामि शिरस्ते दण्डेन, शुस्य झटिति" इति । वदन्नेव चेदं द्वारं पिधाय निरगात्, बालोऽपि सहैव तेन ।

पुनरपि प्राहं तस्मिन्नन्धकूपेऽस्मि एकाकी । पुरतश्च भोज्यं निरिम-

मासीत्परं क्षुधा नाभूत् । उपविष्ट एव चाहं बालकस्य तन ... श्रुतिसुखं स्वरं कमनीयं च वदनं पर्यालोचयन्नासम् । तदात्वे च हठादेव पुरतो मेऽल्पपरिमाणा इष्टकाखण्डाः कतिचनापतन् । सम्भ्रान्त इव चाहं किञ्चिद्-पसृत्य दक्षिणतो भित्तिलग्न उपविष्टोऽभवम् । महदेव भयमजायत । भित्ते-रूर्ध्वभागस्थान् रन्ध्रान्पश्यन्बहुशस्तर्कयंश्चासम् । महती काचनायसी कुञ्चिका पुरतो मेऽपतत् । कुञ्चिकाचेयं त्र्यङ्गुलपरिणाहवती सुदृढा । क्षणान्तरे च हन्त ! हन्त !! सद्यस्कोत्कृत्तनरशिर रुधिरक्लिन्नश्चैकः खड्गोऽपतदमतः । अहं च सविस्मय सभयं च पश्यन्प्रत्यभ्यज्ञासिषम्—तस्यैवेद भोजपुरप्रान्तीयस्य दण्डधरस्य शिरो यः कियद्भ्य एव क्षणेभ्यः पूर्वमत्रागतोऽभूदिति । अधिकाधिकं चाहं भयेन परिकम्पितोऽभूवम् । तदात्वे चैकं पत्रं सम्पुटितमग्रतोऽपतत् । शङ्कमानश्च तदादायोन्मुच्यावाचयम् । एवं तत्र लिखितम्—

"यदि प्राणान् रिरक्षिषसि तर्हि झटिति कुर्वेतानि कार्याणि । प्रथम-मिमां कुञ्चिकां गृहाण । पाश्चात्यभित्तौ यत्रास्पष्टतया किञ्चिल्लिखितमिव दृश्यते तत्र सावधानं पश्य । तत्र लिखितेष्वक्षरेषु 'श' कारस्य स्थानेऽस्ति किञ्चिद्रन्ध्रं यत्सुधया पिहितमास्ते । निष्कासय ततस्सुधाम् । ततश्च कुञ्चिकानिधानयोग्यं किञ्चिदाल्यन्त्रम्येन रन्ध्रं दृश्येत् । तत्र कुञ्चिकां निधाय भ्रामय, ततश्चोद्घाटिते कवाटे एकपुरुषप्रवेशयोग्या काचन सुरङ्गा लभ्येत । इदं च छिन्नं शिरः कपाटपार्श्वे निधाय गृहीतखड्गस्सुरङ्गया पलायस्व । मध्येमार्गमन्धकारावृतान्यल्पपरिमाणानि गृहाणि बहूनि स्युः । मा भैः । सर्वेषामेव गृहाणां द्वाराण्युद्घाटितानि सन्ति । अन्ततश्च गृहस्य द्वाराद्बहिर्निर्गत्य यावच्चरतः । ततश्चोपलभ्यते गृहमेकम् , यस्य च द्वारे कश्चिद्द्वारपालकस्स्यात् । मन्दमन्दं गत्वाऽनेनैव खड्गेन तस्य शिरश्छिन्धि । इदं चावहितेन कार्यं यथा स पूर्वं त्वां न पश्येत् । तस्यैव कवचादिकं धृत्वा तद्गृहपूर्वकोणं गच्छ । तत्र चैका शिलापिहितद्वारा सुरङ्गोपलभ्येत । यत्नेन तामुद्घाट्य प्रविश तस्याम् ।

सावधानं तामप्यतिलङ्घ्य सुरङ्गां यदा द्वारे गमिष्यसि द्रक्ष्यसि तदा कमपि पुरुषं त्वदर्थे वस्त्रादिकं हस्ते दधानम् । किमप्यनुक्त्वैव तद्धस्ताद्व-स्त्रादिकं गृहीत्वा परिधाय दत्वा च तद्धस्ते खड्गं पूर्वभृतं वस्त्रादिकं च याह्युत्तरामिमुखम् । विस्मृत्यापि मास्मगमः पितुर्गृहान्, अन्यथा पुनर्धृतो भविष्यसि । इमां च पत्रिकां शकलीकुरु । मदीयवृत्तान्तपरिज्ञानस्य नास्त्या-वश्यकता । पलायस्व पलायस्व, मास्म विलम्बधाः । झटिति पलायस्व" इति ।

पत्रमिदमुपलभ्य पठित्वा च तत्र लिखितं कियानानन्दो मे समज-नीति नाहं प्रभवामि वर्णयितुम् । मनसैवाहमकरवं धन्यवादान् भगवते, प्रागमद्य सहस्रशस्तं येनेदं व्यलिख्यत पत्रम् । ततश्च झटित्येव तच्छिन्नं पुरस्थं शिरः कवाटपार्श्वे निधायोदतिष्ठम् । तदात्वे चापूर्वमेवोदभूत्साहसं मनसि । तेष्वेवास्पष्टलिखितेष्वक्षरेषु श कारस्य स्थाने तथैव कुञ्चिकया भित्तिं समघट्टयम् । चूर्णीभूतायां सुधायां ततो निष्कासितायां कुञ्चिकानिधान-योग्यमदृश्यत किञ्चिच्छिद्रम् । निधाय तत्र कुञ्चिकां यावदहं भ्रामयामि तावत्सहैव धडात्कारेणायसी कवाटिकाल्पीयसी काचन समुद्घाटिताभूत् । अदृश्यत चान्धकारावृतो गर्त इव कश्चित् । प्रसार्य शिरो धरां यावत्पश्यामि सावधानं तावत्तदपि गृहमिवादृश्यत । पुरत एव लम्बमाने लोहवलये अवलम्ब्यावातरमधः । करवाले तच्च पत्रं गृहीत्वा तस्मिन्नेव गृहे गन्तु-मारभे । क्रमाच्च लङ्घयन् बहून् गृहान्प्रविशन्नेवान्तिमं गृहमपश्यं तत्र वस्तुत एव कञ्चन द्वारपालम् । मदीयेनैव भागधेयेन द्वारपोऽन्यतोमुख एवोपविष्टोऽभूत् । अतएव तन्निकटगतमपि मां नैवाजानात्सः । अयमेव समीचीनस्समय इत्यविलम्बेन तदीयं शिरोऽच्छिदं तेनैव खड्गेन । तदीयं च वस्त्रादिकं झटित्येव प्रथक्कृत्य पर्यैक्षं यावद्रक्तधारा न निस्सरति । क्षणा-न्तरे चातिमहती रक्तधारा सवेगमूर्ध्वमुखं पर्यसुस्रवत् । ततो निर्गत्य पूर्व-भागे कुत्रचिच्छिलामपश्यम् । उपसृत्य च महता प्रयासेनापसार्य तमुपल-मपश्यं सुरङ्गाम् । प्रविश्य कथञ्चित्सुरङ्गामुत्तीर्यापश्यं कञ्चन पुरुषं हस्ते

दधानं वस्त्रादिकम् । स च मां दृष्ट्वैव प्राणंसीदवादीच्चैवम्—"मा भैः, यावच्छक्यं झटित्येवैतानि वस्त्राणि परिधायानेनैवोत्तरदिग्गामिना पथा पलायस्व । देशादेवास्मान्निर्गच्छ । अन्यथा तु भवतः प्राणानामेव रक्षणमशक्यम् ।" इति । अहं च द्रुततरमेव परिधाय तद्वस्त्रादिकं खड्गं द्वारपालीयं वस्त्रं च तद्धस्ते प्रादाम् । पत्रिकान्तु तां न शकल्यकरवम्, न वा तद्धस्तेऽदाम्, किन्तु गुप्तमेवास्थापयं मदीये वस्त्रे । गमनसमये चाहन्तमब्रुवम्—"यस्य किल कृपयाहमेतावत्पर्यन्तं धारयामि प्राणान् किं मया तदीयं नाम श्रोतुं न युज्यते ।" इति । स त्ववादीत्—"नास्तीदानीं तच्छ्रवणस्यावश्यकता । अद्यैव पलायस्वेतः । चतुर्दिशं परिभ्रमन्ति चराः । यदि किञ्चिदपि तेषां ज्ञातं भवेत्तदा बहूनां प्राणान् गृह्णीयुस्ते ।" इति । अहं तु श्रुत्वेदं हताशः किमप्यनुक्त्वैव झटिति प्रातिष्ठमुत्तराभिमुखः ।

इति प्रथमभागे चतुर्थं चक्रम् ।

---

## अथ पञ्चमं चक्रम् ।



### वनलता ।

——यत्रैव कुत्रापि महता वेगेनाधावमहं तेनैव पथा । मार्गश्चायं विपुलतमः, उभयतश्च पार्श्वयोर्महता सान्द्रेण वृक्षषण्डेन मण्डित आसीत् । घटिकामात्रमेवं धावनात्परं कस्यचन निविडच्छायस्य तरोरधस्स्थितो व्यश्रमम् । एकदा च परिवृत्य पृष्ठतोऽवालोकयम्, कोऽपि नादृश्यत । किन्तु भयेन हृदयं कम्पमानमासीत् ।

वैशाखमासस्यायं नवम्पच आतपः, तत्रापि क्षुधितः पिपासितश्चाहम् । अतश्च स्थातुमसमर्थ उपाविशम् । कियत्कालं चैवमेवोपविष्टोऽभवम् । हठा-

च्चाश्रूयतातिविकटश्शब्दोऽयम्––"माधव ! त्वमत्र वेणुषण्डे घने सहैवान्यैश्छन्नस्तिष्ठ । अहं च तत्र पथिश्रमी गच्छामि । कुत्र वा गमिष्यति सोऽस्मद्धस्तान्निर्गतः" इति । अयं च शब्दः कस्यचित्परिचितस्येवाभूत् । परं नाहमशकं कस्यायमिति स्पष्टं निश्चेतुम् । चकितभीतश्चाहं विनैव विलम्बं तमेव वृक्षमारुह्य पत्राच्छादितगात्रोऽतिष्ठम् ।

चतुर्दिशं च चक्षुषी प्रसारयन्नहं नातिदूरे पूर्वदिशायां धान्यक्षेत्रे प्रविश्य पन्थानमागच्छतोऽपश्यम्बहून् । कमप्यहं न प्रत्यभ्यज्ञासिषम् । एतेषां किल मूर्तिर्नितरामेव भयावहासीत् । तेषां च प्रधानः पूर्वं मया कदाचित्कुत्रचिद्दृष्टपूर्व इवादृश्यत । परन्तु नाहमशकं प्रत्यभिज्ञातुम् । यस्याहमासमुपरि तरोस्तस्यैव मूले तेऽप्यागत्योपाविशन् । अहं च समुपजातसर्वाङ्गीणकम्पस्तत्र दृढमवस्थातुमप्यशक्तोऽभवम् । निश्चिनवं च मामेवैतेऽन्विष्यन्तीति ।

प्रधानोऽवादीत्––"धिगस्मान्सर्वान् ! केन तस्य मार्गो ज्ञापितः ! चोरस्यैव गृहे सन्धिच्छेदः !" इति, अन्योऽब्रवीत्––"किं वृथामलापेन गत्वान्विष्यामः । पञ्चशरयाः पुरुषाणां सहस्रे नेत्रेषु प्रक्षिप्य धूलिं स कुत्र वा गमिष्यति । अत्रैव यत्र कुत्रचिच्छन्नस्स्यात् ।" इति ।

हन्त ! हन्त !! हन्त !!! अयं किल शब्दस्तस्यैव मे श्वशुरस्य, यस्तस्यां रात्रौ दीर्घश्मश्रुगण्डः शुद्धं यज्ञोपवीतं धारयन्नासीत् । अद्य तु किमपि तन्नास्ति ।

एतावत्येव समये दूरादेव सुधामधुरश्रवणहारी कश्चन गीतध्वनिः कर्णकुहरं प्राविशत्––

॥ द्विपदी ॥

पञ्जररुद्धः किमिति तपस्वी सोऽयं कैर्दुश्चरितैः ।<br>कुञ्जरनीळं नभ उत्पतितो विहरतु मारुतपोतैः ॥

मुख्यति ताप शमयतु नीरदमञ्जादेष नितान्तम्।
दु स्यति मल्प्रिय एष निकाम गात्रमभूत्कृशतान्तम् ॥

आश्चर्यमाश्चर्यम्! स एव बालक! पूर्वदिशातस्समायाति! अहो! कीदृशी मनोहारिणी गतिरस्य। किञ्चेदमनुपम रूपमस्य! मन्ये सस्यक्षेत्रे कमलेन पुष्पितम्! मन्दमन्दमागत्य सोऽप्येतेष्वेवान्तर्गतोऽभूत्।

कियन्त काल विचिन्त्य मधानोऽवादीत्—"भवतु! इदमेव ह्याश्चर्यतरम्! कारागृहस्य कुञ्चिका मन्निकटेऽस्ति,सुरङ्गाया अपि कुञ्चिका मदधीना। अस्तु, तेन खड्ग कुत्रालभ्यत ? द्वौ पुरुषौ मारितौ, एतावन्त काल कारागृहस्य द्वार विवृतमासीत्। मध्यन्दिन एवैतावतामस्माक चक्षुस्सु धूलीं प्रक्षिप्य स निरगात्! यादृश कर्म न केवलमहमेव, कोऽपि कर्तुं न शक्नोति, तादृशमष्टादशवर्षदेशीयोऽस्य विना प्रयासमकरोत्। धिगस्मान्! उचिष्ठत भ्रातर! जनन्या भवान्या जयशब्दमुच्चार्य पुनरेकदान्विष्याम। अन्यथा पुनर्धन प्राणा गौरव किमपि नावशिष्येत। किञ्च राजकीयकारागृहेषु पतितैर्भाव्यम्। ब्रूत भ्रातर, विजयता भवानी!" इति।

भवान्या जयशब्देन सर्वमेव तद्वन मुखरितमभूत्। क्षणान्तरे च न जाने कुत्र वा ते सर्वेऽप्यगुरिति।

पुनश्च निश्शब्दमभूत्तद्वनम्। तथाहमपि किञ्चिदमी! शून्ये तत्र वनेऽहमेवैकाक्युपविष्टोऽभव वृक्षोपरि। किमित कर्तव्यमिति निश्चेतु नाशकम्। मनसि तु बहवो भावा उत्थाय पुनस्तत्रैव व्यलीयन्त! चतुर्दिशमेव पश्यते हराश्चोरा, तथा चतुर्दिशमेव विपदा परम्पराः, विपत्समुद्रद्वीपरूपे तत्र वृक्षे समुपविष्टोऽह भाविनी विपद चिन्तितुमारभे। किं करोमि, क्व वा यामि, कथ प्राणान् रक्षामि, इत्यादिक विचिन्त्य हृदय द्विधा भवितुमारभत। एवमयालोचयत्येव मयि तृतीयोऽपि प्रहरो दिनस्य समुपागात्। मनस्येवेद निरचिनवम्—"अस्त गते सवितरि यत्र गमन रोचिष्यते तत्रैव गमिष्यामि" इति। पर पुनरपि कुत्र गन्तव्यम् ? को वा भवेच्छरणम् ?

इति विचिन्त्य दुःखितोऽभवम् । "हे शान्तिप्रद ! करुणामय ! भगवन् ! रक्ष माम्" इति वदन्नेवाहमरुदम् । एवमेव प्ररुदन् प्रलयंश्चायापयं दिवसम् ।

तिरोधानोन्मुखे च भगवति सवितरि पुनस्तादृश एव मनोहरो गीत-ध्वनिरश्रूयत । अमृतस्येव धारा सुखयतिस्म हृदयम् । अवहितमनाश्चाहं श्रोतुमारभे ।

हृदयोद्वेगं हृदि निरुणध्मि स्यादप्यधिकः क्लेशः ।
मदनमदापह मास्ते रूपं मत्पुरतः प्राणेश ॥
जायन्तेऽथ विलीयन्ते मे बहवो भावास्स्वान्ते ।
भूयश्चेत्त्वान्द्रष्टा प्राणांस्त्यक्ष्यामि त्वच्चरणान्ते ॥

क्रमाच्चायं श्रुतिसुखदो गीतशब्दो निकटतरोऽभवत् । क्षणान्तरे च स एव बालको मदभिमुखं सहेलमागच्छन्दृष्टिगोचरोऽभूत् । तदा चासीत्पूर्णिमाया निशा । सुधाकरश्च समन्ततो निजान् करान्प्रसारयन्प्राचीकश-त्सुस्पष्टम् । वनस्य च तस्यापूर्वा शोभा काचन समदृश्यत । निष्कलङ्के तत्र चन्द्रातपे स सुन्दरतमो बालश्श्रुतिसुखं गायन्नागच्छंश्चासीत् । तात्का-लिकं च समयस्य सौन्दर्यं पश्यन्नहं क्षणमात्रं व्यस्मरं सर्वमप्यात्मीयं दुःखजातम् । तं किल बालं जानतोऽपि मे पश्यतोहराणां तेषामेवान्यतमं न जाने किमिति तदवलोकनमात्रेण सर्वमप्यात्मीयं दुःखं विस्मृतमभूत्, किमिति वाऽपूर्व एव कश्चनानन्दस्तदानीं हृदये समजायतेति । तं किल परमं मित्रं मत्वा तदाश्लेषेऽपि तदानीमुत्कण्ठा समजायत ।

एवमालोकयत्येव मयि सोऽप्यागच्छत्तस्यैव तरोर्मूलम् । अहमपि तत्रैव तूष्णीमुपविष्टोऽभवम् । हठाच्च तस्य दृष्टिर्मय्यपतत् । अहं च किञ्चित्सङ्कुचित इवाभवम् । बालोऽवादीत्—"ज्ञातोऽसि त्वं मया । त्वमस्यस्मदपराधी दण्डयोग्यः । त्वं किलोभौ हत्वा कारागृहात्पलायितो-ऽस्मत्तो भीतो वृक्षमारूढोऽसि । यद्यहमिदानीमेव त्वामस्मत्स्वामिनो नि-कटं नेष्यामि तदा किं मे पारितोषिकं दास्यसि ?" इति ।

अहो ! कीदृशोऽयं मधुरतमश्शब्दः ! निर्भयमहमवोचम्—"एताव-त्यैव मम विदितं त्वं मे परमं मित्रमसीति । यदि त्वं मय्येतावतीं कृपां करिष्यसि, तर्हि किमन्यदहं पारितोषिकं दातुं प्रभवामि । एत एव जीर्ण-तमाः प्राणा मे सन्ति, गृह्यन्ताम् ।" इति ।

बालकोऽवादीत्—"युज्यत इदम्, युक्ततरं चेदमुत्तरम् । तद्भवत-राध ! किमिति बिभेषि ? यद्येवमसि त्वं कृतज्ञः, किमहं करिष्यामि तवेमान् जीर्णतमान्प्राणानादाय । प्राणपक्षिणं प्रथममहं कुत्रचिद्गुप्तं निधाय वर्ध-यिष्यामि । ततश्च सौवर्णे पञ्जरे स्थापयिष्यामि । अवतरेदानीमथ । प्रवृत्ता रजनी । कुत इदानीं भयम् ? अद्य त्वं मुहुः रक्षितोऽसि । यदा त्व-मेतावता पश्यतोहराणां चिरामि तिष्ठन्नेव तैरविदितोऽभूः, तदा कुत इतो भीः ? आगच्छ, अवतर, पश्यामीय पन्थानम् ।" इति ।

अहं तु वृक्षस्थ एवावदम्—"किञ्चिदिव विश्वसिमि त्वदीये वचसि, परं पूर्णतया तु न जायते विश्वासस्त्वयि । त्वमपि हि तेषामेव घातुकानां पश्यतोहराणामन्यतमोऽसि ।" इति ।

बालोऽब्रवीत्—"सत्यमिदम्, युज्यते च सर्वेदं वचनम् । किन्तु किं त्वं न जानासि—मादृशानां पश्यतोहराणां तरोरूर्ध्वमधश्च तुल्य-मेवेति । यदा त्वं पश्यतोहराणां पुरतस्समागतोऽसि, तदा तेभ्यस्सकाशा-न्निर्गमनमपि दुरशकमेव । माभैः, आगच्छ, करिष्यामि तेऽहं साहाय्य-कम् ।" इति ।

ततश्चाहं किमप्यनुक्त्वैव बालस्य तस्य सारल्यमालोचयन्नवातरमथ, अभूच्च प्रसन्नं चेतः, विस्मृतानि च सर्वाणि दुःखानि ।

बालोऽवादीत्—"त्वयि मे महत्येव सञ्जायते दया । अस्तु कुर्वे किं कार्यम् । अपि भोक्ष्यसे किञ्चित् ? मुखं ते सुतरामेव शुष्कं दृश्यते । जानाम्यहम्, त्वमस्मिन् दिने न किमपि भुक्तवानसि ।" इति । भोजन-नामश्रवणादेव पुनरपि मे तत्त्वं यमपुरनिभं श्वशुरगृहं स्मृतिपथमगात् ।

तदपि भोजनम्, येनेदृशी मे दशा समजायत । अहमवोचम्—"यदि ते मयि सत्यमेवास्ति कृपा, तर्हि वद तादृश किञ्चित्स्थानम्, यत्र गतोऽहं प्राणान् रक्षितुं शक्ष्यामि । भोजनस्य नास्तीदानीं तादृश्यावश्यकता । मधुरेण ते वचनामृतेनैव समपूर्यत ममोदरम् । रक्ष मे प्राणान् । उद्धरास्या पापपुर्याः ।" इति । बालोऽब्रवीत्—"पश्य, त्वमसि पतितः पश्यतोहराणां घातुकानां हस्तेषु । अद्यासि कारागृहात्पलायितो बन्दी पुनर्धृतः । यद्यदहं वदामि तत्तदेव त्वयावश्यं कर्तव्यम्, तथाङ्गीकर्तव्यं च । तव किल जीवनं मरणं च ममैवाधीनम् । मा वद किञ्चिदपि मद्वचनस्य प्रत्युत्तरम् । अत्रैव तिष्ठ इति ।"

बालस्य वचनमुल्लङ्घयितुमहं नाशकम् । तस्यैव तरोरध उपविष्टोऽभूवम् । एतावत्येव समये पार्श्वस्थात्कुतश्चिद्वृक्षषण्डात्तेन द्वित्रा अन्धयस्समानीताः । तत्रैकस्या समुन्मोचिताया जलपूर्णः कलशोऽदृश्यत । बालोऽवादीत्—"अस्यैवैककलशजलस्यार्धेन हस्तौ मुखं च प्रक्षालय । अवशिष्टं चार्धं पानाय तिष्ठतु । माविलम्बथाः । किमपि न पृच्छ ।" इति । अहमपि तथैवार्धकलशजलेन पाणिपादवदनं प्राक्षालयम् ।

बालेनैतावत्येव समयेऽपरा ग्रन्थिरुदमुच्यत यत्र कतिचन पूरिकापिण्डातकशाकश्चासन् ।

अवादीच्चैवम्—"यावद्रोचते पूरिका भुङ्क्ष्व झटित्येव ।" इति ।

श्रुत्वा चेदमहमेवमालोचयम्—"ब्राह्मणवरो जनित्वा शूद्रस्पृष्टं कथं भोक्ष्यामि ।" इति । अवदं चैवम्—"नाहं जानामि ते नाम, जातिं वा एवं स्थिते कथं मया त्वत्स्पृष्टं भुज्यताम् ? नास्ति मे क्षुधा, ब्रूहि मार्गं परम् ।" इति । बालः किञ्चिदारक्तनेत्रोऽवादीत्—"पुनरपि त्वं मदीयस्य वचनस्य विपरीतमेव ब्रवीषि । मन्ये त्वमसि महादौर्भाग्यशाली पुरुष इति । त्वमसि बन्दी । बन्दिनो जात्यादिविचारेण किमस्ति फलम् । नेदं श्वशुरगृहम् । अपि तु कारागृहमिदम्" इति ।

एतादृशेऽपि समये मे हसितं समजायत । अवदं चैवम्—"मया त्वमेव ज्ञातमासीत् । इदानीं त्वयागच्छ श्वशुरगृहं कारागृहमपि पराजयत इति । भ्रातर्नाहं विस्मरिष्यामि कदाचिदपि ते गुणान् । आनय, यदस्ति निकटे ते तदेव देहि, अमृतमिव भोक्ष्यामि ।" इति ।

तत्रैव वृक्षमूले चन्द्रिकाया सर्वास्ता पूरिका अभक्षयम् । भोजनेन शरीरं मे किञ्चित्सुखितमिवाभूत् ।

बालोऽब्रवीत्—"गृहाणेदम्, इदमेवार्धकलशपानीयं पीत्वा शान्त-तृष्णो भव । क्षालय हस्तावपि ।" इति । अकरवं च तथैवाहम् ।

तदनन्तरं च बालकेनान्या काचिदुदमुच्यत ग्रन्थिः । तत्र च कस्याश्चन योषितः परिधानयोग्यानि वस्त्राण्यपश्यम् । किमपि ज्ञातुमसमर्थोऽतिष्ठम् । बालकस्य मुखे दत्तदृष्टिश्चाभवम् । बालस्सस्मितमवादीत्—"अद्य त्वया योषिता भाव्यम् । अस्तु एवं तावत्कुरु । आन्तरीयमिदं तव सम्यग्दृढं बधान, तदुपरि चेदं वसनं परिधेहि स्त्रीवत् ।" इति ।

अहन्तु निजमान्तरीयं दृढं बध्वा बहुशः प्रयस्यन्नपि नाशकं तदंशुकं स्त्रीवत्परिधातुम् ।

तदा बालोऽवादीत् "धिक् त्वां ! किमद्यापि बाल एवासि ! किं कदापि वसनं वसाना कामपि नालोकितवानसि ! देहि अहं परिधापयामि ।" इति !

सर्वाङ्गेण रोमाञ्चितोऽभवम्, न भयेन, न चिन्तया, नानन्देन, किन्त्वपूर्वतमेन केनचित्स्वर्गसुखेन । यमयातना ता व्यस्मरम् । समारं व्यस्मरम् । किमधिकम्, आत्मानमप्यहं व्यस्मरम् । पुत्तलिकेव निश्चलोऽतिष्ठम् । बालकेन परिधापितांशुकोऽभवम् ।

आश्चर्यमाश्चर्यम् ! सुन्दरतमेन स्त्रीणामिव कृत्रिमेण केशपाशेनालङ्कृतमभून्मे शिरः । तैलजलाभ्यां वदनं मे चिक्कणमक्रियत । अलङ्कृतमभून्मौक्तिकेन नासा । सौवर्णबिन्दुचित्रितेन सुन्दरतमेन पट्टकञ्चुकेन

बद्धममून्मे कृत्रिमस्तनभारालङ्कृतं वक्षः । सर्वाणि चाङ्गानि हीरकमणिमाणिक्यादिजटिलैस्सौवर्णैर्भूषणैरभूष्यन्त । आरक्ततामभजतां ताम्बूलेनाधरोष्ठौ । लाक्षारसेन चरणौ मे रञ्जितावभूताम् । नयने चाञ्जनेनाञ्चिते । क्षणादेव षोडशवर्षदेशीया युवत्यभूवम् । तदानीं किलादर्शो नाभूत्, अतएवाहमात्मनस्सौन्दर्यं द्रष्टुं नाशकम् । अन्यथा हि मयाऽन्ततः शतं वा श्लोकाः प्रणीता एव भवेयुरधिकृत्य माम्, यैर्हि भवतां हृदयावर्जनं सम्भाव्यते ।

ततश्च मामापादचूडमालोक्य सचिन्तं बालोऽब्रवीत्—"आसीत् । समाप्तममून्मे कार्यम् । इतःपरन्तु यद्यदहं ब्रवीमि सावधानं शृणु तत्तत्, पुनरेकदा कथनस्यावकाशो नास्ति । आकर्णय, मार्गस्यास्य पार्श्वान्तरे पश्चिमतो यदिदं वनं दूरतः परिदृश्यते, तस्यैव वनस्य मार्गेण निर्भयं याहि । कियद्दूरगमनानन्तरं काचित्कुल्या दृष्टिपथमुपयास्यति, यस्याः किल "वेतर" इति नाम । यत्र किल सा कुल्या उत्तराभिमुखं प्रवहति तत्र पूर्वभागे पञ्च तालवृक्षास्सन्ति, ये किल पञ्चपाण्डवनाम्ना जना व्यवह्रियन्ते । तत्र किल घना काचिदरण्यानी समस्ति । तत्रैव महावने प्रविश्य त्वं याहि । कियद्दूरगमनानन्तरं खण्डगृहमेकमवलोक्येत । तत्रैव गृहे मङ्गलानाम्नी काचिद्वृद्धा निवसति । तां त्वं मातामहीत्याह्वयस्व । आत्मीयं च नाम वनलतेति कथय । तरुलतायाः कनिष्ठां भगिनीं च प्रकाशय । परन्तु सावधानो भव । सैव वृद्धाऽस्मत्स्वामिनो जननी । अहं किलाद्य त्वामेकस्या आपद उद्धृत्यान्यस्यां पातयामि, परं किं करोमि, नास्त्यन्य उपायः । चतुर्दिशन्ते परिभ्रमन्ति चोराः । चतुर्दिशं चापत्ते समास्ते । आपदोऽस्या निष्क्रमितुमयमेक एवोपायः, नान्योऽस्ति । यदि त्वं प्राणान् रिरक्षिषसि, तर्हि विश्वसिहि मयि, गच्छ गच्छ, पलायस्व । स्मर परमात्मानम् । स एव रक्षिष्यति । मदुक्तं च सर्वं माविस्मर । अस्मिन्दिने साङ्केतिकशब्दः—"पी सेन" इति ।" इति ।

सर्वमिदमहमवहितेन मनसा शृण्वन्नासम् । एतावत्येव निःशब्दता समजायत । परिवृत्तश्च नापश्यं बालकम् । न जाने कथं सोऽन्तर्हितोऽभूत् । आश्चर्यमाश्चर्यं ! कोयमद्भुततमो व्यापारः ! अद्यैव हि स मम पुरतस्स्थितो मया सलपन्नासीत् । इयद्द्रुतं कथं स दृष्टिपथमतिक्रान्तः । अहो ! सर्वेऽपि व्यापारा आश्चर्यतमा इव ।

"अहो ! कीदृशमस्य सौन्दर्यं ! कीदृशं रूपं ! एतादृशं चारुसौष्ठवं नैतावता कुत्रापि मया दृष्टम् ! कोऽयं बालकः ! अत्र नरके कथमियं स्वर्गस्य छाया समजायत ! न जानामि किमिति तस्मिन्नवलोकिते ममकारस्सञ्जायते ? न जाने किमित्यानन्दस्य लहर्यः प्रवहन्ति हृदि ! कोऽयं बालः ! किञ्जातीयोऽयम् ! किन्नामधेयश्च ! किमप्यहं न जानामि ! अस्तु यदि सत्य ेव यवनपि तेषामेव पक्ष्मोहरणामन्यनमः, तर्हि किमित्ययं मे साहाय्यमाचरति ! मम रक्षणाय बहुमूल्यानीमान्याभरणानि किमिति मह्यमदात् ! इतो मम पलायनात्तुनोऽयमेवं प्रतुष्यति ! किमहमेनं पूर्वमपि कदाचिदद्राक्षम् ? अस्तु, का सा दुष्टा ? ययाहं भक्ष्यदानेन मूर्छां प्रापितोऽभूवम् । "अहमस्मि तव सर्वस्वभूता" किमित्येवं तयोक्तं ! यदि मे सा सर्वस्वभूता तदाहमपि तस्यास्तथैवेति किमिति तया निगमहं मोजितोऽस्मि ! हन्त ! हन्त ! ! रहस्यमया इमे वृत्तान्ताः । कोऽपि हृदयं नावतरति । अस्तु, अद्य किलाहं मध्याह्ने तत्र कारागृह एकदैवैनमपश्यम् । किमनेनैव यमदूतनिभं तं दण्डधरं हत्वाहं रक्षितोऽस्मि ! पत्रद्वारा किमनेनैव सर्वमपि रहस्यजातं प्रकाशितम् ! पत्रे किल निरदिमार्सीत् "पत्रमिदं शकलीकृत्य पातय" इति । किन्तु किं मम तस्य शकलीकरणं युज्यते ! यावदेतन्नदानिर्दं निकटे स्थापयिष्यामि, ऐस्यकं चान्वेषयिष्यामि ।"

एवमादि वहदं चिरं परिचिन्तयन्नासम् । एतावत्येव मे स्मृतिरभूत्-पनल्ता रात्त्वहम् ।

इति प्रथमभाग-पञ्चमं चक्रम् ॥

श्रीः ।

## अथ षष्ठं चक्रम् ।

### ( मङ्गळा वृद्धा । )

पश्यत्येव मयि गगनमण्डलमम्बुदघनघटाच्छादितम् । अन्तर्दधे च क्षणादेवं जलदमण्डलीषु चन्द्रमाः प्रमोदयन् विरहिणीकदम्बकं दुःखापयंश्च कामुकमिथुनानि । आललम्बे चोपशान्ततामनिलः । एवंवृते चान्धंतमो निजमाधिपत्यं प्रसारयितुं कृत्स्नेऽपि भूमिभागे । एतादृश्यां च तमोमय्यां निशायां वनलताभूमिकाच्छन्नोऽहं कस्यचन खण्डगृहस्य सुमहतो द्वारि तिष्ठन्विचिन्तयंश्च किञ्चिदासम् । भयेन सर्वाङ्गीणं कम्पमान आसम् । अद्य खल्वहमेकस्माद्विपत्सागरान्निर्गत्यान्यत्र पतितुं प्रवृत्तोऽस्मि । परन्तु किं करोम्यहमवशः, बालकस्य खल्वाज्ञा तादृश्येवासीत् । जीवनदातुर्बालकस्याज्ञा कथम्मयोल्लङ्घ्यताम् ! करुणावरुणालय भगवंस्त्वय्येव निहितभारोऽहमस्मिन्विपदम्भोधौ निपतामि ! बालकस्य वचनं स्मरन्नहं किञ्चिच्छान्तहृदयोऽभवम् । मन्दमन्दं प्राविशं खण्डगृहं तत् । कस्यचिद्द्वारस्य पिहितकवाटस्य निकटे स्थित्वाहमाह्वयम्-"मातामहि ! मातामहि !" इति । किमप्युत्तरं नालभ्यत ।

पुनरप्यहमाह्वयम्-"मातामहि ! मातामहि ! कस्कोत्र गृहे ? कवाटिमुद्घाटयताम् !" इति ।

विकटस्वरेणोत्तरमागतम्—"कोऽसि-एतावत्यां निशायां व्यतीतायाम्?" इति ।

अहमवदम्-"तवास्मि दौहित्री, मार्गश्रमादियान्व्यतीतःकालः । बहिरागत्य नयस्व माम् ।" इति ।

पुनश्शब्दोऽश्रूयत-'का सा दौहित्री?'इति । अहं चावदम्-'वनलता'इति । "अपसर, कासि त्वं ! यदाद्यत्विकं सङ्केतं" इति सक्रोधमवादीद्वृद्धा ।

अहं च मन्दमेवाब्रवम्-"पी-सेन,नेतो विलम्बं कुरु, नयस्व माम्।"इति। वृद्धावादीत्-"सम्यक्, आगच्छ, दीपं प्रदर्शयामि।" इति। ततश्च करधृतदीपा द्वारमुद्घाटयन्ती काचन वृद्धा दृष्टिपथमगात्। तस्याःकिल भयानकं रूपमवलोक्य शुष्कमभून्मे वदनम्। तस्या रूपेण कं वा सदृशयामि। मया किल मदीय उपवेशनगृहे दशमहाविद्योक्तायाः काकध्वजारूढायाश्शूर्पहस्ताया विभीषणाया धूमावत्याः प्रतिकृतिरालोकितासीत्। तदात्वे किल सैव प्रतिकृतिर्दीपहस्ता पुरतास्तिष्ठतीति मयावधृतमासीत्। सर्वतोऽन्धं तमः, तत्रापि सा मयावहा कराला मूर्तिः। इत्येतदिदानीमपि स्मृतं कम्पयति हृदयम्।

वृद्धावादीत्-"पृष्ठत एवागच्छ।" इति।

अहं च हतहृदयस्तस्या एव पृष्ठतः पृष्ठतोऽगच्छम्। एकदा च भयेन परावृत्य पलायितुमैच्छमपि। किन्तु पुनर्बालस्य वचनानि स्मृतिपथमारुहन्। अत एव तस्याः पृष्ठत एवागच्छम्। क्रमेणातिलङ्घ्याङ्गणादिकं प्रथमसौधमगच्छम्। तत्र किल किञ्चित्सुविशालं गृहमेकमासीत्, यत्रैको दीपो मन्दं प्रकाशमान आसीत्।

ततश्च वृद्धा सा परावृत्यावलोक्य मदीयं मुखं सावधानं मामेवमवादीत् "किं त्वन्तरीभगिनी ? अद्य त्वं कुशला दृश्यसे ? एतावत्यां रात्रौ कुतस्समायासि ? " इति।

किमस्योत्तरमहं ददामि, किन्तु भगवता यथा प्रेरितोऽभवं तथैवावदम् "भवत्या अभ्यागम्यं श्रुतमासीत्। अम्मा स्वयमेवाजिगमिषतिस्म। किन्तु न जाने किमिति मां प्रेषयत्। अवदच्च "गच्छ; बह्वो दिवसा व्यतीताः, मातामही दृष्ट्वागच्छ" इति। आगच्छन्त्या मे मार्ग एव रात्रिस्समजायत। परिश्रान्तास्म्यहम्। मातामहि मदीयं मे शयनस्थानम्।" इति।

वृद्धावादीत्-"कथं न परिश्रान्ता भवेः। कदापि गृहात्र निर्गच्छसि

त्वम् । गृह एव स्थिता जीर्णा भवसि । सर्वत्र कार्येषु यदा कदाचित्परिचयः कार्यः । अस्त्वागच्छ मम पृष्ठत एव ।" इति ।

तूष्णीमहं वृद्धायाः पृष्ठत एव तद्गृहमविशम् । तदा च वृद्धावादीत् गच्छ तत्र चतुष्पादपीठिकायामुपविश । ताळवृन्तं गृहीत्वा पनय निजं स्वेदम् । भूषणानि चावरोप्य शय्यायां निधेहि । घर्मः किल तादृशः, यत्र केवलं धृतवस्त्रमात्रेणापि स्थातुं न शक्यते । अपि भोक्ष्यसे, अथ भुक्त्वा समागतासि ?" इति ।

"अथकिम्, किञ्चिद्भुक्त्वाहमागमम् । नास्तीदानीं मे क्षुत् । यत्किञ्चिदहं भक्ष्यं परं भोक्ष्ये ।" इत्यवदमहम् ।

"कथमिदं भविष्यति ! अवश्यमेव त्वया भोक्तव्यम् । अहं किल मदर्थे काश्चन पूरिका अकरवम् । किन्तु शरीरस्यास्वास्थ्येन न मया भुक्ताः । गच्छ, त्वमेव ता भुङ्क्ष्व ।" इति वृद्धावोचत् ।

अहन्तु केवलं उम्कारेण प्रतिवदन् शय्यायामशयिषि । वृद्धा च परिष्कृत्य यथायथं तद्गृहं निरगात् । यदा पुनस्साप्यगच्छत्तदा नानाविधाभिश्चिन्ताभिर्न जाने कीदृशीमवस्थां प्रापितोऽहमभवम् ।

वैशाखमासस्य स्वर्णद्रावकस्य घर्मः, नानाविधाश्च चिन्ता उन्मादिका', ततोऽप्यापादमस्तकं स्वर्णमयानां भूषणानां भारः, इत्येतैरहमुद्भ्रान्त इवाभवम् । अचिन्तयं च-"हन्त ! किमिति जानन्नप्यहमत्रागतोऽस्मि । न जानामीतः किं वा भविष्यति । ( कष्टं ! इदानीमपि तस्मिन् स्मृते कम्पते चेतः । तत्र किल रण्डगृहेऽहं धृतवनितावेष एकाकी अतिष्ठम् । ) भगवतः करुणयाद्यावधि तु मया वृद्धायाः प्रश्नास्सम्यगेवोत्तरिताः । रात्रिस्तु यथाकथञ्चिदतीता भविष्यति, किन्तु प्रातः किं वा स्यात्, चोराः किल तत्र तत्रान्विष्यन्तोऽवश्यमत्राप्यागमिष्यन्ति, तदा च निश्चितमेवाहं प्रकाशितो भविष्यामि । को नु तदा मे रक्षकः ? येन केनापि प्रकारेणाद्यैव रात्रौ पलायितव्यं मया । परन्तु कथमिदमहं कर्तुं शक्नोमि,

बालकेन खलु तथाकरणादहं प्रतिषिद्धोऽस्मि। चतुर्दिशं हि चोराः परिभ्रमन्ति, पलायनं चातो दुष्करम्। किं करोम्यहमद्य? कोऽप्युपायो न परिस्फुरति। हा! कीदृश्यामहं पतितोऽस्म्यापदि। वृद्धापीयं किञ्चित्सन्दिग्धेव प्रतिभाति। वदनम्, नयने, स्वरश्चेत्यादीनि किल हृदयगूढस्यार्थस्य प्रकाशकानि। वृद्धाया वदनं हि स्फुटमेव वदति तस्या हृदयङ्कुरितोऽस्ति सन्देहो मयीति। तस्या हृद्यस्ति किञ्चित्कपटमिति। अतश्च नाहमिदानीं तया दत्तं किमपि वा भोक्ष्यामि।"

एतादृशीभिरेव चिन्ताभिः प्रायोऽर्धघण्टा व्यतीता। वृद्धा तु पुनर्नादृश्यत। तदात्वेऽहं पादकटकं वस्त्रेण बध्वा समुत्थाय बहिर्निर्गत्य ततो गृहात्पूर्वोक्ते सुमहति गृहे तत्र इतस्ततश्चरन्कमपि नापश्यम्। चतुर्दिशं च निःशब्दतासीत्, अत एव सन्देहोऽपि मेऽभिवर्धमान आसीत्। अनुपदमेव सुमहत्या आपदस्समागमस्समस्फुरचदानीं चेतसि। विभीषणां व्याचास्यां मदभिमुखमायान्तीं राक्षसीमपश्यमिव। अन्धं तम एव करालाननो मन्त्रिगळनप्रवृत्तो महाभूत इवादृश्यत। क्रमेणाहं तदपि गृहमुल्लङ्घ्याङ्गणमगच्छम्। अकस्मादेव दूरात्कश्चनाल्पतमो दीपप्रकाशो मुखे ममापतत्। येन क्षणं लोचने मे चञ्चलनमे अभूताम्। भयेन चाहं परिकम्पितसर्वाङ्गोऽभवम्। तदा च मे सन्देहो निश्चयरूपतामगमत्,ज्ञातोऽस्म्यहं चोरैरिति। पलायमाहं वृद्धायास्तदेव गृहमविशम्, यतः प्रथमतो निर्गतोऽस्मि। दृढं च कवाटाभ्यां द्वारं विधायार्गळमप्यदाम्। तदात्वे चाहं कम्पमानस्सर्वावयवेषु सवरस्वेदजलो रोमाञ्चितगात्रश्चण्डवातनुन्न इव कदळिकाण्डः स्थातुमशक्नुवानः कथं कथञ्चिद्द्वारमवलम्ब्य कवाटरन्ध्रनिहितकर्णोऽतिष्ठम्। हन्त! हन्त!! हन्त!!! बालस्य तस्य सा सर्वापि चातुरी निष्फलैवाभूत्।

परितो गृहस्य पदशब्द इवाश्रूयत। बहून् जनानन्तःप्रविशत इवावागच्छम्। ततश्चायं शब्दोऽश्रूयत—"कृतघ्ने! किमिदमेव ते कार्यम्? वद, किमर्थं रात्रौ निजे गृहे बालिकां गोपितवत्यसि" इति। वृद्धायास्त्वेवमुत्तरमश्रूयत-"रे किं वदथ यूयमेवम्? भैरवस्य तनीयसी तनया

तरोःकनिष्ठा भगिनी अथ रात्रौ मन्निकटमागता । पश्यत तदर्थमेवेदं भोज्यं नयामि । एवं स्थिते किमेवं वदथ यूयं 'बालिकां गोपितवत्यसि' इति । हन्त ! आश्चर्यमिदम्" इति ।

"अस्तु, गच्छ, पश्यामः का सा तरोर्भगिनीति । अन्यथा चेच्छिरस्ते चूर्णयिष्यामः" इत्यश्रूयतान्यशब्दः ।

सोपानेषु धप्धप्शब्दोऽभूत् । अहं चार्गलं हस्तेन परिगृह्य कम्पमानगात्रो वाचंयमोऽतिष्ठम् । एते समागताः ! इमे मामगृह्णन् ! इत्यालोचयतो मे हृदयं सशब्दं कम्पितुमारभत । भयेन स्विन्नगात्रश्चाभवम् । नेत्राभ्यां किमपि नापश्यम् । श्वासश्चोर्ध्वमुखो बलात्प्रावर्तत । पुनश्चाश्रूयत, यथा किल बहिर्द्वारे कश्चित्कञ्चन वदति । "रे ! कस्त्वम् ?" । उत्तरं चाश्रूयत "त्वं वा कोऽसि ? कुत आगतोऽसि ? सत्यं वद ।"

"मातुल ! किं त्वमुन्मत्तोऽभवः ? किं मां न प्रत्यभिजानासि ? अहमस्मि वनलता !" इति चाश्रूयतान्यशब्दः ।

"त्वं वासि ? कुत आगतासि?किमर्थमत्रागतासि?"इति चापरः ।

"मातामही द्रष्टुं अम्बा मां प्रैषयत्, मार्ग एव रात्रिरभूत् ।" इति चोत्तरं तस्य ।

एतावत्येव बहिः कोलाहलोऽभूत् । वृद्धां न जाने को पापातयत् । सा च पतिता रोदितुमारभत ।

"किमभूत् ! किमभूत् ! इति वदन्तस्सर्वेऽप्यधोऽवातरन् । तदाहमेवं समचिन्तयम्–"आपातेन वृद्धा कदाचित्स्यान्मूर्छिता" इति ।

ततश्च भगवन्तमहमस्तवम् ! महत्या विपदो रक्षितोऽभवम् । यदीतः कियानपि विलम्बोऽभविष्यत्तदाहं धृतोऽभविष्यम् । परन्तु भगवतो लीलां पश्यत, पितृसस्य तस्य द्वारस्य समीपे सत्यभूता वनलता समागतातिष्ठन् । कियन्चिरक्षणात्पुनर्मे प्राणा रक्षिता अभवन् ।

यदा किल निःशब्दता समजायत, तदा वृद्धाया अवस्थां परिज्ञातुं महत्यजायतोत्कण्ठा । द्वारमुद्घाट्य बहिर्गन्तुमैच्छम् । अज्ञायत च द्वारं बहिर्दत्तार्गळमिति । महान्विस्मयोऽभूत् । अहमचिन्तयम्-"किमहं रक्षतेहरै रेवर्जितोऽस्मि ? किमहं पुनर्बन्दीकृतोऽस्मि" इति । सत्यवनलताया आगमनं वृद्धायाः पतनं चैकदैवाभूत् । "यदीदं तस्यैव कार्यं तर्हि जितं बालेन तेन" इत्यचिन्तयम् ।

अहो: कालादनन्तरं हृदयस्योद्वेगः किञ्चिदिव शान्तोऽभूत् । तदाहं वृद्धायाश्शय्यायामपातयं शरीरम् ।

स किल मन्ये रात्रेर्घण्टाद्वयवादनसमयः । क्षणाच्च निद्रयाभिभूतोऽभूवम् ।

इति षष्ठं चक्रम् ॥



अथ सप्तमं चक्रम् ॥



( किमयं स्वप्नः ? । )

सहैव खटखटात्कारेण ताळयन्त्रमुदघाटि, झणझणात्कारं शृङ्खलाप्युदमुच्यत । मन्दप्रकाशश्च दीपः प्राचीकशत्सदम् । मन्दमन्दमागत्य कश्चिन्मदीयायां शय्यायामुपाविशत् । कोष्णेन मृदुना पाणितलेन परिगृह्य मदीयं शिरोऽचालयत् । तदात्वे चाहं स्वपन् जाग्रन्वास्मिति नाद्य किमपि वक्तुं शक्नोमि । पुनश्चैकदा स शिरो मे समचालयत् । समयमुन्मील्य नेत्रे अपश्यम् । सर्वतश्चान्धे तमसि किमप्यपश्यन्नहं भूतस्य प्रेतस्य चेदं कृत्यं निरचिनवम् । भयेन च सुमहता परिभूतस्य मे न वशमेतिस्म जिह्वा । महता साहसेन प्रयासेन चावदम्-"कोऽसि त्वम् ?" इति । उत्तरं च नालभ्यत ।

पुनरपृच्छम्-"कस्त्वमस्यदयः ? इति । उत्तरं तु तदापि नालभ्यत ।

एतावत्पर्यन्तमपि तस्य हस्तो मच्छिरस्येव संलग्न आसीत्, तं दृढमहं परिगृह्य समभर्त्सयम्-"वद, कस्त्वमसि !" इति ।

आश्चर्यमाश्चर्यं ! विना निश्वासशब्दं कोऽपि नाश्रूयत शब्दः । द्रुतमहमुत्थाय तत्रैवोपविष्टः प्रष्टुमारभे-"कस्त्वमसि ? पुरुष उत स्त्री ? शत्रुरासि मित्रं वा ? द्रुतं वद, कस्त्वम् !" इति । तथाप्युत्तरस्य नामैव नालभ्यत । तस्य हस्तेन दृढगृहीतमत्करेणाहमुत्थातुमाकृष्टोऽभवम् । मदीये मनसि यावत्साहसमासीत्ततोऽपि किञ्चिदधिकमेव भयम् । तदीयं सङ्केतमवगत्याहं शय्याया उदतिष्ठम् । भयेन च जडीभूतमभून्मे गात्रम् । प्रश्नानामयमुत्तरं कुतो न ददाति, किमपि हृदयं नावातरत् । स च हस्तेनावलम्ब्य मां द्वाराभिमुखमनयत् । अहमपि काष्ठपुत्तलिकेव तस्यैव पृष्ठत पृष्ठतोऽगच्छम् । स च महतावधानेन मामधोऽवतारयामास । अधस्तु कोऽपि नासीत् । केवलमन्धन्तमोऽदृश्यत । मध्येमार्गं मया बहवः प्रश्ना अक्रियन्त,किन्तु कस्याप्युत्तरं तेन नादायि । स च क्रमान्मा बहून् गृहानङ्गणानि चानिलङ्घ्य किञ्चिद्विशालतममनुपरुद्धं स्थानं नयतिस्म, यत्किल वनमिवादृश्यत । निविडतमान्धतमसावृते भयानके तत्र वने केनचिदपरिचितेन पुरुषेण सह निश्शब्दपदं गच्छन्नहमपि कस्याश्चिन्महाकुल्यायास्तीरम् । हठाच्च तेन यो मामेतावद्दूरमानयत्साङ्केतिकशब्दोऽक्रियत कश्चित् । उत्तरितश्चायं शब्द.कुल्याप्रान्तादागतेन तादृशेनैवाभूच्छब्देन । विचित्रतममिदमेव कृत्यमालोचयति मयि काचित्तरिर्यो केनचित्पुरुषेणारूढेनोह्यमाना तीरमभजत्, यत्राहमवस्थितोऽभवम् ।

यावदहं तरिं दृष्ट्वा परावृत्यावलोकयामि तावत्स नादृश्यत येनाहमेतावद्दूरमानीतोऽस्मि । सर्वतश्च विना तमः किमपि नादृश्यत । अतिमहता विस्मयेन बलादहमाक्रान्तोऽभवम् । "एवमन्तर्हितस्यास्य को वा स्यादभिप्रायः ? शत्रुर्मित्रं वा स. ? किमहं विपद उन्मुक्तो भवामि, अथ विपदि पतन् ? रहस्यमयोऽयं वृत्तान्त. कदा वा प्रकाश्येत ? मन्ये तरिरियं मदर्थमेवागता ! पलायनस्य चायमुत्तम एव मार्ग ! यदीदमेव सत्यम्, तर्हि

अज्ञातकुलशीले छद्मवेषधरे देवते ! त्वया भूमिं गतया महदेवाक्रियत कार्यम् । परोपकारव्रतस्य केतुरय न्यखन्यत । कस्यचिदनाथस्य बालस्य साहाय्यकाचरणेनाभूर्भगवानिव मे पूज्यतमा ! ” इत्यादिकमचिन्तयम् ।

ततश्च किमप्यविचार्यैव झटिति तामेव तरिमारुह्योपाविशम् । क्षणाच्च तरिरपि गन्तु प्रववृते । मन्येऽद्याप्यहं निद्राम्येवेति । यर्हि किमय स्वप्न ?।

॥ इति सप्तमं चक्रम् ॥

## अथाष्टमं चक्रम् ।

### ( कोयं महापुरुषः ? । )

कियत्येव काले घनघनघटाभिराच्छाद्यत नभ । अन्तर्हिताश्च तारा गाविनीं मे दशामिव विलोकयितुमशक्नुवन्त्य । क्रमाच्च करिकरनिभा नीरधारा पतितुमारमन्त । महता चण्डवातेन, ब्रह्माण्डभेदिना च भीमेन घनगर्जितेन, विद्युता च लोचनहारिण्या, वातमथ्नाना पतता पतनोन्मुखाना च तरूणामाघातेन, क्षणमिव प्रलयदशामनुकरोतिस्म स समय । अहह झञ्झानिलविलोळिताया धुन्यायामनुतरङ्गोत्पतननिपतने कदाचिद्भ्रमण्डलमिव स्पृशन्त्या कदाचिच्च पातालमिव प्रविशन्त्यामत्यल्पायामेकपुरुषमात्रवाह्याया तस्यामेव तर्यां वेणुबद्धस्य तृणच्छन्नस्यातपमात्रनिवारणयोग्यस्य मण्डपस्याधस्स्थितो भयकम्पितसर्वाङ्गश्शून्येन लोचनेन चपत्तर पदयन्नन्वशोच प्रकृतेरिम विप्लवम् । नाविकस्तु मौनव्रतमिवाश्रितो यावद्बल साहसेन तरिमवाहयत्त्वरितम् । 'कुत्रेय तरिर्गच्छति, कदा पुनर्निर्दिष्ट स्थानमुपयास्यति, ' इति किमप्यह न जानामि, यतो महुश पृष्टोऽपि नाविकस्सज्ञया मामेव पर तूष्णीक करोति, न पुन कश्चिदपि वा शब्द मुखान्निस्सारयति ।

एव यान्त्यामेव तर्यां हठादेव न जाने कस्य वाऽऽघातेन ऋजु गच्छन्ती तरिस्तिर्यग्गन्तु प्रववृते । अतिरोतेन्म तदानीं तरिवेगेन शर-

मपि । कलकलरवश्च समन्ताद्विशेषतोऽश्रूयत । क्षणाच्च गुळुगुळुशब्दोऽपि कर्णपथमगमत् । अज्ञासिषं च तदानीमहमाघातजनितेन छिद्रेण तरेरन्तस्सवेगं प्रविशतो वारिणोऽयं शब्द इति । "त्राहि भगवंस्त्राहि" । क्षणाच्च भयेन मे शिर उद्भ्रमितुमारमत । नेत्रे च विलोकनासमर्थे अभूताम् । सहैव धमात्कारेण तरिर्जले न्यमज्जत् । चेतनया चाहं त्यक्तोऽभवम् ।

कस्यामवस्थायां कुत्र कियन्तं कालमासमिति नाज्ञासिषम् । यदा पुनश्चेतना समजायत, तदाहं कुत्रचित्प्राभातिकालोकरमणीये स्वभावशोभने वनोद्देशे कस्यचन घनच्छायस्य तरोरधस्तात्पर्णमय्यां मृत्पिण्डोपधानायां शय्यायां शयानमात्मानमवागच्छम् । कृत्स्नेऽपि शरीरे विना सूक्ष्मतमं श्वेतमेकं वस्त्रं किञ्चिदपि नादृश्यतान्यत् । क्लिन्नं मे गात्रं क्रमाच्छुष्कतामाप्नुवदासीत् । शिरोभागे च कश्चन महापुरुषो यः स्वभावत एव देदीप्यमान आसीदपश्यमहम् । दृष्ट्वा च तं गभीरतमं यावदहं गौरवेण तस्मिन्नुत्थातुमयते तावत्सोऽपि मेघगम्भीरेण स्वरेण—"मा, मा, मास्मोत्तिष्ठः, अद्यापि त्वमस्वस्थः, उत्थाने पुनः भविष्यसि विचेतनः" इत्यवदत् । वस्तुतोऽपि मे तादात्विकी दशा तादृश्येवासीत् । यद्यपि नाहं सम्यगुदतिष्ठम्; तथापि किञ्चिदुन्नमनेनैव शिरो घूर्णितुमारभत; येनाहमवशः पुनरशयिषि शय्यायाम् । ततश्च स एव महापुरुषः कोष्णं गव्यं पयः किञ्चिदपाययन्माम् । क्रमेण सबलोऽहमभवमुत्थातुं समर्थ इव । मन्दंमन्दं मामुत्थाप्योपवेश्य स महानवदन्मां "भगवतः करुणया नेत किञ्चिदपि भयमस्ति । अद्यासि त्वं सुस्वस्थः । विना भगवतः करुणां किमन्यदस्ति कारणं येनाद्य त्वमभू रक्षितः । जानाम्यहं त्वमस्यनाथः कश्चिदिति । पराभिच्छामि कुतस्ते दशेयमीदृशी समजायतेति ? । भयानकेऽत्र पश्यतोहराणां चोराणां निवासे कुतस्त्वमागतोऽसि ? मन्येऽहमेतेषां प्रत्युत्तरणे न स्यात्ते कोऽपि विरोध इति ।" इति ।

तामिमां गभीरशान्तां वाणीमाकर्ण्य क्षणमहं सर्वमप्यात्मीयं दुःखजातं व्यस्मरम् । प्रफुल्लेन चेतसा आनन्दजलक्लिन्नाभ्यां लोचनाभ्यां

गद्गदेन स्वरेणाहमात्मीयं सर्वं वृत्तान्तजातमेकैकश्येनाश्रावयम् । सोऽपि मौनमुपाश्रितोऽशृणोदवहितः । "अहं किल वनलतावेषप्रतिच्छन्नोऽनर्घैर्भूषणैर्भूषितस्तदा तरिमुपारुक्षम्, इदानीं तु तेष्वेकमपि भूषणं न दृश्यते, किमिदमाश्चर्यम्," इति चिन्तयन्नहमस्मिन्नंशे तमप्राक्षम् । सोऽपि वक्तुमारभत "दैवादहमद्य प्रातस्सूर्योदयात्पूर्वमेव चतुरन्तयानमुपारूढोऽनेन पथा गच्छन्नासम् । अचिन्तितमेवागतया वृष्ट्या प्रतिरुद्धगतिरहमस्यैव वटस्य छायामशिश्रियम् । अहन्तु चतुरन्तयानस्यान्तरेव निषण्णोऽभवम्, परमेते वाहकास्तत इतस्समन्विष्यन्तिस्मान्यं कञ्चित्तरुमवस्थातुं तस्य च्छायायाम् । एतावत्येव कश्चिदागत्य वाहकोऽवादीत्-"कुल्यातीरे कर्दमावृतमूर्तिश्शव इव कश्चिद्दृश्यते" इति । दैवाच्च तदानीं वृष्टिरपि किञ्चिच्छान्ताभूत् । द्रुतपदमहं तत्र गत्वापश्यं वस्तुत एव कञ्चन शवं पतितम्, यस्य किल कटेरुपरितनोभागस्तीरे, अधस्तनश्च जले पतित आसीत् । झटित्येवाहं वाहकानां साहाय्येन शवं तं चतुरन्तयानस्य निकटमनयम् । ततश्च श्वासश्चलति न वेत्यपश्यम्, नोपालभ्यत किमपि । शिरःपरमुष्णमेवासीत् । अत्यम्बुपानेन दृतिरिवोदरमुच्छूनमासीत् । तत्क्षणादेव मज्जास्यामिं तापयितुमारभे । वदने फूत्कारदानेन शरीरस्य तत इतः परिभ्रामणेन चान्तर्गतं वारि क्रमेण निर्गन्तुमारभत । कियत्कालानन्तरं श्वासोऽपि प्रचलितुमारभत । वक्षसि च धक्धक् शब्दोऽश्रूयत । नाड्योऽपि समचलन् । ततश्च निकटवर्तिनो ग्रामात्क्षीरमानाय्य कदुष्णं कृत्यापाययम् । चेतना च समजायत । बलञ्च शरीरे समवर्धत । स एवासि त्वं ! भगवतःकृपया सम्यगद्य रक्षितोऽसि । त्वदीये च गात्रे न किमपि वस्त्रं भूषणं वासीत् । नग्नश्शव इव पतितोऽभूः । मन्ये त्वदीयानि वस्त्रभूषणानि नाविकेनापहृतानीति ।" इति ।

अहो ! कोऽयं महान् ? ईदृशी करुणा, एतादृशश्च स्नेहः कुत्रापि मया न दृष्टचरः । यद्यनेन महापुरुषेणाहं नालोकितोऽभविष्यं तदाहं मृत एवाभविष्यम् । जन्मन्यस्मिन् यथार्थं पुत्रस्नेहमहं नैतावता जानामि । अद्यैव

तु पुत्रस्नेहोऽस्मिन् पितृभक्तिश्च मयि समजायेताम् । सविनयमहमवदम् । "श्रीमता मे प्राणा अरक्ष्यन्त । नाहमस्मिन् जन्मनि कदाचिदपि विस्मरिष्यामि श्रीमतां करुणाम् । प्राणदातारो भवन्तः, अथापि जन्मदातुरपि पूज्यतमा एव मे । भवतां चरणकमलेषु सहस्रशः प्रणमामि । अहमस्म्यनाथः आतुरोऽसहायश्च । जगत्यामस्य नास्ति कोऽपि मदीयः । यद्यहं भवद्भी रक्षितो नाभविष्यम्, तदा सर्वस्मादपि दुःखजातान्निर्मुक्तोऽभविष्यम् । अद्य तु कृपया संरक्षितानामेषां प्राणानां कोऽस्त्यन्यः स्वामी ! भवद्भिर्दत्तानिमान्प्राणान्भवतामेव चरणेष्वर्पयामि, अनाथमिमं दीनं जनं पितेव भवन् भवान् रक्षतु" इति । तेनेक्तम्-"प्रियवत्स ! अलमलम्, नास्तीतोऽपि वक्तुमावश्यकता । आगच्छ मे गृहम्, पालयिष्यामि पितृनिर्विशेषं त्वा" इति ।

ततश्च मां चतुरन्तयानमारोपयामास । अनाथेनाऽकिञ्चनेन मया यानारूढेन गम्येत, तैस्तु पद्भ्यां ! अयुक्ततरमेवेदम् । किं करोम्यहमवशः । बहुशः प्रार्थयानेऽपि मयि स नाशृणोत् । अन्ततो मया तदीयाज्ञा पालनीयैवासीत् । चतुरन्तयानारूढ एवाहमगच्छम् । गच्छंश्चाहमेवमचिन्तयम्—"कोऽयं महापुरुषः !"

इत्यष्टमं चक्रम् ।

---

## अथ नवमं चक्रम् ।

### ( श्रीदेवनारायणमुखोपाध्यायः । )

कलकत्तानगरात्पञ्चाशत्क्रोशदूरे उत्तरतो देवग्रामनाम्नि ग्रामे श्रीमान् देवनारायणमुखोपाध्यायो नाम कश्चिन्महान् जानपदाधिपतिरासीत् । तस्य वार्षिक आयो जानपदेभ्यो लक्षरूप्याण्यासीत् । आचारव्यवहारादिकं सर्वं तस्य सत्पुरुषोचितमेवासीत् । धनिकानामिव हर्म्यप्रासादोद्यानादिक-

मप्यनर्घमेवासीत् । तदीये देवालये सर्वदैव यःकश्चनोत्सवः प्रचलतिस्म । तदीये गृहे यावन्तो मनुजाः स्थिताः, ते सर्वेऽपि प्रायो वैतनिका एव, ज्ञातिषु बन्धुषु वा कोऽपि नासीत् । गृहे च भगवतश्शालिग्राममूर्तेः प्रत्येकशः आराधनं प्रचलतिस्म । नियतकालेषु पूजनाय पूजोपकरणादिसम्पादनाय च कश्चित्सर्च्चाको ब्राह्मणो नियमितोऽवर्तत । पण्यवीथिकातो घृततण्डुलादीनां पदार्थानामन्येषां चोपयुक्तानामानयनं रामसदयचक्रवर्तिनाम्नोऽधीनमासीत् । राममोहनभट्टाचार्यो नियोगी रामचरणमुकर्जी धनाध्यक्षश्चास्ताम् । सर्वेऽप्येते सपत्नीकास्सपरिवाराश्चास्यैव गृहेषु प्रतिवसन्तिस्म । पूजकादारभ्य रघुवीरभृत्यपर्यन्तास्सर्व एव यद्यप्यस्य गृहेषु वसन्तिस्म, परं मुखोपाध्यायस्य निजः परिवारस्त्वत्यल्पीयानासीत् । पञ्चपञ्चाशद्वयस्कस्य मुखोपाध्यायस्य परिवारेषु अष्टादशवर्षदेशीया काचित्तृतीयवारं विवाहिता पत्नी, प्रथमपत्नयामुत्पन्नो निर्मलकुमारो नाम विंशतिवयस्कः कश्चित्पुत्रः, अहं चानाथो दीनो हीनश्च कश्चित्, इत्येत एव त्रयो वयम् ।

पाठकाः ! अपि स्मरथ ? यदाहन्तेर्मज्जनानन्तरं कुल्यातीरे शवकल्पतित आसं तदा केनचिन्महाशयेन रक्षितोऽभवमिति । स एवायं महाशयो देवनारायणमुखोपाध्यायः । अनेनैवाहं रक्षितोऽभूवम् । प्रथमतश्चायं मां चतुरन्तयाने समारोप्य निजग्रामपुरोधानस्थं सौधमनयत् । तत्रैव पञ्चदशदिवसान्यावदहं चिकित्स्यमानोऽभूवम् । यदा चाहं कार्त्स्न्येन शान्तोपद्रवोऽभवम्, तदाश्वमारोप्य दिनद्वये निजं गृहमनयत् । अथ मेऽत्र वसतो मासद्वयमतीतम् । नास्ति कस्यापि न्यूनता, न वा कुतश्चिदपि कष्टम् । महतानन्देनातियन्ति दिनानि । जन्मान्तरमिवोपयातोऽहमेकदैव सर्वमप्यात्मीयं दुःखजातं व्यस्मरम् । यथा किलात्र निर्मलकुमार आस्ते तथैवाहमप्यास्मि । निर्मलकुमारस्य यादृशं वस्त्रम्, उपानत्, वस्त्रकवचं अन्यच्चासीत्, तथैव ममाप्यासीत् । निर्मलकुमारेण सहैव भोजनम्, पानम्, शयनम्, भ्रमणम्, उत्थानम्, उपवेशनम्, पठनम्, अन्यच्च मे आसीत् । जनाः किल तदा नावैवं प्रतियन्ति, यथा किल निर्मलकुमारो ज्येष्ठः-अहं कनिष्ठो

भ्रातेति । निर्मलकुमारस्तु मत्तो वर्षद्वयेनाधिक आसीत् । तस्य किल शरच्चन्द्रशकलानुकारि फालम्, त्रिजगज्जयोद्यतयेव मदनस्यारोपितज्यं धनुर्भ्रुवौ, विशालायते सरसीरुहस्येव सुन्दरे दळे नेत्रे, चम्पककुसुमसुषमावहां च नासाम्, मन्दस्मिताञ्चितश्च रक्तमधरोष्ठम्, कुन्दकुसुमानामिवाविच्छिन्नसूत्रप्रोतां मालां दन्तानामावळिम्, अवलोकयतो मे स्त्रीभावमिव कामयतेस्म चेतः । किमधिकेन, सर्वाङ्गसुन्दरोऽयं विधिना महतो रूपसारस्य व्ययेनातिचिरकालमनश्रमेण च व्यरच्यत । पुरोभागिनान्तु सूकरजातिमनुसरतामस्मिन् कीदृशी चित्तवृत्तिरासीदिति नाहं जानामि । मम तु दर्शनक्षण एव प्रेमजलार्द्रे लोचने जडतामिवोपयाते नाशकतां गुणदोषौ विवेक्तुम् । सहजसुन्दरं करुणाया इवापरां मूर्तिं तमहं सानन्दप्रेमभरमवलोकयन्नास्मि कदाचिदपि तृप्तः । ज्येष्ठ इव सहोदरे भ्रातरि वृत्तिमहमातिष्ठं तस्मिन् प्रेमसंवलिताम् । सोऽपि कनिष्ठनिर्विशेषमेव मय्यवर्तत । मुखोपाध्यायस्तु नावेकत्र पश्यन्नतृप्यतिस्म । कदाचिच्च ब्रूयात्-"एकत्र किल पश्यन्नहं युवां तुष्याम्यात्मनो जीवितस्येव साफल्यमनुचिन्तयन् । किमन्यदतो मे प्रार्थनीयं नाम, यत्समक्षमेव युवयोर्मे प्राणानां निर्गमनम्," इति । यदा किलावां बहिरटितुं निर्गच्छावस्तदा दर्शकजना बृन्दशोऽनुगच्छेयुः-"पश्यत ! कीदृशाविमावन्यौ रामलक्ष्मणौ" इति वदन्तः ।

ज्येष्ठेनेव सह सहोदरेण निर्मलकुमारेण सहैवमेव कालं यापयामि । पितुर्मातुर्भ्रातुरन्येषां च दुःखं मन्ये नैवास्त्यद्य म इति । मासद्वयाभ्यन्तर एव मनसो मे परिवर्तनमभूदवस्थायाः । निर्मलकुमारमहमार्येति सम्बोधयन्नासं कियत्कालम् । किन्तु मुखोपाध्यायस्यात्रानभिमतिं पश्यन् भ्रातरिति सम्बोधयितुमारभे । न जाने किं मित्यार्येति सम्बोधनं न बहुमनुते मुखोपाध्याय इति । शङ्के गृहवर्तिभिस्सर्वैरप्येवमेव तस्य सम्बोधनात्तत्तुल्यता मे मास्त्वित्यभिप्रायस्स्यादिति ।

इतः परं देवनारायणमुखोपाध्यायविषये किञ्चित्कथयामि । एतादृशो निष्कपटः स्थिरबुद्धिश्चतुर अनागतचिन्तकश्च पुरुषो नाद्यावधि कंचित्क-

दाचिदपि वा दृष्टः श्रुतो वा मया । मुखमस्य सर्वदैव प्रफुल्लमासीत्, विवर्णता तु कदाचिदपि नावालोक्यत वदने । तिष्ठतु कोपः, किञ्चिदुच्चैस्स्वरेणाह्वानमपि कस्यचित्तस्य न मयाश्रूयत । सर्वमपि तस्य कार्यजातं नियमबद्धमासीत् । भगवत्यचला भक्तिर्विहितेषु श्रद्धा चानुपमास्यासीत् । अस्य किल शरीरं दीर्घमांसळं बलिष्ठं चासीत् । यत्किञ्चिदपि वा कार्यमयमात्मानो नान्यसात्करोति,एतावत्सु परिजनेषु सत्स्वपि स्वीयं कार्यं स्वयमेव करोति । अस्य किलाऽऽयानुगुणमितव्ययतां निरीक्ष्याश्चर्यमिव समुदेति चेतसि । विचारालये काष्ठमयी लेखिन्येका निहितास्ते, कियतः कालादियमस्तीति न केनापि ज्ञायतेस्म । निर्मलकुमारस्तु—"यदा प्रभृत्यहं जानाम्येनाम इमेवमेव पश्यामी" ति वदति । एतादृशं चातुर्यं उचितमितव्ययशीलत्वं च किं न जनयति विस्मयम् ! !

अयं च वर्णेन कृष्णः, दृढः पुष्टश्च शरीरेण । निर्मलकुमारस्यास्य च कस्मिन्नप्यंशे व्यत्यासो नासीत् । केवलं वयःकृतो व्यत्यासस्समदृश्यत । शिरसः कियानपि भागः पतितकेश आसीत्, अन्यत्र च केशा अर्धपलिततामुपयान्तिस्म । कूर्चोऽपि तथाविध एवासीत् । दर्शनमात्रेण भक्तिरिव समुदेतिस्म हृदये ।

शीते घर्मे चाविशेषं प्रत्यूष एवोत्थाय सहैव पुत्रेण निर्याति स्माटितुं बहिः । इदानीन्तु मयापि गम्यते सहैवाभ्याम् । एताभ्यां सह प्रातः पर्यटनं मदीयेष्वावश्यकेषु कर्मस्वन्यतममासीत् ।

पर्यटनान्निवृत्तोऽयमुपवेशनगृहे तैलमर्दनं कारयति । नवतोलकमितं शुद्धं सर्षपतैलममुमो लेपयतस्तदीये शरीरे भृत्यौ । अयमेव चाभ्यागतैस्सह सल्लापस्यापि समयः । अहन्तु तदानीं निर्मलकुमारस्य पठनशालायामुपविष्टो यान् कांश्चन ग्रन्थान् पठामि । निर्मलः कदापि पाठशालां प्रति नैव गच्छति, मुखोपाध्यायेन खलु बहव आंग्लवङ्गसंस्कृतभाषाभ्यासंगृहीता आसन्, तेष्वेव यो रोचते तमावां पठावः, तर्कवितर्कादींश्च कुर्वः । उभावुभयोर्गुरू, उभौ चोभयोश्छात्रौ भवावः ।

मुखोपाध्यायो यावत् गृहस्य बहिर्भागे तिष्ठति तावदावामपि सन्निकट एव तिष्ठावः, यदा तु सरसि स्नातो भोजनायान्तर्गृहं प्रविशति तदावां पृथक्भवावः। स्वयं धर्मपत्न्येव निजहस्तेन परिवेविषती भोजयति मुखोपाध्यायं, तदा किलावां तन्निकटे स्थातुमवकाशं न लभावः। किमत्र कारणमिति बहुशोऽनुयुक्तोऽपि निर्मलकुमारो नैव सम्यगुत्तरयति। आवश्यकेऽपि कार्ये समुपस्थिते निर्मल-कुमारो गृहाभ्यन्तरं न विशति। अस्य किल भोजनादिकमपि बहिरेव कुत्रचन गृहे यस्तठनगृहस्य पार्श्वत एवासीद्भवति। अत एव ममापि कदापि अन्तर्गन्तुं समयो नालभ्यत। अत्र पवित्रे परिवारे किमिदं रहस्यम्, न ज्ञायते सम्यगालोच्यमानमपि। यदा किल निर्मलकुमार एव पृष्टो नोत्तरयतिस्म तदाहमपि तत्परिज्ञाने शिथिलप्रयत्नोऽभवं। कोऽनेन ज्ञातेन मे लाभः, अज्ञातेन वा का हानिः।

दशघण्टावादनात्पूर्वमेव मुखोपाध्यायो निर्वृत्तभोजनाविकृत्यो धृतकञ्चुको बद्धोष्णीषो याति विचारालयम्। गमनसमये च प्रियो भृत्यश्शङ्करो नाम धारयत्यातपत्रं शिरसि तस्य। गृहात्कियत्यविदूरे विचारालय आसीत्। दशघण्टावादनकालात्प्रभृति पञ्चघण्टावादनकालपर्यन्तं करोति विचारणम्। प्रतिरविवासरं तथा उत्सवादिदिवसेषु च विरमति विचारालयः। विचारालयगमनसमये वदति स नौ—"गच्छाम्यहमद्य, आसायं युवामेवास्य स्वामिनौ गृहस्य, अस्य च भारो युवयोरेवोपरि निहितो भवति" इति। एवमुक्त्वा च वन्दिषु निरुद्गावलिममे पठत्सु स्वयं धृतोपानत्को याति पद्भ्यामेव विचारालयम्।

गते च मुखोपाध्याये विचारालयमन्यस्य नियन्तुरभावादुभावप्यावां विविधाभिः क्रीडाभिर्यापयावः कालम्। कदाचिदक्षद्यूतेन, कदाचिद्वीणावेणुमुखवाद्यवादनेन, कदाचित्काव्यालापेन, एवमन्यान्यैश्च गच्छति काल आवयोः। परन्तु गानं वाद्यवादनं च नितान्तमेवैकान्ततो भवेत्, यत इदं सर्वं मुखोपाध्यायस्यानभिमतम्। स किल गानादिभिर्बाला विनष्टा

मेवर्न्तीति विश्वसिति स्म । अत एव स नावेतादृशेभ्य कर्मभ्य प्रतिषेधत्य- नुपदम् । इत्थमेवावयोस्समयोऽत्येति स्मानन्देन ।

सायं पञ्चघण्टावादनसमये गृहान्प्रतिनिवृत्तो मुखोपाध्यायो दैनिक सर्वं वृत्तजात पृच्छेत्रौ, ततश्चाभ्यन्तरं गृहस्य प्रविशेत् ।

सायमावां किञ्चिद्भुक्तभक्ष्यौ केनचिद्भृत्येन सहाटितु निर्गच्छावो गृहात् । स्वभावशान्तों प्रकृतेश्शोभां निरीक्षमाणा वय सुखस्पर्शेन सुगन्धिना मन्दानिलेनापहृतश्रमा दीपारोपणसमये गृहान्प्रतिनिवृत्ता भवाम । तदानीं च कृत्स्नमपि गृह प्रज्वालितैर्दीपैरुद्दीपितम्, शीतीभवनाय तत्र तत्र प्रसारिताभिश्शुभ्रतमाभिश्शय्याभिरशून्यम्, निजनिजेषु करणीयेषु सायकालोचितेषु व्यापृतैर्बहुसङ्ख्यैर्भृत्यैरुपेतं दर्शनीयतममदृश्यत । पर्यटनोचितमान्तरीयादिक पृथक्कृत्य धृतान्यवसनावावां निर्वर्तितसायन्तनकर्माणौ रात्रिभोजन कुर्व । रात्रिभोजन चानयो पठनागार एव भवति । एतादृश सुमहदिद गृह इयत्सु जनेषु निवसत्स्वपि दशघण्टावादनात्पूर्वमेव शून्यागारमिव भवति । निश्शब्दतया समधिक्रियते स समय । सर्वेऽपि प्रसुप्ता भवन्ति स्म साय विहितश्रमा पतनसमय एव शय्यायाम् ।

प्रियपाठका । अद्याह कस्यामवस्थायां कथमस्मि कुत्र वेति विदितमभूत् श्रीमताम् । मुखोपाध्यायस्य गृहवृत्तान्तोऽपि सर्वो ज्ञात एव श्रीमद्भि । परमन्यद्याप्यवशिष्ट कश्चित्कथनीयो विषय । नाहमिदानीमसुमर्थं सुस्पष्ट कथयितु प्रभवामि, योऽयमेतावतापि न सम्यग्दृष्टो न सम्यक्छ्रुतो न सम्यक्पर्यालोचित , कथमह त सुस्पष्ट वर्णयितु शक्नोमि । न चैतावताऽस्मिन्विषये नात्यन्ताय किमपि न दृष्ट न श्रुत न पर्यालोचित वा मया । किन्तु दृष्ट श्रुतमालोचित च बहु मया, तथापि नावतरति हृदये किमपि । अथापि यावद्दृष्ट यावच्छ्रुत यावदवधारित च पाठकेभ्योऽनिवेद्य कथमवस्थीयतां मया । पाठका । अवधार्यतामन्न चाय विषयो मम पूज्यनमस्य पितुर्देवनारायणमुखोपाध्यायस्य तृतीयपत्नीमस्यगृहस्य स्वामिनीं चाधिकरोति।

महता परिश्रमेण बहुभिरुपायैरज्ञायतास्याश्श्रीमन्नामधेयम् । तस्या हि " श्रीमती जयकाली देवी" ति सुन्दरतमं नाम ।

जयकाली चेयमेतद्ग्रामसंमीपस्थे भोलाग्रामे वसतश्श्रीमतो हरिदयालुचट्टोपाध्यायस्य प्रियतमा कन्या । तद्ग्रामाधिदेवताया जयकाल्या वरेणेयं परिणते वयसि समुत्पन्नेति चट्टोपाध्यायेनेयं देवताया एव नाम्ना समयुज्यत । बाल्येऽपीयं रूपलावण्यादिभिः प्रसिद्धिमभजतातितराम् । यदा चेयं विवाहयोग्यं वयः प्राविशत्तदा चट्टोपाध्यायोऽस्या धनवता सह विवाहमाचरितुं महान्तमकरोद्यत्नम् । भगवतः करुणया वरोऽपि सकलगुणसम्पन्न ऐश्वर्यवान् समलभ्यत । मम प्रतिपालयित्रा श्रीदेवनारायणमुखोपाध्यायेनास्याः पाणिग्रहमहोत्सवोऽभवत् ।

इति नवमं चक्रम्।

---

## अथ दशमं चक्रम् ।

### ( श्रीमती जयकालीदेवी । )

देवनारायणमुखोपाध्यायस्य विवाहत्रयमासीत् । प्रथमपत्नी निर्मल-कुमारस्य जनयित्री पञ्चमे वयस्येव कुमारस्य, पञ्चतामभजत । तस्या वियोगेन यद्यपि मुखोपाध्यायः प्रथममुन्मत्त इवाभूत् । तथाप्यचिरेण द्वितीयां विवाह्य प्रकृतिमलभत । कुलीनस्य धनवतश्चास्यैकवर्षाभ्यन्तर एवास्मिन्नेव ग्रामे वसतः कस्यचिन्निर्धनस्य कन्यया सहाभूद्विवाहः । अहो कीदृशी कुटिला गतिः कालस्य ! पञ्चमे वर्षेऽपूर्ण एव सापि पर्यत्यजदिमं लोकं विपूचिकयाऽभिपीडिता । ततश्चायं—"नेतः परमहं पाणिं गृहीष्यामि, देहो हि मे शिथिलीभवितुमारमत । अवशिष्टमायुर्यापयिष्यामि भगवतः कमलाजानेः परिचर्यया । इदमेकमेव प्रार्थनीयम्, यदस्य निर्मलकुमारस्य

दीर्घजीवन नाम। नेतः पतिष्यामि बन्धनेऽहम्।" इति कृतप्रतिज्ञोऽपि नापारयदवस्थातु प्रतिज्ञायामात्मन। को वा शृणोत्येतदीय वच, इतस्ततश्च वर्तमाना बन्धवो ज्ञातयश्चागत्य नानाप्रकारैरुपदेशैरेतस्य बुद्धिमन्यथयितुमारमन्त। एतावत्येव समये मोलाग्रामादागता कन्यादातृणा मण्डली। देवनारायणमुखोपाध्यायोऽपि तेषामेव वाग्जाले पतितोऽभूत्। स्वयमेव गत्वा कन्या निरीक्ष्य विवाह निश्चित्याऽऽगमत्। अन्ततश्चात्मनस्सप्तचत्वारिंशे वयसि दशवर्षीया मोलाग्रामवासिनो हरिदयालुचट्टोपाध्यायस्य कन्याया जयकाळीनाम्नया पाणिमग्रहीत्। कियत्येव काले वधूरपि गृहानाजगाम। विवाहेनानेन स दु रूयति सुरूयति वा, नाह जानामि। कथयत ? उपाय एव क परिज्ञानेऽस्य। किन्तु जना कर्णे कथयन्ति "कुत एतदृशी गुप्तिरथ ? किं वारद्वय वञ्चितवन्त यममपि पराजेतुमेव रक्षण क्रियते ? वातस्यापि हि प्रवेशो नाथ सम्भाव्यते तत्र, यत्रास्ते सा वधू।" इति।

अत्र मासद्वय एकदैवाहमन्त पुरमविशम्। यदाहमिदम्प्रथममत्रागतोऽस्मि तदाभिवादनार्थं देवनारायणमुखोपाध्यायेनैवाहमन्तर्नीतोऽस्मि। तदा किल सा लम्बितमुखप्रावरणाऽवर्तत, अत एव तदाप्यह ता सम्यगालोकयितुमशकम्। पाठका मा कुरुत कोप मयि। यद्यत्र वदेयुर्भवन्त-"सत्कुलप्रसूता धनवता विवाहिता सदाचारपरायणा पतिप्राणा सा यदि लज्जया प्रावृतवदनाऽतिष्ठत्, युक्तमेवेद तस्या कुलाङ्गनाया। तव तु सत्पथे वर्तमानस्य का वाऽऽवश्यकता तस्या दर्शने, किं वा प्रयोजनम् ? कुत इद दौःसाहसमार्यमर्यादातिलङ्घने किं वा बीजम्" इति। तत्रापीदमुत्तर ब्रवीमि। यदाऽहमात्मन प्रतिक्षणभव जीवनवृत्तान्त कथयितुमुद्युक्तोऽस्मि, यदा सर्वमपि रहस्यजाल प्रकाशयितुमेवोद्यतोऽस्मि, तदा किमिति किञ्चिदपि वा गोपयामि। यदा येन यथा समागमोऽभूत्, आलापोऽभूत्, तत्सर्वं किमिति न प्रकाशयामि। एव प्रवृत्ते मयि जयकाळीदेव्या रूपमङ्गसौष्ठवमन्यांश्च गुणान् पर किमिति न प्रकाशयामि। देवनारायणमुखोपाध्यायो मे धर्मपिता, जयकाळी देवी च धर्ममाता, तयोर्धर्मत पुत्रभूतोऽह मातर कुतो न पश्येयम्!

अथाषाढो मासः । कियद्भ्यो दिवसेभ्य आकाशे मेघानां गन्धोऽपि न दृश्यते । वृष्टेर्नामैव नास्ति । आदित्यस्तु निजं प्रभावं प्रकाशयति यावद्बलम् । अस्मिन् दिनेऽहं मध्याह्न एकाकी पठनशालायामुपविष्टोऽस्मि । भोजनात्परतोऽद्यावधि निर्मलकुमारो न दृष्टः । कुत्रासौ गत इति न जानामि । अद्यावध्यावयोरेवं वियोगः कदाऽपि नासीत् । यत्र स गच्छेत्तत्र मामपि नयति स्म । अद्यतनस्यास्याऽऽकस्मिकस्य विश्लेपस्य किं वा कारणमिति पर्यालोचनेऽपि नावगम्यते । तस्य प्रियं भृत्यं रामचरणमपृच्छम्, परं सोऽपि वक्तुं नाशक्नुत् । महता घर्मेण विश्लेषेण च निर्मलकुमारस्य विमना इवाहमभवम् । ऐकैकश्येन सर्वाण्यपि पुस्तकानि पठितुमारब्धानि, किन्तु कुत्रापि मनो नालगत् । ततश्चाशयिषि शय्यायाम् । इतश्चेतश्चाङ्गं परिवर्तयन् हस्तौ पादौ च विक्षिपन् कथं कथंचित्क्षणं निमीलिताक्षोऽभवम् । एतावत्येव कस्यचिच्छब्देन भग्ननिद्रोऽभवम्, अपश्यं च पुरतस्स्थितं रघुवीरं नाम भृत्यम् ।

"भवदीयमिदं पत्रम्,गृह्यताम्" इत्येतावदुक्त्वा निधाय मद्धस्ते सम्पुटितमेकं पत्र कृतप्रणामो निरगात्सः ।

पत्रम् ! मदीय पत्रम् ! अनन्तेऽप्यत्र जगति को वा मदीयो नामास्ति, यो मत्कुशलजिज्ञासया आत्मनो वा कुशलजिज्ञापयिषया पत्रं प्रेषयिष्यति ! महता विस्मयेनाहममोचयं सम्पुटित पत्रम् । एकधा द्विधा त्रिधा चावाचयं पत्रम् । सर्वाङ्गेणमभूव रोमांचितः, शिरश्च घूर्णितुमारभत, नेत्रे च नापश्यतां किमपि, कर्णौ बधिरतामभजताम्, शिथिलतामभजन्त सर्वांण्यङ्गानि । तद्धि निर्मलकुमारेण लिखितं हृदयविदारक पत्रम् । तत्र चैवमवर्तत ।

"मम प्रियभ्रातः मजेन्द्र !

त्वमेवैकस्मिन्नी पृथिव्यामस्याम्, त्वदीयमेव जीवनं सुखनरम्, यतस्तव किमप्यात्मीयं नाम नास्ति ! मम तु सर्वमप्येदमस्ति, अस्त्यपर्यन्तं धनम्,

देवतुल्यश्चास्ति पूज्यतमः पिता, अस्ति नाम्ना माताऽपि, किन्त्वस्म्यहमतीव दुःखी । मन्ये नास्त्यहमिव दुःखी जगत्यस्मिन्निति । यदि पुनरस्ति तेऽभिलाषोऽन्तिमे मदीये दर्शने, यदि चेतोऽप्येकदा मां भ्रातृशब्देन सम्बोधयितुमस्ति वाञ्छा, तर्हि हे मदीय प्रियव्रजेन्द्र ! महोद्यानस्य पश्चिमे भागे वटस्याधस्तात् तपस्विना गृहत्यागोद्यतेन भ्रात्रा सम्मिल इति । भवदीयः—

निर्मलः ।"

मन्ये नेदं पत्रम्, अपि तु सहस्रालो वृश्चिकः, सहस्रालो वृश्चिकः, सहस्रफण आशीविषो वा; यतस्तथाविध एवाहं सञ्जातोऽस्मि, यथा वृश्चिकेन फणिना वा दष्टः । हन्त ! हन्त !! शिरसि मेऽशनिनेव पतितम् । अहो ! कष्टम् !! कीदृशीयं भयावहा अचिन्तितोपनता घटना ! किमिदं सत्यमेव निर्मलकुमारस्य पत्रम् । तर्हि कोऽयं विषयः ! आनन्दमयस्यापि निर्मलकुमारस्य हृदयविदारकं कथमिदं लेखनम् । धर्मपितुर्देवनारायणमुखोपाध्यायस्य प्रियः पुत्रोऽपि किमित्यद्य गृहान्परित्यजति ! किमयं स्वप्नः ! अथाहं जागर्मि । किमिदमैन्द्रजालिकम् ! उन्मत्तवदहमुद्यानं प्रत्यधावम् । तदानीं हि मे मनस्तथैकाग्रमभूत्, यथा मार्गस्थं किमपि वस्तुजातमहं नापश्यम् ।

हन्त ! हन्त !! तत्र गत्वा निर्मलकुमारमवनतकन्धरं रुदन्तमुष्णं चाश्रु मुञ्चन्तमद्राक्षम् । असहमानश्च द्रुतपदमुपसृत्यापतं तदीययोश्चरणयोः । किञ्चित्संकुचंश्च निर्मलकुमारोऽवादीत्-"व्रजेन्द्र ! त्वमागतोऽसि ? आगच्छ, एकदा समालिङ्ग माम्, इतोऽग्र जन्मन्यसम्भावितस्यास्य कृते क्षणं भव शान्तचित्तो भव" इति ।

अहन्तु रुदन्नेवावदम् "प्रियभ्रातः ! तूष्णीं स्थीयताम्, किमेवमुच्यते ! किमत्र कारणम्, एतादृशं पत्रं किमिति व्यलिख्यत । अनन्य मां मातरं, पितरं, सम्पत्तिं च परित्यज्य कुत्र वा जिगमिषति भवान् ?" इति ।

निर्मलोऽब्रवीत्-"भ्रातः ! अहं किल तत्र गमिष्यामि, यत्र न सन्ति

जनाः, यत्र वा कोलाहलोऽयं नास्ति, यत्र चायं दारुणस्संसारो न वर्तते। भ्रजेन्द्र! संसारो ह्ययं भयानकः" इति।

किमिदमाश्चर्यम्! कोऽयं सर्वनाशको व्यापारः! निर्मलकुमारस्य मुखादेतादृशं वचनम्! किमयमुन्मत्तः!! पुनरप्यवदम् "भ्रातः! भ्रातः! स्थिरो भव, किमेवमुन्मत्तवदुच्यते! किमभूत्, सर्वं स्पष्टमुच्यताम्। संसारपरित्यागवचनमिदं भवन्मुखात्कुतः! पतामि चरणयोः, नेतः परं मां सन्देहजाले पातय, बहभूत्" इति।

किंचित्स्थिरो भूत्वा निर्मलकुमार एवमवोचत्-"वदिष्यामि, सर्वं वदिष्यामि, कथनायैव हि त्वमाहूतोऽभवः। अन्यथा पत्रलेखने वा मे काऽऽवश्यकताऽऽसीत्। अस्यार्थस्य श्रवणात्पूर्वमेव त्वया कियन्तोऽपि विषया ज्ञातव्या आलोचनीयाश्च वर्तन्ते। अहमेक एव पुत्रो भूत्वापि गृहस्याभ्यन्तरं किमिति न विशामि? अपि जानास्यत्र किमपि कारणम्? कृष्ण कृष्ण! किमिदं सर्वमपि मयैव वक्तव्यम्"। (एतावदुक्त्वाऽरुदन्निर्मलः। अहमपि निरुत्तर एव तस्य वदनमालोकयन्नासम्। कियत्कालानन्तरं पुनर्निर्मलोऽवादीत्) "नाथ जीवति मे जननी, यदि सा जीवेत्, किमीदृशी मे दशा स्यात्। इतः परमहं सर्वं वदामि किंचिदपि न परित्यक्ष्यामि, श्रूयतां-यदाहं पञ्चवयस्कोऽभूवं तदैव मे माता पर्यत्यजदिमं लोकम्। ततश्च पिता मे द्वितीयं विवाहमकरोत्। अलभ्यत द्वितीया मया माता। तदा किलाहं बाल एवासम्,अत एव तामेव मातरं जानन्, तामेव अम्बेति सम्बोधयन्, तस्या एवोत्सङ्गे परिवर्तमान आसम्। मातुरभावे बालानां यद्यत्कष्टं सम्भावितं तदहं न जानामि। कीदृशोऽहममभाग्यः! सापि मे जननी कियत्येव काले जगाम परं लोकम्। इतःपरमपि काचिन्माता मयाऽलभ्यत, सैवेयम्। कथमितःपरमहं कथयामि! लज्जा किल जडीकरोति जिह्वाम्! जीवनान्मरणमहं मन्ये श्रेयः। यामधिकृत्येदं कथयामि किमियं सैव माता! न हि न हि राक्षसी पिशाची वा, मन्ये नरकेऽपि न स्यात्तादृशो जीवः। सर्वथाऽस्म्यहं नष्टः। निर्धनोऽस्मि जातः। प्राणा अपि यान्ति" इति।

अहमवोचम्-"भ्रातः किमपि कथयितव्यम्, गृहान्प्रत्यागम्यताम्, इतः परमहं किमपि न वाञ्छामि श्रोतुं गृहानागच्छ, " इति ।

निर्मलोऽवादीत्-"गृहान्प्रति गन्तव्यम् ! पुनः किं तत्रैव नरके गच्छेयम् ! नात्र जन्मनि गच्छेयमहम् । अस्तु, श्रूयतामितःपरमपि । महाचतुरो महाबुद्धिरपि तातो मे कृष्णसर्पिणीमिमां निजं गृहमानयत् । वस्तुत एवेयं कृष्णसर्पिणी मनुष्यरूपच्छन्ना । प्रथमतः किलेयं न जानामि केन वाऽभिप्रायेण मां बहुधा आलोकमानाऽऽसीत् । अस्याश्चुम्बनालिङ्गनवीक्षणादीनां कारणमहं तदा ज्ञातुमसमर्थ आसम् । आदौ चेयं मयि नितरामेव प्रीतिमत्यभूत् । परन्तु न ममैतदीयं कृत्यं किमपि प्रियमासीत् । ततश्चैकस्मिन्दिने ( हन्त ! हन्त !! ) कीदृशीमियं मयावहां वाचमब्रवीत्, नाहमद्य वक्तुं शक्नोमि । रुदन्नेवाहं कम्पितसर्वाङ्गो बहिर्निरगाम् । ततस्तातमप्यहं कियन्तं कालं नाद्राक्षम् । पठनागारे एकं दिनं रात्रिं चैवमेवायापयमहमनिद्रो निराहारश्च । बहवश्च ममाह्वानायागमन्, तातोऽपिद्वित्रवारानागमत्, परं त्वहं नैवोदघाटयं कवाटिकामन्तर्दत्तार्गलाम् । यदा च किंचिच्छान्तोऽभूच्छोकावेगस्तदाहं बहिर्निरगाम् । सर्वैश्चैवमवस्थानस्य कारणं पृष्टोऽहमन्यदेव किंचिदवदम्, न त्विमां पापमयीं कथाम् । एवमेव शोकपीडितस्य मे बहवो दिवसा व्यतीयुः । गृहाभ्यन्तरे गमनागमने अहं तत एव पर्यत्यजम् । अशनं पानं शयनं सर्वमपि बहिरेव क्रियमाणमासीत् । यथा पुनस्तस्या दुष्टाया मुखं पुनर्न दृश्येत तथाऽहं प्रार्थये ।"

अहमवदम्-"भ्रातः ! अहमत्र किंचित्प्रष्टुमिच्छामि । यदा किल भवानेवं गृहाभ्यन्तरगमनागमने पर्यत्यजत्तदा तातः किं किमपि नावोचत्' ।

निर्मलः-"सम्यगिदं पृष्टं त्वया, यदाऽहं बहिरेव स्थातुमारभे, तदा तातः किमपि नावदत् । नाहं जानामि तातो मे जानात्यमुमर्थं नवेति । किन्तु सगूढमेव मदीयं व्यापारं परीक्षमाणोऽवर्तत । अस्यामेव दशायां त्वमागतोऽभूः । ततःपरं चाद्याहं यदपश्यं नाहमिदं वर्षसहस्रेणापि विस्मरिष्यामि । अनेनैवार्थेनाहं संसारत्यागी भवामि ।"

ततः परं च कियन्तं कालं निश्शब्दताऽऽसीत्। कस्यापि मुखात्किमपि न निस्सरतिस्म। नेत्राभ्यां तु निर्मलस्य गङ्गाया इवाश्रुणो धारा प्रावर्तत। उभावप्यावामुभौ पश्यावः।

निर्मलः-"अद्याहं मध्याह्ने आभ्यामेव लोचनाभ्यां मम पापिनीं विमातरं शङ्करनाम्ना भृत्येन सह शयानामपश्यम्। इतः परं कस्यापि प्रत्युत्तरं न देहि। मा कुरु यत्नं मम बुद्धेरन्यथाकरणे। यद्यदहं वदामि तत्सर्वं शृणु। हरदेवपुरे मम मातृवर्गे कश्चिदस्ति, तत्रैवाहं यामि। नास्त्यन्यत्किमपि स्थानम्, तत्र गमन एव मनसो मे शांतिर्भवेत्। अद्याऽहमिदमेव त्वां प्रार्थये, नेममर्थं कस्मा अपि प्रकाशय,निश्चितमहमुक्त एव स्थाने प्रच्छन्नः स्थास्यामि तातो मे भवतु नितरामेव दुःखितः, पृच्छतु वा बहुधा त्वाम्, त्वं तु न विचलास्याः प्रतिज्ञायाः। मन्येऽहं ते त्वां बहुशो निर्बन्धेन प्रक्ष्यन्तीति, परमहं त्वां साञ्जलिबन्धं प्रार्थये, न बाल इव सर्वमिदं तेषां सम्मुखे प्रकाशय। मम गमनानन्तरं यद्यदत्र भवति तत्सर्वं कृपया हरदेवपुरे नीलरत्नहालदारस्य गृहे मह्यं पत्रद्वारा ज्ञापय। त्वं च सावधानस्तिष्ठ। मां च न विस्मर।"

इदमन्यच्च शृण्वन्नहमुपविष्ट एवास्मि, निर्मलकुमारस्तु न दृश्यते। न जाने स कदा वेतो निर्जगामेति। हन्त! किमितो भविष्यति? हन्त! हन्त!! धनवतस्सर्वमान्यस्य शोभनाचरणस्य देवनारायणमुखोपाध्यायस्यैकः पुत्रो निर्मलकुमारोऽपि संसारानलदग्धः पलायितोऽभूत्। हा धिक्! संसार! किमप्रतिहतप्रसरोऽसि सर्वत्र। कष्टम्। किमिदमेव तव दारुणतासर्वस्वम्! अहमस्मि निरात्मीयः, संसारात्पलायितश्च, यदीच्छसि कामं मामेव त्वदीयेषु पातय, पेषय चास्थिपेषं, सर्वसहोऽस्मि वज्रहृदयः। न काचिदस्ति मे क्षतिः। परं तपस्विनं निर्मलकुमारं किमिति विमर्दयिषसि? देवनारायण मुखोपाध्यायस्य जीवनं हि मया स्वर्गतुल्यमिति ज्ञातमासीत्, अद्यतु नरकादपि दारुणमवलोक्यते। भगवन्! किमियमेव तव लीला? दयालो किमि-

तोऽपि दर्शयितुमिच्छसि ? अलमलमेतावता । यद्येतादृशी तवेच्छा, किमिति सुखमिव प्रथमतः प्रदर्शितवानसि ।

एवमादि विचिन्तयन्नेवाहं ततः प्रातिष्ठे । समीप एव कुत्रचित्कुञ्जे कश्चित्फुसफुसात्कारोऽश्रूयत । सावधानोऽहं श्रोतुमारभे । अज्ञासिषं च स्त्री-पुरुषावुभौ मन्दमन्दं सल्लपन्तौ । तयोश्च सल्लापोऽयम्—

स्त्री-"तर्हीदमेव कुरु, अस्मिन्नेव दिने त्यज दासभावम् ।"

पुरुषः-"अकस्मादद्य दासभावं त्यजन्नहं किमत्र कारणं वदिष्यामि ?"

स्त्री-"किमेतावदेवार्थे त्वं भीतोऽसि । श्रूयतां झटित्येव सर्वं कथयामि कथयितव्यम्, यतस्तस्याऽऽगमनसमयो निकटे भवति । पश्य, अद्यैवाहं कोपागारं प्रविश्यान्तर्दत्तार्गळा तिष्ठामि । यदा स आगमिष्यति तदाऽहं बहु प्ररुद्य तं निष्कासयामि । त्वमपि तदैव चरणयोः पतित्वा सविनयं दास्यत्यागं विज्ञापय ।"

पुरुषः-"सर्वमेतदहं करिष्यामि, किन्तु किंवा कारणमुक्त्वा मया दास्यत्यागः कथयितव्यस्तत्तु कथ्यताम्" ।

स्त्री-"पुमांस्त्वमस्यहं वा ? किं विना स्पष्टकथनं किमपि हृदयमेव नावतरति ? साधु, समीचीनः पुरुषोऽसि । अस्तु, श्रूयतामवधानेन" । कस्यायं स्वरः ? नायं परिचितो मे स्वरः । पुरुषंत्वहमभिजानामि । अयं हि स एव नराधमश्शङ्करः, यस्य कृते निर्मलेन सर्वं परित्यक्तम् । तर्हि किमियमेव निर्मलस्य विमाता ? किमियमेव गृहस्वामिनी ? अनुमानेन त्विदमेव ज्ञायते । दुष्टेयमात्मनो दोषान् गोपायितुं शंकरेण न जाने किं सल्लपति । पाठकाः आगच्छत । भवन्तोऽपि शृणुत । कदाचिदत्र कश्चिद्धवानप्यालापस्स्यात् । पुनरहं श्रोतुमारभे । स्त्री जगाद–

"यद्यदहमवदम्, तत्सर्वमवधृतं किल ? प्रथमतस्तु रोदनं सम्यक्कार्यम्, ततश्चैवमुक्त्वा दास्यत्यागोऽभ्यर्थ्यताम्-'स्वामिन्या रोदनं श्रुत्वा यदाऽहमुपर्यगच्छम्, तदा कुमारं स्वामिन्याः केशान्तिकपर्यन्तं प्रलपन्तं

घावाच्यानेव शब्दानद्राक्षम् । स्वामिनीमुन्मोचयितुं प्रवृत्तं च मां सम्यक्प्रहृत्य निष्कासयामास । विनाऽपराधं किमित्यहं सहे ताडनान्येवम्। तेल्लंयं दृष्ट्वा यावदवशिष्यते वेतनं दीयताम्, गच्छामि निजान्गृहानि' ति । किमवधृतम्, ! ततश्चास्मिन्नेव ग्रामे कुत्रचिदन्तर्हितास्तिष्ठ । मध्याह्ने च प्रतिदिनं यथाऽऽगच्छसि तथैव सन्दर्भानुसारेणागच्छ । अद्य व्ययाय कियदपि गृहाण । मदुक्तं किमपि न विस्मर । अस्तु, गच्छ, नेतो विळम्बं कुरु " इति ।

ततश्च तावुभावप्यन्धकारे कुत्र वा जग्मतुरिति नाहं जानामि ।

अहमपि ततः परं तत्रावस्थानं व्यर्थमवगत्य प्रधानद्वारमागमम् । कीदृशमिदमाश्चर्यम् । हे स्त्रियः ! धन्यं त्वदीयं चरितम्, ! धन्याऽसि जय काळि देवि त्वम् !

इति दशमं चक्रम् ।

---

## अथैकादशं चक्रम् ।

सर्वमपि कार्यजातं यथापूर्वमेव प्रचलति । नास्त्यन्यथाभावः कुत्रापि । नास्ति च कश्चिदपि कोलाहलः । एतादृशो भयानको व्यापारो निर्वृत्तः, निर्मलकुमारः प्रमुषितः, किन्त्वस्य कृते न काऽपि चिन्ता दृश्यते, न चाऽन्वेषणादिकं प्रचलति । यथा सर्वं कार्यं शान्तभावेन पूर्वं भवेत्तथैवेदानीमपि भवति । कालस्तु न कस्यापि वशगः, अत एव सोऽपि यथापूर्वमेव गच्छति, मुखोपाध्यायस्याचरणेषु न कुत्राप्यन्यथाभावो दृश्यते । सर्वमपीदं यथापूर्वमेवास्ते, केवलं नास्ति निर्मरकुमार एकः । यावत्पूर्वं मुखोपाध्यायस्सल्लपेत् तावदिदानीं न सल्लपति, यावान् पूर्वं म आसीदादरस्तावानिदानीं न दृश्यते, किन्तु सर्वथाऽऽनादरोऽपि नास्ति । शरीरं च तस्यान्तर्गतमौदासीन्यं प्रकटयतिस्म । अहमपि दिनेदिने दीनदीनो

भवामि। अथाहं निर्मलकुमारस्य पठनागारे वसाम्येकाकी। शयनासना-शनाच्छादनादिकं विना नास्ति मेऽन्यत्किमपि कार्यम्। सर्वदा चिन्ताम्लानवदनः कृत्याकृत्यविवेकविधुर उन्मत्त इव तिष्ठामि। यदा यदा च मनसि समुदेतिस्म 'इतो निर्गच्छेय' मिति, तदा तदा निर्मलकुमारस्य वचनं स्मरन्निवृत्तो भवामि तथाकरणात्। यतस्स आदिशन्मामत्रत्यवृत्तान्तज्ञापनाय। वस्तुवस्तु तादृशं स्थानमेव किमस्ति, यत्राहं गत्वा निवसामि।

एतद्गृहवासिपूभावन्यावपि दृष्टिगोचरौ न भवतः। तत्रैको निर्मलस्य प्रियो भृत्यो रामचरणो नाम, यो बहु मत्स्य वैतनिकतामत्यजत्; अन्यश्च स एव शंकरः, यः किलास्यानर्थजातस्य मूलम्। मन्ये शंकरेण निजस्वामिन्युपदेशानुसारेणाचरितमिति, परं न जाने कदा कथं तेन दास्यपरित्यागः कृत इति। इदमप्यहं न जानामि मुखोपाध्यायेन जयकालीविषये किमाचरितमिति, यतोऽहं बहिरङ्गभूतो जनो बहिरेव तिष्ठामि। देवनारायणमुखोपाध्यायस्यौदासीन्यंतु सर्वतः प्रकाशमानमन्तर्गतां महतीं पीडां प्रकटयतिस्म। न किमप्यत्राश्चर्यं यदीदमौदासीन्यं निर्मलकुमारनिमित्तकमेव स्यात्।

मध्यंदिनस्यायं समयः। सर्वत्र निश्शब्दता वरीवर्ति। अहमपि निर्वृत्तभोजनो निजे पठनागारेऽस्म्येकाकी। नानाविधाभिश्चिन्ताभिराकुलमिव मे चेतः। मध्येमध्ये निर्मलकुमारस्य स्मरणेनाश्रुप्लाविते भवतो नेत्रे। अहो! राजकुमारो भूत्वाऽपि निर्मलकुमारोऽद्य भिक्षुकसंवृत्तः। कुत्र तद्विपुलमैश्वर्यम्, कुत्र चायं गृहत्यागः। हरे कृष्ण! किमिति विधात्रा स्त्रियो निर्मितास्स एव जानाति। सुन्दरतमं विकसितं कमलं पद्भ्यां निष्पीडयन्त्या को वा लाभस्सम्पादितः पिशाचिनि त्वया? औरसेऽनौरसे च पुत्रे को वा भेदस्त्वयाऽनुशोचितः। जननीभूतया त्वया निर्मलकुमारे किमिति दुष्टोऽभिलापः कृतः। आश्चर्यम् आश्चर्यम्। धर्मःकिमेकमपि निजं पादं संचुकोच! नरकेऽपि किमस्याः पापाया लभ्येतावकाशः?।

अचिन्तितमेव पार्श्वगृहे कस्यचिदूर्ध्वदेशादधः पतितस्येव गुरुतरस्य वस्तुनश्शब्दोऽश्रूयत । चिन्ता च मे महाऽभवत् । मनश्चैकाग्र्यं कृत्वा शयिषि । हन्त ! हन्त !! पुनस्स एव फुसफुसात्कारः कयोश्चित्सल्लपतो-रश्रूयत न जानाम्यद्य कीदृशोऽयं सल्लाप इति । न शक्नोम्यद्य पुनःकोवा भयानको व्यापार उपस्थितो भविष्यतीति ज्ञातुम् । श्वासमपि निरुन्धन्नहं श्रोतुमतिष्ठम्, किन्तु किमपि श्रोतुं नाशकम् । गच्छतु चुल्याम्, नेतः किमपि श्रोष्यामि, किमनेन मे श्रुतेन वा । यस्य यस्य यद्यद्रोचते करोतु तत्तत्ससः । किमिदमपि मे ललाटलिखितम् ? किमित्यात्मानं वृथैवायासयिष्यामि ? । परं किं करोमि, निर्मलस्य हि वचनं स्मृतं न मां तूष्णीमवतिष्ठमानमभ्यनुजानाति । सखात्मनो गमनानन्तरं यद्यद्भवति तत्तत्सर्वं ज्ञापयितुमाज्ञापयन्माम् । कथमिदं विस्मरेयमहम् ? । तर्हि गत्वा शृणोमि, कीदृशोऽयं सल्लाप इति ।

उत्थाय चाहं भित्तिनिकटं गत एकाग्रः श्रोतुमारभे । एवं चाश्रूयत—

"रे नैवम्,न जानासि त्वम्, अद्य सायमेव कार्यं किमिति नारभसे । घण्टाद्वयवादनस्यायं समयः, ते च घण्टाचतुष्टयवादनसमये गृहानागमिष्यन्ति, सर्वं च वस्तुजातमस्ति सन्नद्धम्, किमितो विलम्बेन ?"

"नेदं युक्तमिव, इदानीं त्वं वदसि धीरेव, कार्यकाले तु स्वभावसिद्धमधीरत्वमवलम्बिष्यसे, ततः कथं स्यात् । ममत्विदमेव जनयति भयम् । प्रभुरपि महासमर्थः । तदीययोर्नेत्रयोर्धूलीप्रक्षेपः किं हेला । अतश्च नाहमिममुपायमङ्गीकरोमि, अन्य एव कश्चिदुपायोऽवलम्बनीयः ।"

"सम्यगाच्छादिता तिरस्करिण्या ते बुद्धिः, रे उन्मत्त, मां विना को वैतादृशेषु कार्येषु पादं प्रसारयिष्यति ? प्रभोः पुरतश्च मां विना कः स्थास्यति ?"

"भर्दायाभिप्रायेण तु नायं समीचीन उपायः । अस्त्यवकाशोऽपि महान्, किमियता शैघ्र्येण, अद्य मास्तु । यत्किञ्चिदपि वा कार्यं कर्तव्यं

चेत् सम्यग्भावि समालोच्यैव कार्यम् । यदि कदाचिद्गृहीता भवेम, किं ततोऽप्यनर्थकरमस्ति । अथेदं कार्यम्, यन्मयोक्तं तदेव कुरु, सर्पोऽपि मरिष्यति, दण्डोऽपि न नंक्ष्यति ।"

"इदमपि युज्यत एव, यच्च त्वं वदसि तदपि । तर्हि त्वदुक्तेनैव पथा कार्यं भविष्यति " इति ।

पुनश्चतुर्दिशं निश्शब्दता । यौ सल्लपन्तावासातां तयोः पदशब्दोऽपि न श्रुतः, न जाने कथं तावन्तर्हिताविति ।

"हन्त ! पुनः केयं मन्त्रणा ? कावेतौ ? कोवा विषयः ? विधे ! न जाने कीदृशी विपत्पुनरुपस्थास्यनीति । मन्ये देवनारायणमुखोपाध्यायमधिकृत्यैवेयं मन्त्रणेति । गृहस्वामिनीं विना कोऽन्य एतत्कार्यं कुर्यात् । किं तत्कार्यम् ? "सर्वं वस्तुजातमस्ति सन्नद्धम्"-कोऽस्य शब्दस्यार्थः । भगवन् संशयभञ्जक निवर्तय मे संशयमिमम् । नाहं किमपि निश्चेतुं शक्नोमि ।" इत्येवं चिन्तयन्नेवोद्भ्रान्तचित्तः पुनरागत्य शय्यायामशयिषि ।

अचिन्तयं चैवम्–"बहुधा पर्यालोचयन्नपि निश्चेतुं न शक्नोमि । कावेताविल्यपि नाहं जानामि । परमेतावत्तु ज्ञातं नास्मिन् दिने किमप्येतौ करिष्यत इति । मन्ये पुनः कदाचित्करिष्यत इति । किन्तु अद्यप्रभृति सावधानेन भाव्यं मया । देवनारायणमुखोपाध्यायेऽपि दत्तदृष्टिना स्थेयम्, तदीयमप्याचरणं सम्यङ् निरीक्षणीयम् " इति ।

एवं चिन्तयत्येव मयि सायाह्नोऽपि समुपागात् । देवनारायणमुखोपाध्यायोऽपि विचारालयात्प्रतिनिवृत्तोऽभवत् । कृत्स्नेऽपि गृहे निश्शब्दता समजायत । सर्वेऽपि भृत्या निजनिजेषु व्यापृता अभवन् । मुखोपाध्यायोप्यन्तःपुरं प्राविशत् ।

अहमपि निर्वृत्तावश्यककृत्यो बहिर्निर्गत्य रथ्यायां तत्र इतः पर्यटन्नासम् । तदैव हरिदयाळुनामा यदशंकरस्थानन्तरं तत्स्थानमापद्यागत्य

मामवदद्भृत्यः—"देवो भवन्तमन्तराह्वयति, मन्ये किंचिदस्त्यादावश्यकं कार्यम्" इति । उक्त्वा चैवं क्षणमप्यनवस्थाय प्रातिष्ठताऽसौ ।

अन्तः ! अद्य मामन्तराह्वयति देवः ! किमिदमाश्चर्यम् ! अत्रागतस्य मे मासाब्दद्, एकदाऽपि दृष्टिरपि न तत्र न्यधायि, किमित्यद्याहमन्तराहूये ! यदा निर्मलकुमारो निरगात्तदाप्रभृति मया सह शब्दमेकमप्यसल्लपन्मुखोपाध्यायः किमित्यद्य मामाह्वयति ! किं निर्मलकुमारविषये किमपि प्रक्ष्यति ! तेनातोऽहमवश्यमेव गमिष्यामि, सति सन्दर्भे तामपि दुष्टामहं द्रक्ष्यामि । तस्या मुखे नेत्रयोश्च कीदृशं कौटिल्यं प्रकाशत इति द्रक्ष्यामि । तस्या हावभावादिभिर्मोध्याह्निकसल्लापविषयः किंचिदपि वा ज्ञायते नवेति पश्यामि । हा कष्टम् ! निर्मलकुमार ! यथा त्वं सांसारिकमनर्थजातं निरीक्ष्य त्यक्तसंसारोऽभवस्तथाऽहमपि । इयानेव व्यत्यासोऽस्त्यावयोः,त्वया संसारःपरित्यक्तः, संसारेणाहंपरित्यक्त इति । आश्चर्यम् ! आश्चर्यम् !! कले धन्योऽसि ! संसार त्वमपि धन्योऽसि ! धन्याऽसि जयकालिदेवि त्वमपि !

इति एकादशं चक्रम् ।

---

## अथ द्वादशं चक्रम् ।

### ( सुखाभिवृद्धिः । )

सुन्दरतमे सर्ववस्तुसमलंकृते कुत्रचिच्छयनागारेऽहमिदानीमस्मि । चतुर्ष्वपि पार्श्वेषु भित्तिलम्बितानि तैलवर्णचित्रितानि दर्शनीयतमानि देवतानां चित्राण्यभिपतामिवार्पयन्ति दर्शकानाम् । अधश्च मृदु सुखस्पर्शं नानावर्णविचित्रं रत्नकम्बलमास्तृतं रत्नमयमिव करोति शयनागारम् । दक्षिणभागे वातायनस्य निकट एव बहुमूल्यस्सौवर्णस्सितप्रच्छदपटच्छन्नया श्लक्ष्णया मृदुतुरया तूलिकया सनाथः पर्यङ्को वर्तते । तत्र तत्र चानर्घतमाः पट्टास्तरणास्तृतास्सुखोपवेशिन्यस्सुखशायिन्यश्च निहिता बहुशो दृश्यन्ते ।

मध्यतश्चागारस्य कुन्नचित्रिपादवृत्तपीठिकायां सुन्दरतमं राजतं कुसुमनिधानमेकं निहितमास्ते, यतो निर्गतस्सुगन्धो वातपोतेन प्रसारितो मदयति मनांसि दर्शकानाम्। पटलाधारदारुलम्बिनि वलये निबद्धः पञ्चविंशतिशाखो दर्पणदीपो नितरामेव शोभयत्यगारम्। इतस्ततश्च लम्बमानानि दीर्घविपुलानि नानावर्णानि व्यजनान्यन्यादृशीमेव कल्पयन्ति चेतसो वृत्तिम्। स्फटिकमय्यस्सुरूपा गन्धर्वमूर्तयो द्वादश हस्तेषु धारयन्ति दर्पणमयान् दीपान् तत्र तत्र निहिताः। किं विवरणेन, सर्वतश्च स्वलंकृतं शयनागारमिदं राजकीयनामात्मनोऽनुरूपमेव बोधयति। क्षणमात्रएवेदं शयनागारमहं कात्स्न्र्येनावालोके। अपश्यंच युगळमेकं स्त्रीपुरुषयोस्तेजस्तिमिरयोरिवायुक्तसम्मेळनम्।

एकस्मिन् पर्यङ्के पूज्यतमो मे धर्मपिता देवनारायणमुखोपाध्यायः, तत्पुरत एवान्यस्मिन् पर्यङ्के तस्य धर्मपत्नी हीनतमुखी जयकाळीदेवी चासाताम्। समीपमुपगतं च मां मुखोपाध्यायो महताऽऽदरेण सस्नेहं हस्ते गृहीत्वा निजनिकट एवोपावेशयत्। अहमपि संकुचन्किंचिद्वदन्नुपाविशम्। ततश्च मुखोपाध्यायो मामेवमवदत्।

"अथ त्वदुपरि बहवः प्रश्नबाणाः प्रक्षिप्यन्ते, सर्वेषां सम्यगुत्तरं देहि। प्रथमतश्चेदं कथय, कोऽसि त्वम्" इति।

अहमपि किंचिदप्यविलम्बमान एवावदम्-"स्वयमेव न जानाम्यात्मानमद्यावधि कोऽहमस्मीति। यच्च यावदहं जानाम्यपि, तत्तु पूर्वमेव न्यवेदयं श्रीमतां सन्निधौ। अन्यच्चेदमहं जानामि 'श्रीमन्तो मे धर्मपितरः अहं च श्रीमतां धर्मतः पुत्र' इति" इति।

देवनारायणमुखोपाध्यायोऽब्रवीत्-"साधु, नेतः किमपि कथनीयमस्ति, त्वम्मे धर्मतः पुत्र इति सत्यमेवेदम्। अस्तु, अपि जानासि कारणं-यदद्य नियममुल्लंघ्य त्वं मदीये शयनागारे समाहूतः!" इति।

अहमवदम्-"नहि नहि, नाहं किमपि जानामि, कथं वा ज्ञायतामिदं मया श्रीमतां हृदये निगूढम्" इति।

देवनारायण....योऽब्रवीत्-"अस्तु, शृणु किंचिदन्यदपि वदामि, यद्यदहं पृच्छामि, तस्य तस्य कथयोत्तरं मन्दमन्दम् । अद्यावधि मया निर्मलकुमारस्य चरित्रमपि निर्मलमेवागृह्यत । स्वप्नेऽपीदं नाहमज्ञासिषं निर्मलस्य चरितमेतादृशं निन्दनीयमिति । त्वमेव तावत्कथय मातरि विमातरि च कोवा भेदः ! धिक् धिक् एतादृशेन दुराचारेण किमिति पुत्रिणं मां चकार विधिः, इतोऽप्यपुत्रतैव हि वरम् । शृणु व्रजेन्द्र ! इतस्तं त्वं दुर्वृत्तमधिकृत्य किमपि मास्म मन्निकटे कथयः । तस्यैवं गुप्तमेव पला-यने कारणमप्यहं सम्यग्जानामि । दुष्टेन तेन सत्यामस्यां पशुवदाचरित-मित्यत्र नास्ति सन्देहलेशोऽपि । इदन्तु तेन साधु कृतम्, यदत्र क्षणमप्य-विलम्ब्य पलायितम् । अन्यथा हि पुत्रहत्यादोषोऽपि मां स्पृशेत् । आस्तां व्रजेन्द्र ! गमनसमये स त्वां किं किमकथयत् !" इति ।

अहन्तु स्तम्भ इव तूष्णीमतिष्ठम् । मन्ये शरीरस्थेन रुधिरेणाम्भस्ता समाश्रिता । निर्मलस्य पितुर्मुखादेतादृशं वचनम् ! निष्कलङ्कस्य निर्मलस्यो-पर्ययं कलङ्कः ! हन्त ! हन्त !! कीदृशः कालस्य विपर्ययः !

विवर्णतामिवाभजन्मे शरीरम् । देवनारायणमुखोपाध्यायकृतानामेषां प्रश्नानां किमुत्तराणि ? हा धिक्,किमिदमपूर्वं मिथ्यामिश्रितं चातुरीचक्रम् ! कोऽत्र मिथ्या वदति ! निर्मल उत तस्य माता ! निर्मलस्तु नैतादृशः, स तु वस्तुत एव निर्मलः । यदाकिल स प्रातिष्ठत, तदाऽऽभ्यामेव नयनाभ्यां रुदन्नश्रु च मुञ्चन्नवलोकितो मया । तादात्विकी च तस्यावस्था न कृत्रिम-तया सम्भावयितुमलम् । अत एव न निर्मलः पापाचारोऽपितु पुण्यात्मा । अस्या एवाष्टादशवर्षदेशीयाया युवत्याः कृत्यमिदं क्रूरत्नमनर्थमूलम् । अस्या एव दुष्टाया रूपजालेन वद्धोऽयं वृद्धो बुध्याऽपि सन्त्यक्तः । यद्भावि तद्भवतु, अहं तु कदाऽपि मिथ्या न वदिष्यामि । यदहं जानामि तदेवाहं कथयिष्यामि !

देवनारायणमुखोपाध्यायः पुनरवोचत्-"व्रजेन्द्र ! किमित्येवं मौन-मवलम्बितं त्वया । सत्यं कथय, किमुक्त्वा स इतो निरगात् । मन्ये स

एवमुक्त्वा पलायितवानिति-"मम विमाता कदाचिन्मां छलेन कुत्रचिद्गृहे नीत्वाऽवाच्यमेव वक्तुमारभत, अत एवाहमिदं कृत्स्नमप्यैश्वर्यं परित्यज्य पलायितो भवामि' इति । इदमेव च सर्वं सत्यं ज्ञात्वा गृहान्नागतस्त्वम् । अद्यावधि शब्दमेकमपि मह्यं नावदः । किम् ? इदं सर्वं सत्यमेव खलु"इति।

अहं च साश्रुनयनस्सगद्गदमवदम् "क्षम्यतामयं जनः,नेतोऽपि निर्मलस्य निन्दामहं श्रोतुं शक्नोमि । श्रीमन्तस्तु निर्मलस्य पितरो मम च पालयितारः । यदि मामितो निष्कासयितुमिच्छथ, कामं निष्कासयथ, नास्ति मेऽत्र किञ्चिदपि दुःखम् । परं निर्मलस्योपरि नेतो वज्रसमानि निन्दाक्षराणि प्रयोक्तव्यानि । एतादृशैश्च मद्वचनैर्मास्म मां सङ्कोचे पातयत" इति । एवमुक्त्वा चाहं तदीययोश्चरणयोरपतम् ।

किञ्चिदिव कुपितस्सोऽवदत् "तर्हि किमयं सर्वोऽपि पतिव्रतायाः निरपराधाया मे धर्मपत्न्या एव दोष इति वदसि ? इदं तु न सम्यगिव भाति । किं कदाऽपि केनचिच्छ्रुतम्, माता निजे पुत्रे एवमाचरितामिति । किं याऽपि काऽपि वैवं कुर्यात् ? किमिदं सम्भावितम् ?" इति ।

अहमपि सधैर्यावष्टम्भमेवमवदम्-"यदि चेदमसम्भावितम्, तदेदं वा कुतस्सम्भाव्यते ? किं कदापि केनचिदपि वा श्रुतं पुत्रेण मातर्येवं पापमाचरितमिति । तात ! बध्नाम्यञ्जलिम्, क्षम्यतामयम्, इतः परं नैवविधानर्भानय प्रष्टव्यः । गौरवेण यन्त्रितस्त्वहं किमपि न वक्तुं शक्नोमि । घूर्णते मे शिरः । प्रयस्यन्नपि नाहं विस्मरामि निर्मलकुमारम्" इति ।

देवनारायणमुखोपाध्यायस्तून्मत्त इवाधैरुदघुषत् "पश्यत, मणीन्द्रः किं वदति ? कस्माद् शृणुयाम्, कुत्र विश्वसेयम्, युष्माभिस्त्वहमुन्मत्त एव कृतोऽस्मि" इति ।

जयकाली सकोपमवदत् "मया त्वमुन्मत्तः कृतः ? उत त्वयाऽहमुन्मत्तीकृता ? अहं तु तस्मादेव दिनादारभ्य प्रत्यहं वदामि त्यज मां त्यज मामिति । किं पितुर्मे गृहेऽन्नमेव नास्ति ? यया नवमासानितोदरे

धृताऽहम्, किं सा निजगृहेऽवस्थातु मा नानुमन्येत ? श्रूयतामस्य वृद्धस्य वचः । त्वदीयेन पुत्रेण सहाहं रन्तु किल गताऽस्मि ! किमिदमेव हि वदसि ? ईदृशानि वचांसि वदन्नपि न लज्जसे त्वम् । कूर्चश्मश्रुणी पलिते ऽभूताम्, वक्तुमेव न जानासि ? एतादृशं वदतस्तव किमिति जिह्वा न निपतिता छिन्ना ! किमरे व्रजेन्द्र ! कुतस्तवेदृशं धाष्टर्यम्, यन्मामेवैवं वदसि ! धूर्त किं त्वं साक्ष्यमाश्रितोऽस्यत्र ? हत भागधेय ! नदीतीरे यमेन सबद त्वं दयालुनाऽऽनीय पालित पोषितश्च, मामेवैवमेव वदसि ! अपसरेत । किमुभौ पूर्वमेव कृतसङ्केतौ मामितो निष्कासयितुमिच्छथ । अहं वदामि मिथ्या, स तु यथार्थम् ? तपस्वी शंकरस्सर्वं जानाति, निजाभ्यां लोचनाभ्यां तेन सर्वमवलोकितम् । अत एवासावात्मनो गौरवं रक्षन्निरगात् । यदि च स एव निदोषस्तर्हि किमिति पलायितवान् । पितुर्निकटे किमिति सर्वं स्फुटं नावदत् । किं त्वमेतदर्थं पालित पोषितश्चासि । साधु, तिष्ठत यूयमेव सर्वे गृहे, अहमेव गच्छामीत । आनय चतुरन्तयानं वाहकांश्च, अद्यैव यामि पितुर्गृहान् । यदीतः परमहमस्मिन् गृहे स्थिता जलमपि पिबेयम्, न भवामि पितुर्नै पुत्री !'' इति ।

एवमुक्त्वा च सरक्तलोचना गमनायोदतिष्ठत् । अहन्तु मौनमाश्रित उपविष्ट एवाभवम्, देवनारायणमुखोपाध्यायोऽपि भयेनोदतिष्ठत् । अवदच्चैवम् ' तूष्णीं किमिति नतिष्ठसि, किमकाण्ड एवैवं रुष्टा भवसि ! महानयमनर्थो मे । इदमेव किल विचिन्त्यैतावताऽहं तूष्णीमासम् । शान्ता भव, मास्म रुष्य ! कदाऽहं त्वां मिथ्यामपि गीमवदम् । एतावत्कटुतरं किमिति भाषसे । किं मृदु वक्तुमेव न जानासि । धिक्, व्रजेन्द्र किमिति दूषयसि, परकीयोऽयम्बालः, साधुः, निष्कपटोऽयं वाग्छलं कथं जानीयात् । तस्यैव वचनमयं श्रुतिं मन्यते । सत्यमिदमिदमेव किल ? वस्तुतस्तु स एव यदि निदोषस्तदा किमिति भयमनिवेद्यैव पलायितवान्, स हि प्राणान् रिरक्षिषुर्गुप्तं जगाम । गच्छतु चुरस्याम् । इतः परं तन्नामग्रहणे वा किं प्रयोजनमस्ति । अञ्जलिरिन्तोऽहं बध्नामि, शान्ता भव । पश्य मे वार्धक्यम्, वृद्ध

मा किमिति पीडयसि ? छि छि. तूष्णीं तिष्ठ, पितुर्गृहान् किं वदन्ती गमिष्यसि। त्वयि गताया गृहकृत्य को वा निर्वक्ष्यति ? वत्स व्रजेन्द्र ! त्वमपि मेऽपराध क्षाम्य इति"।

मुखोपाध्यायस्यानेन शब्देन हृदयगत सर्वमपि दु खजात मेऽन्तर्हितमभूदेकदेव। सहस्तवन्धनेवमहमवदम्—"किमेव नाम वदन्ति भवन्त ? दीनो हीनो भिक्षुकश्च सन्नह किं भवत क्षाम्यामि ? भवद्भिरेव दययाऽऽनीय मृत्युमुखाद्रक्षितोऽह कथ भवत एव क्षमिष्ये। अस्त्विदम्, प्रार्थयेऽह भवत, त्यज्यतामय जन इति। यतोऽह भिक्षुकोऽस्मि वस्तुत । यस्य हि वनतरुमूलमेव निवासस्तस्य कथमिद राजोपभोग्य सौधादिक युज्यते। श्रीमद्भिस्तु बहुशस्समादृतोऽह कामम्। तथापि भिक्षुकस्य भिक्षयैव कालयापनमुचितम्" इति।

देवनारायणोऽब्रवीत् "पश्यत, यथा कथचिदस्या समाहिताया व्रजेन्द्र एव रुष्टो भवति। कमह सान्त्वयामि, किं वाऽह करोमि ? व्रजेन्द्र ! तूष्णीं भव। वत्स, अश्रूणि परिमार्जय, वृद्धे पितरि किमित्येव कुप्यसि ? निर्मलस्तु गत एव, तस्य स्थाने त्वमेव खल्वंसासि। कस्याह दोप कथ यामि। मम भाग्यस्यैवाय दोष। इत पर निर्मलस्य चर्चैव मास्तु, तया हि तवापि भवति कष्टम्, ममापि हृदय दु स्यति। किंचिदहमन्यद्वच्मि तदपि शृणु। त्वमपि ( जयकालि ! ) शृण्विदम्, अद्यावधि तु व्रजेन्द्रो न्यदीय कुमार इव तेन सह बहिरेवावर्तत, किन्त्वित प्रभृत्यन्तरेव स्थास्यति। व्रजेन्द्र ! अवहित खलु ? अस्य गृहस्य पश्चिमभागस्थे गृहे तव निवासो भविष्यति। नेत पर बहिरवस्थानस्यावश्यकताऽस्ति। गेहस्थो बाल इव ति ष्ठ, कस्यापि कृत कष्ट न भवेत्। अद्यावधि तद्गृहमन्धकारावृतमेवाभूत्, त्वा निमित्तीकृत्य दीपो वा प्रकाश्यताम्। अद्य कश्चन गहनोऽभियोग प्रचलति, तस्मिन् समाप्ते त्वामप्यह विचारालय नेष्यामि" इति।

प्रथमतस्त्वहमिद नाभ्युपरवम्, विशेषतस्तु निर्मलकुमारस्योपदेश स्मृत्वा सावधान एवाभवम्। तथापि विशेषतोऽनुरुन्धति तस्मिन् तदीय

वाक्यमुल्लघयितुमसमर्थोऽभवम् । अनिच्छताऽपि तद्वाक्यमङ्गीकरणीयमेवासीत्। सर्वमिद वृत्तान्तजात पत्रद्वारा निर्मलायास्तय तदैव ।

पश्यत कालस्य गतिम्, भागधेयस्य परिपाकञ्च, मुखोपाध्यायावाज्ञां गृहीत्वेतो निर्गमने प्रवृत्तस्य कीदृशमिद सौभाग्य मे सवृत्तम् । सुखस्य किलाभिवृद्धिरचिन्तितमेवोपनता । धन्योऽसि ससार त्वम् ! विचित्रा ते चक्रस्य गति !

इति द्वादश चक्रम् ।

---

## अथ त्रयोदशं चक्रम् ।

---

### ( पुनर्मन्दीभाव । )

वस्तुत एव मे सुख तत प्रभृत्यभ्यवर्धत । राज इव मे सुखेन कालोऽत्येतिस्म । यावत्सुख यावती च स्वच्छन्दता मे तदानीमासीत्कथमिदमहमनया क्षुद्रया लेखिन्या प्रकटीकुर्याम् । पानाशनाच्छादनादिक सर्वं मुत्तमोत्तममेवासीत् । विशेषतश्च तस्मादेव दिनात् देवनारायणमुखोपाध्यायो जयकालीदेवी च मा प्रेमार्द्रया दृष्ट्या द्रष्टुमारभताम् । कस्याप्यशस्य न्यूनता नासीत्, महता सुखेन कालो यातिस्म । केवल निर्मलकुमारस्य स्मरण दु खापयतिस्म चेत । कदाचिच्च कृतभोजनो यदा मध्याह्ने निर्जोपवेशनगृहे स्वपिमि तदा मे बहुच प्राचीना निजा घटना गुप्तवृत्तान्ताश्च स्मृतिपथमुपयान्तिस्म । अहो ! तद्वास्यसुख मे कुत्र गतम् ? मातुस्स्मरणमात्रेण गाङ्गस्येव पूरस्य धाराऽश्रुण प्रवर्न्तति स्म । कुत एवम भूत् ? कुतोऽह निज राज्य परित्यज्य परकीयमन्न भोक्तु योग्य कृतोऽस्मि ? । भगवन् ! विचित्रमिद रहस्य झटिति मा बोधय, मात ! किं सत्यमेव मे नास्ति जननी त्वम् ? अष्टादशवर्षेभ्योऽह त्वा मातृशब्देन सम्बोधयम्, त्वमपि मा मातृनिर्विशेषमेव समपालय, सत्येव किमिदमम्-

न्मातः ! । नाहं किमपि जानामि, सत्यं शपे, नाहं वस्तुत एव किमपि जाने, निर्दोषोऽहमस्मि नितान्तम्, एवंस्थिते किमिति मां पर्यत्यजः ! को मे दोषः । किं वा मे पापं कर्म ? किमप्यनुक्त्वैव विवाहच्छलना किमित्यहं निष्कासितः ! यद्यहं येन केनापि कारणेन कुपुत्रोऽभवम्, काममसानि, त्वं किमिति कुमाताऽभूः ? अद्य मया ज्ञातं न त्वमसि मे जननी, यदि त्वं जननी स्यास्तदा कथं निर्दोषं पुत्रं निष्कासयेः ? किं मद्विषयकं किञ्चिद्गूढं रहस्यमस्ति ? येनाहं बुद्धिपूर्वमेव मातापितृभ्यां परित्यक्तः । हन्त ! हन्त !! किं तदेव श्वशुरगृहम् ! किं तावेव श्वश्रूश्वशुरौ ? यमपुरादिव तस्माद्दशमाङ्कचिह्नितात्कारागृहाद्रुसमेव कस्यचिदज्ञातस्य साहाय्येन निर्गत्य पलायनं किं मानुषकृत्यम् ? अहो ! किं वर्णयेयं तस्य देवतुल्यस्य बालस्य महिमानम् ! कीदृशी तस्य चातुरी ! येन स्थाने स्थानेऽहं रक्षितः ! कामयते मे चेतः पुनरेकदा तस्य गीतं श्रोतुम्।

एवमादिभिश्चिन्ताभिरहं बलादिवाक्रान्तोऽभवम् । चिन्तया सहैव जृम्भयाऽपि । को वा ततो विलम्बः, निद्रयाऽपि पराभूतोऽभवम् । दूरादेव कस्यचिद्गीतस्येव शब्दोऽश्रूयत, किमयं स्वप्न उत माया ? अहो ! कीदृशमिदं चेतोहरं गीतम् । पाठकाः ! श्रूयतां भवद्भिरपि ।

( द्विपदी )

"मोहनमाल्यं गळे कदा मे शोभेत स्वहस्तम्
कुश्रागा सा सम्मिळनस्य च किन्नेदं संयुतम् ॥
विषसम्मिश्रः प्रेमापीतस्तस्येदं फलमाप्तम् ।
कौटिल्यं किमु कालस्येदं व्यस्तापीमां यत्तम् ॥"

दूरादेव वेणुगानमिव गीतमिदं कर्णयोर्मे सुधावर्षमवर्षत् । अहमपि सप्रेमभरं श्रोतुमारभे । किमहं स्वपिमि, अथ जागर्मीति निश्चेतुं नाशकम् । क्रमादयं गीतशब्दो निकटे निकटे समवर्तत । अन्तश्च कर्णयोर्मे मुखं निक्षिप्य गायन्निव शब्दोऽश्रूयत । स्वप्नेऽपि वर्तमानोऽहं हस्तौ प्रासारयं तद्ग्रहणाय । किन्तु स्प्रष्टुमपि नाशकम् । हठादेव नेत्रे उदमिल्ताम् ।

चतुष्पदायां पीठिकायामुत्थायोपाविशम् । परमेतावताऽपि स्वप्नेना-परित्यक्त एवाहमभवम् । तत्किल गीतमद्यापि श्रोत्रयोरशब्दायमानमिवासीत् । किमिदम् ? एवं तु कदापि नाभूत् । जाग्रत्स्वप्नोऽयम्, यतस्स्पष्टमेव श्रूयते गीतशब्दः; अस्तु वाऽयं स्वप्नः, परं नायं मे भ्रमः । निश्चितमेवायं मम परममित्रस्य बालस्य गीतशब्दः । परं कथमत्रागतस्सः ? सर्वतस्सुरक्षितेऽत्र कथं स प्रविष्टः । देवनारायणमुखोपाध्यायभयात्कोऽप्यत्र गातुमेव न शक्नोति, यतस्तस्यानभिमतं गानादिकम्; सत्येवं कथमनेन गीतम् ? पाठकाः ! वस्तुत एवाहं तदानीं न किमपि निश्चेतुं समर्थोऽभवम् ।

यदाचैतदन्यच्च चिन्तयन्नवर्तिषि, तदैव हरिदयालुरागत्यावदत्-"व्रजेन्द्र प्रभो ! स्वामिन्याः कनिष्ठभगिन्यद्याचिन्तितमेवागता । विचाराक्षयस्थाय प्रभवेऽपि सूचितम्, त्वरयैवागमनं भविष्यति प्रभोः । भवता किमपि सल्लपितुं स्वामिनी स्वयमेवागच्छति" इति । एतावदुक्त्वा प्रतिनिवृत्तो हरिदयालुः । अहमपि सन्नद्धोऽभवम् । एतावत्येव साऽपि समागता । कियतः कालादियं मयासह विना संकोचमेव सल्लपति । तामागच्छन्तीं दृष्ट्वा प्रत्युदयासम् ।

जयकाल्यवादीत्-"व्रजेन्द्र ! भगिनी मेऽद्य समागता । एकदा त्वं पण्यवीर्थी याहि, चीटिकामिमां गृहाण, यथाऽत्र लिखितं सर्वं सामग्रीजातमानय । बहुषु सत्स्वप्याज्ञाकारिषु केवलं प्रीतिविशेषात्त्वां प्रेषयामि, न पुनरन्यथा । त्वया नेया सामग्री, मया पक्तव्यं सर्वम्, भगिन्या चोपरितनं कार्यं द्रष्टव्यम्, तैश्चागतैर्भोक्तव्यम् । गच्छ, हरिदयालुना सह । तन्निकट एवास्ति द्रव्यम् । सर्वं वस्तुजातं सम्यक्परीक्ष्य क्रेयम् । यत्र यत्र यद्यल्लभ्यते जानाति हरिदयालुस्सर्वम् । क्रेष्यति तु सर्वं स एव, त्वन्तु सहैव तिष्ठ परम्" इति । अहं धृतवसनस्तेन सह निरगाम् ।

गच्छत एव मे मध्ये मार्गं कस्यचिद् वृक्षस्याधः शंकर इव कश्चिद्दृष्टिपथमगमत् । स मामपश्यन्नवा न जानामि, स च परावृत्य

तिष्ठन् कश्चित्प्रतीक्षमाण इवादृश्यत । पुरत पुरतो हरिदयाळुर्गच्छन्न-वर्तत । अहन्तु शकरस्य वृत्यजात निरीक्षितुमना कस्यचिद् वृक्षस्याध-श्छन्नोऽतिष्ठम् । इद चाह झटित्येवाकरवम् । येन शकर किमपि नाज्ञा-सीत् । शकरो देवनारायणमुखोपाध्यायस्य गृहमेकाग्रया दृष्ट्या निरीक्षते । पक्ष्मणी तस्य न किञ्चिदपि चलत । मन्ये महत्योत्कण्ठया यकञ्चित्प्रतीक्ष-तेऽयम् । निर्मलकुमारगमनानन्तर नाय कदाऽपि मया दृष्ट । यद्यपि जाना-म्यहमेतेषा गुप्त वृत्तम्, एते किल यदा कदाचित्तस्मिळान्तिस्म गुप्तमेव । परमद्य किमित्यचिन्तितमेवाय मे दृष्टिपथमुपयात ? कुतश्चाय मुखोपाध्या-यस्य गृहान्निरीक्षते ? अस्तु, इत पर किम्भवति ? तदेव द्रष्टव्यम् ।

अहमपि तमेवानुसरस्तत एवापश्यम् । तृतीयशिरोगृहे जयकाळीं कस्यचिदुद्घाटितकवाटस्य गवाक्षस्य निकटे स्थिता शङ्करप्रति सङ्केत कुर्वतीमपश्यम् । शङ्करोऽपि ज्ञातसङ्केत प्रसन्नमुख पश्चिमामुख पण्यवीथीं प्रत्यगात् । अहन्तु तूष्णीमेव "किमिदम् ? तदीयस्य सङ्केतस्य को वाऽर्थ ? शङ्कर किमिति पण्यवीथीमगात् ? जयकाळ्या आज्ञया किलाह पण्यवीथीं यामि, तर्हि किम्मामेवोद्दिश्य किंचित्प्रचलति कार्यम्" इत्यादि चिन्तयन् भयकम्पितगात्रोऽभवम् । नास्ति किमप्यसाध्य नाम कुलकळङ्किनीना स्त्री णाम् । न जानाम्यद्य कस्यामापदि पुनर्मां निक्षेप्स्यति । हन्त ! हन्त !! कुत्र यामि ? चतुर्दिशमेव मे विपद ।

सभयमह पण्यवीथीं प्रातिष्ठे । मध्येमार्गमपश्य हरिदयाळु मामेव प्रतीक्षमाणम् । दृष्ट्वैव मामपृच्छन्स "भजेन्द्र देव ! अद्यावधि कुत्रासी द्भवान् ? चिरादह तत इतोऽन्विष्यामि, मार्गो विस्मृतो भवतेत्यगृह्यत मया" इति ।

तदा किलाह तथा विह्वलचेताअभवम्, येन तस्य सम्यगुत्तर प्रति-वक्तुमेव नाशकम् । यदा च किञ्चिदिव शान्तचेतास्तदैवमवदम् "हरिद याळो ! आगच्छन एव मेऽकस्माद्विह्वलमभवच्चेत, शिरो घूर्णितुमारभत,

अत कस्यचन तरोश्छायायामुपाविशम्, अद्यापि न शाम्यति चेत , पश्य, अय वटो घनच्छायो नातिदूरे दृश्यते, शीतश्च वाति वातपोतः, आगच्छनैव मुहूर्तमुपविशाव , एवमेव तत्र जनसम्मर्दे यद्यागमिष्य "मूर्छित एवा भविष्यम्" इति ।

हरिदयालुरवादीत्—"नाहं जानामि किमपि, यथा रोचते भवते तथा कर्तुं भवान्प्रमाणम्, किन्तु स्वामिन्या मया सह स्थातुमेवाज्ञाप्यत, यदि भवान्न तिष्ठति सह मया किमहं करिष्यामि, भवानेव कथयतु ' अस्तु, ( हस्तेन प्रदर्श्य ) अस्मिन्नेवापणे वेशवारादिक क्रीयता भवता, यावदहं ( अन्यत प्रदर्श्य ) तस्मै वणिजे मूल्य दत्वाऽऽगच्छामि" इति ।

एतावदुक्त्वा प्रातिष्ठत स क्षणमप्यविलम्ब्य, अहन्तु तस्यैव तरोरधस्समुपविष्ट पर्यालोचयन्नासम् । तावत्तस्यैवापणस्य निकटे महान् कोलाहलोऽश्रूयत । परिवृत्य चाह वणिक्केत्रोर्मुष्टामुष्टि बाहूबाहवि च युद्धमपश्यम् । श्रुत्वैव च शब्द भयेनाभिभूतोऽभवम् । आ ! परिचितपूर्वोऽय शब्द , हन्त ! हन्त !! श्वशुरस्य किलाय मे स्वर ! अहो ! किमिदमाश्चर्यम् । केय माया ! कीदृशमिद रूपान्तरम् ! कथमयमत्रागत ? पूर्वमयमन्येन वेषेणावलोकितोऽद्यपुनर्वणिग्वेषेणावलोक्यते, नूनमयम्ममैवान्वेषणायागत , आपणोऽप्यय मन्ये न सत्य , न जानाम्यद्य कीदृशेनोपायेन मा मारयिष्यतीति, अद्य मध्याह्ने दृष्टस्वप्नो न मिथ्या, अवश्यमेव सोऽपि बालकोऽत्रैव कुत्रचिदेषाभेव मध्ये छन्नस्स्यात्, अथैवेत. पलायितव्य मया, अन्यथा प्राणाना रक्षणमेव दुष्करम्, नैव गच्छेय देवनारायणमुखोपाध्यायस्याट्टालिकामितोऽहम्, भवतु यद्वा तद्वा, वदतु यो वा को वा किमपि, इदमेवाद्यावश्यक यत्प्राणाना रक्षण नाम, यत्रेमौ पादौ मे प्रसरिष्यतस्तत्रैवाह पलाय इति चाकल्यम् ।

यावदेवाहमुदतिष्ठम्, हा धिक् ! भयानकस्य व्याघ्रस्यापि प्रच्यवते दृष्टि., क्रुद्धस्याशीविषस्यापि विफला भवति दृष्टि , खलाना दुष्टाना स्वभाव

कुटिला दृष्टि कदापि न विफलीभवति, लक्ष्ये पतति निश्चित शतमख-प्रहितेवाशनि, पतेत्, अवश्यमेव पतेत्, यदैवाहमुत्थितोऽभवम् । तदैव तस्य नरपिशाचस्य दृष्टिर्दूरादेव मय्यपतत् । अहमपि यावच्छक्ति शरासनप्रहित इव शरस्सवेगमधावम् । सनसनाकारं प्रविशतिस्म वात कर्णयो । पृष्ठत परिवृत्तमुखश्च दशाष्टान् सवेगम्मामेवानुधावतोऽपश्यम् । भयेनाह पूर्वस्मादप्यधिकेन वेगेन धावितुमारेभे । किन्तु सर्वोऽपि मे यत्नो मुधैवाभवत् । मम तु पृष्ठतोऽग्रतस्सर्वतश्च करालवदन कालोऽस्ति, कुत्र वा पलाय्यता मया ? हठादेव वरिष्ठ कश्चित्पार्श्वतो वनान्निर्गत पर्वत इव मत्पुरतस्समागत्यातिष्ठत् । मयानक तस्य रूप दृष्ट्वैवाह निरुद्धगति रभवम् । सोऽपि समीपमुपसृत्य मदीयौ हस्तावगृह्णाद्धस्ताभ्याम् । प्रळयाम्बुद इव गर्जन्वदच्चैवम् "किमरे दुष्ट ! कोऽद्य त्वा रक्षति ? इयत्ते साहसम्, अस्माकमेव नेत्रयो प्रक्षिपसि धूळीम्, ह्यस्तनस्य बालस्य तवेयती बुद्धि, उभौ हत्वा मदीयौ पलायितोऽद्य देवनारायणगृहे राज्य करोषि, तत्र स्थितेन त्वया 'न मामत्र स्थित कोऽपि ज्ञास्यति' इति किलायगतमासीत्, धूर्त ! यमपुरमपि गतस्त्व नास्माक चक्षुषा दूरस्थ, देवनारायणस्य तपस्विन का शक्ति ? पश्याम्य फल दास्यामि" इति ।

क्षणादेवाह ग्रन्थिरिव रज्जुभिर्बद्धोऽभवम् । अस्वतन्त्रीकृतश्च कुत्रचन शकटे निक्षिप्तोऽभवम् । शकटो गन्तुमारभत । हन्त हन्त सर्वाऽपि चातुरी मे व्यर्थाऽभवत् । पुनश्चाह गृहीतोऽभवम् ।

इति त्रयोदश चक्रम् ।

---

## अथ चतुर्दशं चक्रम् ।

### ( पुनर्जीवनम् । )

"मास्मेतस्ताडयःमास्म ताडयः कामं गृहाण प्राणान्,मास्म ताडयः"

"किम् ? अपि पुनरपि पलायितुं यत्नं करिष्यसि ? पुनरपि किं दूषयिष्यसि ?"

"नहि नहि, नेतः पलायिष्ये, दूषयिष्यामि वा, यद्वदिष्यसि तदेव करिष्यामि, मास्मेतस्ताडयः ।"

"तर्हि यदहं वदामि तल्लिख--मया देवनारायणमुखोपाध्यायपुत्रस्य निर्मलकुमारस्य प्रोत्साहनेन देवनारायणमुखोपाध्यायो विषं भोजितः-"

"कदापि न, कदापि न, इदं त्वहं कदापि न लिखितुं शक्नोमि,कामं मे प्राणान् गृहाण, इदं तु मया कदापि लिखितुं न शक्यते ।"

"लिखितुं न शक्यते चेदिदं गृहाण"

सतडात्कारं - तालुन्यहं ताडितोऽभवम् । शिरो मे घूर्णितुमारभत । स्थातुमशक्नुवानोऽहं भूम्यामपतम् । स तु निर्दयो वेत्रं हस्ते गृहीत्वाऽवदत्, "तव प्राणग्रहणे तु कथैव सर्वा निश्शेषिता भवेत्, अतश्चाहमेवं न करिष्यामि, त्वान्तु शुनकमिव मारयिष्यामि, वद, लिखसि नवा ? नचेदनेनैव वेत्रेण चर्म ते पृष्ठस्य मोचयिष्यामि"

"दीनबन्धो ! दयानिधे ! गच्छन्त्यनाथस्यास्य प्राणाः । आगच्छ, रक्ष, कष्टमिदं न शक्नोमि सोढुम्, दयानिधे ! कुरु दयाम् ।"

"किम्, अद्य रोदितुमारब्धम् ? मादृशानां हि हृदयानि न रोदनेन द्रवीभवन्ति । यदि निष्क्रमितुमिच्छसि मदीयाद्धस्तात्, लिख झटिति यन्मयोक्तमस्मिन्पत्रे ।"

सहसैव साहसेन न्यधीयत पदं मनसि मे । भयेन च समकोच्येतां चरणौ । एवं चाहमचिन्तयम्--"मृत्युर्मे निकटतर इति सत्यमिदम्, अद्य वा

भवतु, घण्टानन्तरं वा । सर्वथापि नास्त्युपायो मृत्युमुखान्निष्क्रमितुम् । एवं च स्थिते किमित्यहमासन्नमरणो जुगुप्सितमिदं कार्यं कुर्याम्" इति । निश्चित्य चैवं रन्ध्रमन्विष्यन् चिन्तयंश्च हृदि परमात्मानं, बलेन बध्वा मुष्टिमताडयं तस्य गळे लब्धावकाशः । ताडितमात्र एव सोप्यसहमानोऽपतद्भूमौ छिन्नमूल इव तरुस्सहैव हाहाशब्देन । अहमप्ययमेव समय इति यावद्बलमविच्छिन्नं मुष्टिभिर्जानुभिश्चाताडयम् । सच बहुधा यतमानोऽप्युत्थातुं नाशकत्क्षीणबल. । न जाने तदा कियद्बलं मे शरीरेऽवर्ततेति । ततश्च तदीयेनैवान्तरीयेण तदीयौ हस्तौ पादौ च दृढं बध्वा जलादुद्धृत इव मीने तस्मिन् विचेष्टमान एवाहं द्वाराभिमुखमागमम् । किन्तु हन्त ! द्वारं बहिर्दत्तार्गळेन कवाटेन पिहितमासीत् । तदानीं च मदीयाः प्राणाश्शरीरान्निर्गन्तुं प्रायतन्ताहमपि च तस्माद् गृहात् ।

किं करोमि ! कथं पलाय्यताम् ? कुत्र यामि ? भगवन् महत्यामापदि पतितोऽस्मि ! दर्शय मे मार्गम् । यदा हतोऽयं सर्पो यतते मां ग्रस्तुम्, नाथ ! रक्ष मामनाथम् ।

बहिर्मन्दमन्दं येन केनचित्कवाटगृह्लोदमुच्यत, कवाटिका चोदघाट्यत । अहंच समयसम्भ्रमम् अवदम्-"भ्रातः कस्त्वमसि ? रक्ष मां विपन्नम्" इति ।

"तिष्ठ तूष्णीम्" अयमश्रूयत शब्दो बहिः ।

क्षणाच्चोद्घाटितकवाटेन द्वारेणान्तः प्रविशन् कृष्णवस्त्रमावृतदेहः कृष्णवर्णेनैव मुखप्रावरणेन पिहितवदनोऽदृश्यत कश्चित् पुरुषः । "तूष्णीं किञ्चिदप्यशब्दायन्मया सहाऽऽगच्छ"इत्युक्त्वा स गन्तुं प्रववृते । अहमपि मूक इव तस्य पृष्ठतः पृष्ठतो गच्छन् प्रापं किंचिद्गृहमन्धतमसा वृतम् ।

येन सहैतावद्दूरमागतोऽहं सोऽब्रवीत् "अद्य भवान्कठिनदुर्गमे स्थाने पतितः । केनाप्युपायेनाद्य भवन्तं बहिर्नेतुं न शक्तोऽस्म्यहम् । मदीयाः प्राणा अद्यापि भवत एव हस्ते सन्ति । अस्तु, इदं कम्बळं धृत्वाऽत्रैवोपविशतु भवान् । अद्य सन्ध्या प्रवर्तते । कृत्स्नां रात्रिमत्रैव स्थेयं

भवता । श्वःप्रातर्येन केनाप्युपायेन भवन्तं बहिर्निर्गमयामि, न सम्भ्रमः क्रियताम्, धैर्यमवलम्ब्यताम् । गृह्यतामिदं कम्बलम् " इति ।

एतावदुक्त्वा च स स्वहस्तस्थितं कृष्णकम्बलं मह्यं दत्वा झटित्येव बहिर्निर्गत्य द्वारं कवाटेन पिधाय शृङ्खलया बध्वा ताळयन्त्रेण घट्टयित्वाऽगमत् । अहमपि तेनैव कम्बळेन पिहितगात्रः कुत्रचित्कोणे समुःपाविशम् ।

पाठकाः ! चतुर्दशस्यास्य चक्रस्य गतिः मन्ये भवतां हृदयङ्गमा नाभूदिति । वस्तुतोऽपीयं तादृश्येव गूढतमा। ममापि नास्ति सम्यक्स्मृतिः । इयदेवाहं स्मरामि "अद्य मध्याह्ने जयकाव्या आज्ञया हरिदयालुना सह पण्यवीथीमगच्छम् । मध्येमार्गं जयकाव्याश्शङ्करस्य च सङ्केतमपश्यम् । आपणे वणिग्वेषेण स्थितश्श्वशुरोऽदृश्यत । पुनश्च बलात्कारेणात्र पापपुर्यामानीतोऽस्मि" इति । यस्य हस्तपादं मयाऽबध्यत स किल मच्छ्वशुरस्य भृत्येष्वन्यतमः । पश्यत ! पश्यत !! स दुष्टः कीदृशं कुत्सितं शब्दं मद्धस्तेन लेखयितु प्रवृत्तोऽभूत् । अद्याहं केवलं मदीयेन बाहुबलेनैवापदो मुक्तोऽस्मि । अन्यथा स यद्यद्देत्तत्सर्वं लेखनीयमेव स्यात् । अस्तु,कोऽयं महात्मा, यो निजान्प्राणानप्यगणयन्मदीयान्प्राणानरक्षत् । अस्य किल शब्दश्श्रुतचर इव मे प्रतिभाति । कदा कुत्र श्रुत इति तदानीं नाज्ञायत । बहुःपर्यालोचिते स्थविरभूत् । दशमाश्चिहितात्कारागृहाद्यदाऽहं निर्गतस्तदाऽनेनैव महापुरुषधारणयोग्यं वस्त्रादिकमदीयत । अनेनैव चोत्तराभिमुखं गन्तुमकथ्यत । एतादृशाः खलु परोपकाररता महात्मशब्देन कथयितुं योग्याः ।

अस्तु, 'देवनारायणमुखोपाध्यायो मया विषं भोजितः" इति खलु तेन लेखनाय निर्बद्धोऽस्मि । किमस्य तात्पर्यम् ! एवं विलेखनाय किमित्ययं दुरात्मा मामपीडयत् ! एवं विलेखनेन किं वाऽस्य फलं लभ्यते ! किं सत्यमेव देवनारायणमुखोपाध्यायोऽद्य भूमौ नास्ति ? हन्त ! हन्त !! वार्धक्येऽस्यापमृत्युरेव जाता ! किमश्चार्यम् ! जयकाव्याः किल राज्ये

देवनारायणमुखोपाध्यायस्याकाले मृत्युः, निर्मलकुमारस्य गृहपरित्यागः,इत्यादिकं च न नितरामसाध्यं नाम ।

हन्त ! हन्त ! अद्य पुनर्न जाने कीदृशी विपन्मदीये शिरसि पतिष्यति । यदि सत्यमेव देवनारायणमुखोपाध्यायो मृतस्स्यात्, स्यादवश्यमेव महानर्थकरी कापि घटना न चिरादेव । जयकाल्या यदद्य मध्याह्ने उक्तोऽस्मि—"त्वं पदार्थजातमानय, अहं पाकं करोमि" इति, तस्याद्य ज्ञातं गूढं तात्पर्यम् । सा किल स्वयं देवनारायणमुखोपाध्याय विषं दित्सन्ती मयि तदपराधारोपणायैवैवमारचितवती युक्तिम् । हन्त ! हन्त !! न जाने विधात्रा किं किमालिखितं शिरसि म इति ।

क्रमात्प्रवृत्ते रात्रिः । सर्वत्र निश्शब्दतया समभ्यक्रियत । एवमादि चिन्तयन्नेवाहमपि निद्रातुमारभे । क्रमात्प्रसारितौ च पादौ धूलिधूसरायामेव तस्यां भुवि । क्षणमात्र विस्मृतममूत्सर्वमपि दुःखजातम् । एतावत्येव गीतशब्देन केनचिन्मनोहरेण प्रतिबोधितोऽभवम् ।

इदं च तद्गीतम्—॥ द्विपदी ॥

"हृदयचकोरो मुखचन्द्रन्ते हारीक्षितुमभिलषति ।
अदयमिदं तव चेतो नूनं विदितं मां विस्मरति ॥"

अहो ! अयं किल मद्वितीयपितृगो बालकस्य स्वरः । घोरे तत्रान्धकारे उन्मीलितनयनोऽपि किमपि नापश्यम् । मन्दम्मन्दमग्रे प्रसारिताभ्यां हस्ताभ्यां भित्तिं परामृशन्नाद्वारमगच्छम् । कियन्तचित्कालं तत्रैव मौनमाश्रितोऽतिष्ठम् । चतुर्दिशं निश्शब्दतैवासीत् । मध्ये मध्ये च केवलं झिल्लिकानां "रीरी" शब्दोऽश्रूयत । परमहं द्वारमुत्सृज्य पदात्पदमपि नाचलम् । यदि यः कश्चिदागत्य कवाटमुद्घाटयेत्तदा झटित्येव पलाययेयेत्याशया तत्रैवातिष्ठम् । श्वासमपि निरुध्य कर्णावेकाग्रौ कृतवानासम् । कियतःकालादनन्तरमुपरि धमधमाकारः कश्चिदश्रूयत । स च सोपानमार्गेणाधस्तादवतरतःपदशब्द इवासीत् । अहमपि किञ्चित्सावधानोऽभवम् । एतावत्येवोभयो-

स्सल्लपतोरिव शब्दोऽश्रूयत । बहु प्रयस्यताऽपि न कोऽपि शब्दोऽगृह्यत । यो मयोपरि वस्त्रेण बद्धोऽवशः पातितः, किं तस्यैवोन्मोचनायैतौ समागतौ ? कावेतौ ? यावुपरि सल्लपतः ! कीदृशोऽयं सल्लापः ?

"आम्, इदमेव साधु, तावत्पर्यन्तमत्रैव गृहे शवमिमं गुप्तं निधेहि" इत्येतावदुक्त्वा तावगमताम् । इतः परं च बहूनां पदशब्दः पुनरश्रूयत । क्रमाच्च कवाटिकाप्युद्घाटिताऽभूत् । अहमपि निरुद्धश्वासस्तत्रैव कुत्रचित्कोणे छन्नोऽतिष्ठम् । ते च निजहस्तेषु लम्बमानं किञ्चिदानीयात्रैव प्रक्षिप्य पिहितकवाटा जग्मुः ।

किन्तु, हन्त ! नाहं निर्गन्तुमशक्नम् । तत्रैवावस्थितोऽहं कम्पमान आसम् । तदा किल मे कियद्भयमासीत् ? अहमेव जानामि, अथवाऽन्तर्यामी सर्वेश्वरो जानाति । मन्दम्मन्दमहं पुनस्तस्यैव द्वारस्य निकटमगाम् । द्वारन्तु बहिरेव शृङ्खलाबद्धाभ्यां कवाटाभ्यां पिहितमासीत् । पुनश्च रन्ध्रान्वेषी "अद्य यदि कश्चिदुद्धाटयेत्कवाटिकां नूनमहं पलायेये" ति चिन्तयंस्तत्रैवातिष्ठम् । किन्तु कोऽपि नागमत् । बहुकालावस्थानाच्छ्रान्तोऽहं स्थातुमशक्तोऽगत्या तमेवोद्देशं यत्राहं पूर्वमासं गन्तुं प्रावर्तिषि । गच्छन्नेव च मध्येमार्गं शीतलेन केनचिद्वस्तुनाऽऽहतपदः प्रापतम् । किञ्चिद्विमर्शेन च सोऽयं शव इत्यज्ञायत । अहमपि भीतभीतो रोदितुं प्रारभे । आः ! हा हन्त ! नेतस्सोढुं शक्यते । योऽद्यैव मां मारयेत्स एव मे परमहितो बन्धुः । तस्मै किलाहमाशिषः प्रयुञ्जे । कोऽसि ? आगच्छ ! ददामि तुभ्यं मे प्राणान् । अरे रे ! कस्यायं शवः ? कोऽयं दुर्भगो मनुष्यः, यस्त्यक्तजीवितोऽत्र पतितोऽस्ति । किं मामपि सह नेतुं त्वमत्रागतोऽसि ? साधु तर्हि, आगच्छ, मामपि सह नय, त्वं किल मम परमं मित्रमसि ! त्वत्पार्श्व एव देहि मे स्थानम् । किमेतावत्पृष्टोऽपि किमपि न वदसि । किं त्वमपि मे शत्रुरसि ? किं कृत्स्नोऽपि संसारो मे शत्रुतां गतः ? हा धिक्, तर्हि को मां रक्षिष्यति ? हन्ताहमुन्मत्तसंवृत्तोऽस्मि । को वा शृणुयान्मे जल्पितम् । अहो कष्टम् ! कुत्र यामि, किं वा करोमि । ओ मत्प्रियबालक

कुत्र त्वमस्यद्य । त्वयैव किलाद्यावध्यहं पदेपदे रक्षितोऽस्मि । कुत्र गतोऽस्यद्य त्वम् ? आगच्छ, द्रुतमायाहि । पश्य त्वदीयो व्रजेन्द्रोऽद्य कीदृशं कष्टमनुभवति ? स हि शवेन सहाद्य तिष्ठति । किं त्वं न जानासि ? किं स एकाकी शवेन सह निर्भयं तिष्ठेत्, अयं किल शवो मामद्य ग्रसितुं सन्नह्यति । आगच्छ बालक रक्ष मां रक्ष । अन्यथा पुनर्न व्रजेन्द्रं त्वं द्रक्ष्यसि ।

एतदन्यच्च प्रलपत्येव मयि सहसैव सखटात्कारं कवाटमुद्घाटितमभूत् । "मा भैः-मा भैः-आगतोऽस्म्यहम्"

इति वदन्नेवान्तःप्रविशन्नयनहारी बालस्समदृश्यत । मधुरमधुरायास्तदीयाया वाण्याश्श्रवणमात्रेण पलायितमभून्मे भयम् ।

उन्मत्त इवाहमेवमुच्चैर्वक्तुमारभे-"हे मत्प्रियतम बालक ! पश्य त्वदीयस्य व्रजेन्द्रस्य दशाम् । आगच्छ, समीपमुपयाहि । निजेन हस्तेन शिरो मे परिमृशन्दूरीकुरु मे दुःखम् । नाहं पश्यामि तमसि त्वाम् । कुत्रासि ?" इति ।

"उन्मत्त इवोच्चैर्मा बहु वादीः, तूष्णीं भव, स्थिरो भव, कुतस्ते भयम् ? निर्दोषस्य ते कुतो वा भी."

"अहं निर्दोषोऽस्मीति तु त्वमेव जानासि, किन्तु मामद्यास्माच्छवाद्रक्ष"

"नायं साधारणश्शवः, मन्ये न दृष्टोऽयं त्वया, अत एवोन्मत्त इव जल्पसि, दृष्टेऽस्मिन् किं किं कुर्या न जानामि, अस्तु, पश्य"

एतावदुक्त्वा बालेन झटित्येव काचन मधूच्छिष्टवर्तिका प्रज्वालिता, यस्यालोकेन शवोऽयं देवनारायणमुखोपाध्यायस्येत्यज्ञायत मया । "हा धिक्, अनर्थ. किल संवृत्तः" बालोऽवादीत्-"कस्यायं शवः, दृष्ट.किल त्वया ? देवनारायणमुखोपाध्यायोऽयमद्यापि न मृतः, इतः परमस्य जीवनं मरणं च मदधीनमेव । इच्छायामद्यैव जीवयितुमपि शक्नोमि ।"

अहमपि झटित्येवावदम्-"अस्ति शक्तिस्ते सर्वमपि कर्तुम् । नत्वमसि मनुष्यः, देवोऽसि । पतामि ते चरणयोः, भवेत्ते महत्पुण्यम्,जीवय देवनारायणमुखोपाध्यायम्" इति ।

बालकः-"वस्तुतोऽयं देवनारायणमुखोपाध्यायोऽद्यावधि जीवति, तीक्ष्णतमेन विषेणेमां दशां प्रापितोऽयम् । आद्वादशघण्टमस्य विषस्य प्रभावस्यात् । एतन्मध्य एव यदि नौषधं दीयेत, तदाऽस्य जीवनं दुष्करम् । औषधमपि मयाऽऽनीतमस्ति । तदद्यास्मै ददामि । किन्तु दिवसत्रयंयावदस्य सम्यक्परिचर्या कार्या । अहं त्वत्र स्थातुं न शक्नोमि, दिनत्रयं त्वयैवास्य समीपे रात्रिंदिवं स्थातव्यम्" ।

अहम् "सहर्षमहं स्थास्यामि, किं त्वत्र छलेन कियच्चिरं स्थातुं शक्यते । कथमिदं क्रियताम् ।"

बालः-"किमिदमपि त्वया कथयितव्यम् ! यद्यत्कर्तव्यमत्र पूर्वमेव सर्वं मया कृतमस्ति । इतःपरं यद्यदहं करोमि तत्सर्वमवहितः पश्य" । एतावदुक्त्वा बालः किमप्यौषधं देवनारायणमुखोपाध्यायस्य मुखे प्रक्षिप्य-निश्चलाभ्यां नयनाभ्यां तदीयं मुखमपश्यत् । एवमाचरणे कोऽभिप्राय इति नाहं जानामि । पुनश्च सभयमवादीत्-"न मामद्य किमपि पृच्छ, कुतोऽहमागतः कुत्र किंवा भवति इति ज्ञातुं मा कुरु यत्नम् । उभावपि मिलित्वा बहिरिमं नयावः । इतःपरं यद्यत्कर्तव्यं सङ्केतेनैव ज्ञातव्यम् । भाषणं चातिमन्देन स्वरेण कर्तव्यम्" इति ।

उभावप्यावाम् मिलितौ देवनारायणमुखोपाध्यायं बहिरनयाव, तत्र चैकं चतुरन्तयानं मुखप्रावरणप्रावृतमुखान् चतुरो वाहकांश्चापश्यम् । महताऽवधानेन देवनारायणमुखोपाध्यायश्चतुरन्तयाने शायितोऽभूत् । बालकस्याज्ञयाहमपि चतुरन्तयान उपविष्टो देवनारायणमुखोपाध्यायस्य शिर उत्सङ्गे निधायातिष्ठम् । चतुरन्तयानं च कपाटैः पिहितमभूत् । वाहकाश्च चतुरन्तयानं स्कन्धे वहन्तो निश्शब्दपदं सवेगं कुत्रापि गन्तुं प्रावर्तन्त ।

इति चतुर्दशं चक्रम् ।

---

## अथ पञ्चदशं चक्रम्।

### ( देवोऽयं मनुष्यो वा )

मृतप्रायेणाचेतनेन देवनारायणमुखोपाध्यायेन सह कुत्रचिज्जीर्णे कुटीरे वसतो मेऽद्य दिनद्वयं व्यतीतम्। अतीतेऽस्मिन्दिने श्वःप्रातरेवास्य देवतुल्यस्य वा कस्य कृपयाऽस्य पुनर्जीवनाशाऽस्ति। अहन्तु न विश्वसिमीदं यद्देवनारायणमुखोपाध्यायः पुनरुज्जीवितो भविष्यतीति। महेश्वरस्याधीना देवनारायणमुखोपाध्यायस्य प्राणा अद्य कालाधीना वर्तन्ते। अस्य जीवनं मरणं च तदधीनमास्ते। स खलु भगवान् किमभिप्रैतीति न ज्ञायते। दिनद्वयं तूपविष्टस्यैव सतो व्यतीतम्। नेत्रयोर्नामापि निद्राया नास्ति। महत्योत्कण्ठया एकैकः क्षणो युगवद्व्यत्येति। बाल्याज्ज्ञातमनुसृत्य देवनारायणमुखोपाध्यायस्य शिर उत्सङ्गे निधाय निश्चलोऽविच्छिन्नमुपविष्टोऽस्मि दिनद्वयात्। एतादृशस्य सज्जनस्यैतादृशी विपत्! हा! संसार! किमिति नामैव भयानकोऽसि? एतावानत्याचारः एतादृश्यविचार्यकारिता च कुतो भवति? मनुष्यो मनुष्यस्य किमिति शत्रुतामवलम्बते? दुर्बलस्य विश्वासवतः पुरुषस्य कुतो रक्षणं न भवति? किं दैन्येनैव हेतुनेयत्य आपदो मयि निपतन्ति? किमयुद्धकुशलोऽस्मीत्येवाहं पादे परामृष्टो भवामि? किं बाल इत्येवाहं संसारेण परित्यक्तः? कुत इदम्? को वा मे दोषः? कुतोऽहमात्मानमपि स्वयं न प्रत्यभिज्ञातुं शक्नोमि? किं सत्यमेव मे न स्तो मातापितरौ? किमस्मिन् जगत्येव न म आत्मीयो नामास्ति? किमित्येनादृशोऽयं दण्डो मयि निपात्यते? किं करुणायामपि भुवि स पुरुषो नास्ति, य एतद्रहस्यं मा बोधयेत्? देवनारायणमुखोपाध्याय एतादृशी यमयातना कुतः? कोऽस्य दोषस्तादृशः? अनेन तु कदाऽपि कस्मा अप्यपकारो नाम नाक्रियत, एवं स्थिते दशेय मस्य कुतः? अद्यावधि त्वस्य सुखमेव चरितस्म जीवनम्, कस्यापि

कदापि कष्टमपि नानेन दत्तम्, तादृशोऽयमद्य कस्यचिद्दीनदीनस्य बालकस्योत्सङ्गेऽनाथ इव किमिति पतितो वर्तते ? अस्य कुमारो निर्मलचरितो निर्मलकुमारो गृहत्यागी कुतोऽभूत् ? धर्मतो विवाहिताऽस्य पत्नी किमित्येवं कुटिला संवृत्ता ? यस्यां निरतिशयेन प्रेम्णा प्रियतमं पुत्रमपि नागणयत्, तस्याः कृपया खल्वीदृशी दशाऽद्यानुभूयते, तादृशो बुद्धिमानपि कथमस्या रूपजालेन निबद्धोऽभूद्भवान् ? तात ! उत्तिष्ठ, पातय दण्डं दुर्वृत्तेषु, प्रतिगृहाणास्य बालस्य प्रत्युपकारम् ।"

न जानामि शोकविह्वलोऽहं किं किं प्रालपमिति । पाठकाः, क्षम्यतां बालस्य मे निष्प्रयोजने प्रलापे न दीयतां दृष्टिः ।

कुटीरोऽयं कस्य, कुत्र वाऽस्ते नाद्यावधि जानाम्यहम् । प्रपूर्वेद्यूरात्रिमारभ्य विचेतनं देवनारायणमुखोपाध्यायमुत्सङ्गे वहन्नत्रैव छन्नो वर्ते । भोजनसमय उपस्थिते त एव छद्मवेषधारिणस्समागत्य यत्किञ्चिद्भोजयन्ति, प्रतिनिवर्तन्ते चाविलम्बमानाः । तान्विनाऽद्यावधि नान्यस्य दर्शनमजायत । देवनारायणमुखोपाध्यायस्य उत्सङ्गादपसारणं प्रतिषिद्धं बालेन, दिनत्रयमेवमुत्सङ्गे शिरो निधायावस्थान एवास्य जीवने प्रत्याशा, अन्यथा तु न । अत एवाहमपि दृढप्रतिज्ञस्तिष्ठामि । किमेतावति कष्टेऽपि सोढे नायं जीवेत् ? पश्यामि परमात्मा किं करोतीति ।

कर्मसाक्षी भगवान् कमलिनीपतिरपि क्रमात्संहरन्निजान्करानगादस्ताचलशिरोवतंसताम् । सान्ध्येन तमसा च क्रमादधिक्रियते स्म सदिशं गगनम् । दिनान्ते कुलायमुपगच्छताम् विहगानाम् कलकलरवोऽपि क्रमेण समशमत् । इतस्ततश्चारताम् घूकसृगालप्रायाणाम् मृगाणाम् समवर्धन कण्ठरवः । शीततामुपगतश्च वातो वातिस्म मन्दमन्दम् । अहं तु पूर्ववदेव देवनारायणमुखोपाध्यायस्योत्तमाङ्गमुत्सङ्गे समुद्वहन्नुपविष्ट एवास्मि । एतावत्येव स एव बालकस्यानुचरो यमहं न जानामि दीपहस्तस्समागमत् । तेन सह सल्लपितुं नास्त्याज्ञा बालकस्य, अत एवाहं तूष्णीं मूक इवास्मि ।

सोऽपि सर्वं कृत्यजातं निरवर्तयत्। मेज्यहस्तश्च कश्चिद्ब्राह्मणो ममाग्रत एव भूमावुपविष्टोऽभवत्। अहमपि देवनारायणमुखोपाध्यायमुत्सङ्गे वहन्नेव यत्किञ्चिद्भुक्त्वा हस्तमुखपादमक्षालयमुपविष्ट एव। यदाहमिमं कुटीरमागतस्तत प्रभृति वाग्कस्य दर्शनमेव नाभूत्। बहुवारमनुयुक्तावप्येतौ तद्विषये किमपि न वदतः। हा कष्टम्! कुत एतौ न ब्रूतः! मास्त्वधिकम्, एकमपि शब्दं किमित्येतौ नोच्चारयतः? मया तु बहुधा सविनयमभ्यर्थना कृता, परं सर्वमपि व्यर्थमेवाभूत्। काष्ठपुत्तलिके इवाऽऽगच्छतः, कार्यं निर्वर्त्य पुनर्गच्छतः।

एवं निश्चलभावेनोपवेशनं ममासाध्यमेव। किमिति ममेति वक्तव्यम्, कोऽप्येतमुपवेष्टुं नैव शक्नोति, निर्जने वनेऽन्धतमसावृते कुत्रचित्कुटीरे शवमपि कश्चनोत्सङ्गे वहन् किं मादृशो बालो विमत्रयमपि स्थातुं शक्नोति? नहि नहि, कदापि न शक्नोति। तथैतादृशेऽसाध्ये कर्मणि किमिति मां न्ययूयुजद्भाग्यं। मन्ये विनेमं नान्य उपायोऽस्ति, अन्यथा सुसाध एव कश्चनोपायो बालेन कृतस्स्यात्। अस्यां रात्र्यां व्यतीतायामेव सर्वं दुःखजातं दूरीभवेत्। देवनारायणमुखोपाध्यायोऽप्युज्जीवितस्स्यात्। तदागच्छत पाठकाः! देवनारायणमुखोपाध्यायपुनर्जीवनप्रत्याशया बालकसमागमप्रत्याशया च यथाकथञ्चिद्यापयाम इमामपि रात्रिम्।

रात्रिस्तृतीये प्रहरे पदं निक्षेप्तुमुद्युङ्क्ते। कोष्ठकनिहितश्च दीपो जरापलितमूर्तिरिव वृद्धः कम्पयन् शिरो गणयतीव निजायुषो घटिकाः। रात्रिचराणां मृगाणामपि किञ्चिदुपशान्त इव कलकलरवः। अहमपि भित्तिमवलम्ब्योपविष्टो निद्रादेव्या इवावाहनेन निमीलितलोचनो ध्यायामीव। अचिन्तितमेव कुटीरस्सर्वोऽपि प्रकाशमयोऽभूत्। अहमप्युन्मीलितलोचनः पुरत एवावस्थिताम् दीपयष्टिहस्ताम् काञ्चन स्त्रियमवालोकयम्। या किल सा देवनारायणमुखोपाध्याय च सक्रोधमारक्ताभ्यां लोचनाभ्यां दहन्तीवादृश्यत। एतादृशीमिमामालोकयन् आत्मानं चासहायमालोचयतो मे कश्चिदन्यादृश एव भावस्समजायत। चित्रलिखित इवाहं तामेकमया दृष्ट्या

निरीक्षमाण आसम्। वदने मे शुष्कतामभजत। एकमपि शब्दं मुखान्निस्सारयितुमसमर्थ आसम्। सैवमब्रवीत्—अचिन्तितमेव हठान्मदालोकनेन त्वं भीत इव दृश्यसे, मा भैषीः, न किञ्चिदस्ति कारणं भयस्य। महता प्रयत्नेनाहं त्वत्सनीपमुपगताऽस्मि। काहमस्मि—अपि प्रत्यभिजानासि? अपि स्मरसि मां कदाचिदितः पूर्वं दृष्टाम्?"

अहमपि सभयमवदम्-"नहि, न त्वं कदाऽपि मयेतः पूर्वं दृष्टा। का वाऽसि त्वमिति नाहं जानामि।"

स्त्री-"काहमस्मीति तु क्षणान्तरे व्यक्तीभविष्यति, अस्तु, अहमेकं पृच्छामि, किं निर्मलं द्रष्टुमिच्छसि?"

अहम्-"कम्? निर्मलम्? भ्रातरम्? स कुत्रास्ते? स कुत्रास्ते?"

स्त्री-"अत्रैवास्ते, कोलाहलं यदि कुर्यास्तदा न दर्शयेयम्।"

अहम्-"नहि नहि, नाहं कोलाहलं करोमि, स कुत्रास्ते, कथय, अद्यैव गत्वा तं पश्यामि।"

स्त्री-"तर्हि शवमिममत्रैव निधाय मया सहागच्छ।"

यावदहं देवनारायणमुखोपाध्यायस्य शिरो भूमौ स्थापयितुमुद्युक्ते, तावदेव "मैवम्, मैवम्, मैवं कुरु, दुष्टाया अस्या वाचं कदापि नाङ्गीकुरु" इति कर्णे मे केनचित्कथितमिव। अहमप्यवहितोऽभवम्। सधैर्यं च तामेवमब्रवम्-"नाहं प्रत्यभिजानामि त्वाम्, नचावगच्छामि तेऽभिप्रायम् यदि च वस्तुत एव निर्मलो भ्राताऽस्मास्ते, तर्हि तमेवात्रानय, नचात्रागमनं स नाङ्गीकुर्यात्, नाहमिदानीमितः पदात्पदमपि चलितुं शक्नोमि" इति।

स्त्री-"अरे मूर्ख! सोऽत्रागन्तुं नेच्छति, मृतस्य पितुर्मुखमवलोकयितुं नाभ्युत्सहते। त्वया सह किंचित्सल्लपितुमभिलषति। मन्ये किमप्यावश्यकं कथयितुमिच्छतीति। नन्वागच्छ किमित्येवं बिभेषि?"

अहम्-कदाऽपि नागमिष्यामि, मृतस्य पितुर्मुखमवलोकयितुं किमिति स नोत्सहते? केनोक्तमयं मृत इति। यद्यहमितः उत्थितो भवेयम्

सत्यमयं मृतो भवेत्, नायमद्य मृतः । कथय त्वं तत्र गत्वा-'व्रजेन्द्रोऽद्य त्वदीयं वचनं नाङ्गीकर्तुं शक्नोति, त्वदीयमेव कर्यं सोऽद्य करोति, दिनत्रयं रात्रित्रयं चानिद्रस्त्वदीयमेव पितरमुपचरति, यदि स तत उत्तिष्ठेन्निश्चितमेव निर्मलः पितृहीनस्स्यात्' इति ।"

स्त्री-"अरे त्वं कीदृशो बालोऽसि ? किं मदीयं वचनं नाङ्गीकरोषि ? किं निर्मलेन न सम्मिलिष्यामि ? त्यजैनां मूर्खताम्, गच्छ, निर्मलस्तत्र तिष्ठति, तमप्यानय, उभाभ्यामपि मिलिताभ्यामन्योपचारः क्रियताम् ।"

अहम्-"नाहं कदापि गमिष्यामि, परित्यज्येमम्, नेतोऽहमुत्थास्यामि. किमित्येवं निर्बध्नासि, मम गमने अगमने वा कस्तव लाभो हानिर्वा । मन्ये, कुटिलेनाभिप्रायेणागताऽसीति । अबला भूत्वा कथमेतादृश्याम् सन्ध्यामेकाकिनी समागताऽसि ? कुत आगताऽसि ? का चासि त्वम् ?"

स्त्री-"पश्य, अहं किल तव निर्मलकुमारस्य च कुशलं कामयमानाऽऽगताऽस्मि, यद्यदहं कथयामि युवयोरेव तत्क्षेमाय । शीघ्रमित उत्तिष्ठ । अन्यथा का ते दशा स्यादिति नाहं कथयितुं शक्नोमि, अवश्यमेव त्वयेत उत्थातव्यम् । द्रक्ष्यामि, कथमितस्त्वं नोत्तिष्ठसीति ।"

हा हन्त ! कीदृशीयं विपत् ! केयं दुष्टा ? क्रमादियं निर्बन्धमेवा- रमते । अवगतोऽस्या अभिप्रायो मया । इयमिच्छति देवनारायणमुखोपाध्यायस्य अनुज्जीवनम् । भवतु यद्वा तद्वा । नाहमस्या जाले पतिष्यामि । द्रक्ष्यामि कियदस्या अस्ति बलम्, कियच्च चातुर्यमिति ।

स्त्रिया सक्रोधमुक्तम्-"किंनु त्वं नोत्थास्यसि ? मूर्ख ! किं जानासि कस्या वशेऽद्य त्वमसीति ? उत्तिष्ठ, अथैवोत्तिष्ठ । नचेदद्यैव तव नामापि निर्मूलयामि, दुर्भग, कृतघ्न, धूर्त ! उत्तिष्ठ, याहि दूरम्, निर्गच्छेतः, कथं नोत्तिष्ठः ?" इति ।

किमिदम् ? अकस्मादेव प्रज्वलन्त्यपि दीपो मन्दप्रकाशो दीपश्च व्य नश्यताम् । एवं किलाज्ञायत, यथा 'कश्चित्कुटीरं प्रविश्य तां स्त्रियं या मां तर्जयन्त्यास्त रज्जुभिर्ग्रन्थिमिव बध्वा यथागतमगात्' इति ।

पुनश्च केनचिदुक्तम् "आगच्छ, उभौ मिलितौ देवनारायणमुखोपाध्याय य ियाव । न युक्तमितोऽत्रावस्थातुम् । शत्रुभिरय देशोऽज्ञायत । अपि जानासीमा स्त्रियम् । इय किल देवनारायणमुखोपाध्यायस्य स्यालिका । एनैरेव भोजितो विष देवनारायणमुखोपाध्याय । शङ्करादयोऽपि बहिरवस्थिता अभवन्, नून तवापि प्राणा गतास्स्यु । तान् सर्वानपि बद्ध्वा कारागृह प्राहिणवम । आगच्छ, उभावावा मिलितौ देवनारायणमुखोपाध्याय चतुरन्तयाने स्थापयाव । एव च कृते वाहकास्त स्वस्थान प्रापयिष्यन्ति । अस्ति त्वया मम महत्कार्यम्, इतोऽपि कियन्त काल मया सह स्थातव्य त्वया, अस्तु, आगच्छ, आरोपयावश्चतुरन्तयानमिमम्" इति ।

तस्मिन्नेवान्धे तमसि महता श्रमेणावाभ्या चतुरन्तयाने शायितोऽभूद्देवनारायणमुखोपाध्याय । न जाने वाहकास्कन्धारोपितचतुरन्तयाना कादिश प्रस्थिता इति ।

आवामपि तस्मिन्नेव तमसि कुत्रचिद्गन्तु प्रावर्तिष्वहि । कुत्र गम्यते' नाह जानामि । पाठका स्यादेव विदित युष्माकम्, अस्मिन् गाढे तमसि मम सहायभूतोऽय चिरपरिचिताद्बालकादन्य इति । गच्छन्नेव चाहमचिन्तयम् 'देवोऽय मनुष्यो वा !' " इति ।

इति पञ्चदश चक्रम् ।

---

## अथ षोडशं चक्रम् ।

---

### ( वीरजा वीरबालुर्वा ? )

घने तमसि शून्यप्राये च वनोद्देशे बालकस्य पृष्ठतः पृष्ठतो याम्यहम् । कियद्दूर गन्तव्यमिति न जानामि । एव गच्छन्नेव बालक कुत्रचिद्दठान्निरुद्धगतिरभूत् । इतश्चेतश्च दत्तदृष्टिर्मन्ये यकञ्चिदन्वीक्षत इव । क्षणाच्च दूरादेव कश्चिस्साङ्केतिकशब्दोऽश्रूयत । प्रत्युत्तरित च बालेनापि

साङ्केतिकेनैव शब्देन । निमेषाच्च कश्चित्कृष्णकम्बलविहितशरीरः पुरुष आवयोः पुरतोऽदृश्यत ।

बालेन पृष्टम्-"कोऽसि ? गोविन्दलाल ?"

तेन चोत्तरं दत्तम् "अथ किम्"

बालक "यद्यस्मयोक्तं किमस्ति सर्वं सन्नद्धम् ?"

उत्तरम् "अथ किम्"

बालक -"वस्त्राणि वर्णकलाप इत्यादिकमपि सन्नद्धम् ?

उत्तरम् "अथ किम्"

बालक "बलमस्मदीयं कुत्रास्ते ?"

उत्तरम्-"पर्वतोपत्यकायाम्"

बालक "त्वदीयाश्चरा ?"

उत्तरम् "सर्वे सन्ति यथास्थानम्, आज्ञाया सर्वानानयामि ।"

बालक -"नहि, नहि, नास्त्यद्य तेषामावश्यकता, यदा भविष्यति तदा कथयिष्यामि, गच्छ मोऽध विश्रमगृहम्, यतो रूपपरिवर्तनमपि ह्यावश्यकम् ।"

आसीत् । अग्रगो गोविन्दलाल प्रस्थित, पृष्ठतश्चावाम् । अल्पीयस्यैव दूरे समदृश्यत कचित्कुटी । प्राविशाम वय ताम् । कुट्यान्तु विचित्रतमान्येव वस्तून्यदृश्यन्त । कुटचित्कोणे दीप कश्चिज्ज्वलन्नासीत् । अन्यतश्च काचिदुपवेशिनी निहिताऽसीत् । तस्याश्च नानाविधानि कृष्णानि श्वेतानि च कूर्चानि श्मश्रूणि केशपाशा इत्यादीनि निहितान्यासन् । मलिनतमेषु बहुषु अल्पेषु महत्सु च पात्रेषु कर्दमतामापादिता नानाविधा वर्णा, नानाविधाश्चाल्पीयस्यो महीयस्यश्च मञ्जूषा, वन्यानि बहुविधानि मूलानि, चित्रलेखनोपयोगिन्यस्तूलिका, महत्किञ्चिद्दर्पणम्, नानावर्णाकृतीनां वस्त्राणां खण्डा, काष्ठस्य च पोटलिका बहुमत्यास्तत्रासन् । द्वितीयो महत्यो जल

द्रोण्यो भूमौ निखाता आसन् । अन्यान्यपि बहूनि विचित्राणि तादृशानि वस्तून्यासन्, येषामवलोकनमात्रेणेदं यस्य कस्यचित्तान्त्रिकस्य चोरस्य वा गृहमिति सर्वैर्ज्ञायेत । अन्तःप्रविष्टेष्वेवास्मासु गोविन्दलालः किञ्चित्काशनिर्मितपट्टिकायनास्तरणं भूमौ प्रासारयत् । सर्वे च वयं तत्रैवोपविष्टा अभूम ।

बालकोऽवादीत्-"गोविन्दलाल ! अल्पावशेषैव रात्रिः, यादृशं रूपमस्य कार्यं झटित्येव कुरु त्वम्, ममापि सामग्रीं कृत्स्नामानय, बहिर्द्वार एव तिष्ठामि, दीपोऽपि कश्चिन्मह्यं दीयताम्" इति ।

बालक एतावदुक्त्वा कञ्चिदन्यं दीपं गृहीत्वा बहिर्निरगात् । तस्यैव पृष्ठतो गोविन्दलालोऽपि काञ्चित्पोटलिकां गृहीत्वा ।

अहं तु निश्चलो निश्शब्दश्चासम् ! कोऽयं व्यापारः ? वेषान्तरधारणस्येव सन्नाहो दृश्यते ! कोऽयं बालकः ? गोविन्दलालः किमिति सगौरवं समर्यादं चानेन सङ्गच्छति ? महाचतुरोऽयं बालकः को वा ? सर्वमिदं रहस्यमद्यावधि मया न ज्ञायते । पश्यतोहरेभ्योऽप्यन्यतमोऽयं बालः किमित्येतादृशानि कार्याणि करोति ? धृतवेषान्तरेण किं मयाऽद्य कर्तव्यम् ? नाहं जानामि, बाल एव कदाचिज्जानीयात् ?

अचिरादेव गोविन्दलालः प्रतिनिवृत्तो वर्णविन्यासाय ससन्नाहमुपविष्टोऽभूत् । प्रथमतश्च केनचिद्वर्णेनावर्णयन्मदीयं मुखम् । ततश्च सुन्दरतमं कुटिलमानीलं काकपक्षं समयोजयच्छिरसि । कर्णयोश्च हीरकजटिते सौवर्णे कुण्डले समसञ्जयत् । शीर्षकं सिरसि, चण्टातके ऊर्वोः, हास्तिनपुरीये पदत्रे पादयोश्च यथायथं संयोज्य मां मध्यदेशीयं बालमकरोत् । तदीययोर्हस्तयोर्वर्णविन्यासे चातुरीं शीघ्रकारित्वं चावलोक्य विस्मितमिव मे चेतः । किमधिककथनेन, यदाहं दर्पण आत्मानमपश्यम्, तदा नाशकं मामेवाहं प्रत्यभिज्ञातुम् । सर्वथैवान्यादृशो मे संवृत्तो वेषः । कस्यास्ति सामर्थ्यं दिवाऽपि मां पश्यतः प्रत्यभिज्ञातुम् । एतावत्येव "कोऽहमस्मि ! प्रत्यभिजानीहि" इति पृष्ठत आगतेन केनचिदुक्तम् ।

परिवृत्तमुखश्च तेजस्विनीं काञ्चित्परिव्राजिकामपश्यम्, या किल काषायं वसाना गळे रुद्राक्षमयीं मालां दधाना शिरसि जटिलां जटां बिभ्रती ललाटे च भस्मत्रिपुण्ड्रं बिभ्राणा हस्तेन त्रिशूलं वहन्ती कञ्चिदन्यादृशमेव भावम् चेतस्युदपादयत् । सविस्मयमहमपृच्छम् "का त्वमसि ? देवी वा दानवी ? " इति ।

"किं न मां प्रत्यभिजानासि ? किं मदीयस्स्वरोऽपि न प्रत्यभिज्ञायते ? धिक्, कीदृशोऽसि त्वम् ।"

"आम्, आम्, त्वम् स एव बालोऽसि, अद्यासि प्रत्यभिज्ञातः । विचित्रचेष्टितो बालोऽसि त्वम्, सत्यम् वद, कस्त्वमसि देवो देवी वा ? मानवो मानवी वा ? न मे तृप्यतो नेत्रे त्वदीयं सौन्दर्यं पश्यती । त्वदीयं चातुर्यं निरीक्ष्य सम्भ्रान्तमिव मे चेतः । त्वन्निरीक्षणमात्र एवाहमुन्मत्त इव भवामि । कथय, कस्त्वमसि, मन्ये नूनमसि म आत्मीयानामधिकः । संसारोऽयं मां ग्रसितुमिच्छति, पिता माता च मे प्राणान् गृहीतुमिच्छतः । एवं स्थिते किमित्येवं मदर्थं श्राम्यसि ? छिन्द्धि मे संशयम्, कथय कस्त्वमसि ? त्वामहं केन नाम्ना सम्बोधयेयम्,कथय, नचेत्-" । इत परं वक्तुमहं नाशकम् । गळो निरुद्धोऽभूच्छोकावेगेन । प्रावर्तत धारया प्रबोढुमश्रु । सर्वाङ्गीणं च स्वेदकम्पौ समजायेताम् । जडतया च परिगृहीतोऽभवम् । क्षणाच्च मार्जिताश्रुः पुरतः पुत्तलिकावन्निश्चलभावेन तिष्ठन्तं हिमाद्रिशिखरादिव प्रपतता गाङ्गपूरेण प्रवहताऽश्रुपूरेण पूरितनयनमेकाग्राभ्यां मामेव निरीक्षमाणं परिव्राजिकावेषप्रतिच्छन्नं तमेव बालकमपश्यम् । किमितोऽप्यहं तूष्णीं तिष्ठेयम् ? झटित्यपृच्छमेव "कुतस्त्वं रोदिषि ?"

बालोऽवादीत्-"कुतोऽहं रोदिमि? त्वामेव दृष्ट्वाऽहं रोदिमि । मदीयं हृदयं किल मृदुतरम् । यस्य कस्यचिदपि दुःखिनो दर्शनमात्रेण मम दुःखं भवति, रोदिमि च तत एव । त्वं हि निर्दोषोऽसि, महच्चेदं कष्टम् महती च विपत्तवेदानीमापतिता, अत एव त्वां दृष्ट्वा रोदिम्यहम् । कीदृगहं

मस्मीति ज्ञात्वा किं वा करिष्यसि त्वम् । अस्त्वयं जनो महतो महानिरयेव, किं त्वमङ्गीकरिष्यसि ? अस्तु वाऽल्पीयसोऽप्यल्पीयानित्येव, किं विश्वसिष्यति ते हृदयम् ? । इदमेव परमिदानीमवशिष्यते-पुमानहं स्त्री वेति, इदन्त्वमपि पश्यस्येव, यदा यथा भवितव्यं तदा तथाऽहं भवामीति । यद्यपि सत्यमिदं नाहं पुमांस्त्री च भवेयमिति, निश्चितमेव भाव्यं मया पुंसा स्त्रिया वा । परमद्य पुमां स्त्री वेति ज्ञातुं न शक्यते त्वया । आयास्यति सोऽपि कश्चित्समयो नूनम्, यत्र स्वयमेव मां त्वं प्रत्यभिज्ञास्यसि । अस्तु, आगच्छ, गच्छामः कचित् । अपि जानास्यश्वमारोढुम् ? " इति ।

अहमवदम्-"अथ किम्, बाल्ये बहवोऽश्वा आरूढा मया, कियतः कालात्त्वास्त्यभ्यासः । परं शक्नोम्यारोढुम् । किञ्चिदहं पृच्छामि, कृपयाऽस्य प्रत्युत्तरं वक्तव्यमेव भवताऽवश्यम् । कस्त्वमसीति तु नाहं ज्ञातुमशकम्, मास्तु तत् । इदं तु कथ्यताम्, किन्नामधेयो भवान्, केन नाम्ना सम्बोधनीयो भवान् ?" इति ।

बाल: "यदाऽस्मि बालकरूपेण तिष्ठामि तदा वीरबाहुनाम्ना, यदा च स्त्रीवेषेण तदा वीरजा नाम्ना सम्बोध्ये । किञ्चेदमन्यत्कथयामि—कदाऽपि मां भवच्छब्देन न सम्बोधय, यतोऽहं न तमर्हामि । अस्त्वागच्छ मया सह " इति ।

एतावदुक्त्वा च प्रावर्तत गन्तुं वीरजा । अहमपि तस्मिन्नेवाध्वे समभि तस्या एव पृष्ठतः पृष्ठतोऽगमम् । गच्छतश्च मे चित्ते समभूदयं विचार -र्वीरजा वीरबाहुर्वा ? इति ।

इति षोडशं चक्रम् ।

---

# अथ सप्तदशं चक्रम् ।

## ( अलौकिकं सामर्थ्यम् । )

वीराङ्गना वीरजा देवी किञ्चिदप्यविश्रम्य गच्छत्येवाधेन । ममाप्यश्वो यात्येव तस्याः पृष्ठतः । औषमश्वेतिमा पूर्वस्याम् दिशि ततः क्रमेण गगने च समदृश्यत । भगवतो भास्करस्य सौवर्णैः किरणैराक्रान्तमभूत्प्रथमत उदयाचलशिरः । ततश्चान्येषामपि पर्वतानामुच्चतमो भागोऽपि । तमसा च पलाय्य न्यलीयतास्ताचलगुहासु । वयमप्यतीत्य दुर्गमं वनं कुत्रचिदन्यत्रैव चेतोहरे वनोद्देशे यावः । रात्रेश्चतुर्थयाममारभ्याश्वपृष्ठे स्मो वयम्, यामश्च पश्चिमामभिमुखम् । कुत्र यामो नाहं तं जानामि । यावत्तमसोऽधिकार आसीत्तावदश्वावपि मन्दमन्दमचलताम् । किञ्चिदपयात एव तमसि प्रावर्तेताम् सवेगं गन्तुम् । वस्तुत एवावयोरश्वौ बलिष्ठौ तेजस्विनावतिरंहसौ चावर्तेताम् । इतस्ततःकुत्रापि दृष्टिर्न पात्यते । केवलं पश्चिमामभिमुखं यावः । गच्छतोरेव कश्चन चतुष्पथो दृष्टिगोचरोऽभूत् । तत्र निरुद्धगतिश्च तत इतः क्षणं निरीक्ष्य प्रावर्तत पुनर्दक्षिणेन पथा गन्तुं वीरजा । कियद्दूरगमनानन्तरं काचित्कुल्या समदृश्यत । या तद्वनं द्वेधा विभजन्ती पूर्वाभिमुखं प्रवहन्त्यासीत् । इमं देशं कुल्यां वेमां नाहं जानामि । केवलमहं वीरजायाः पृष्ठतो गच्छामि । पश्चिमभागस्थभूमिमतीत्यैव पुरतः किञ्चित्पुरातनं खण्डगृहमपश्यम् । यस्य प्रधानद्वारं विवृतमेवावर्तत । अन्तरस्य कस्याप्यवस्थितिर्नाज्ञायत । वीरजामन्वहमप्यधातरमश्वात् ।

वीरजाऽवादीत्—"आगच्छतोः कुल्यातीरे यद्वनं वनं समदृश्यत, तत्रैव गत्वाऽश्वाविमौ विश्रामय । बहुशः कोऽपि तत्र नायास्यति । यदि कदाचित्कश्चिदागत्य यत्किञ्चित्पृच्छेत्, तदा किमपि न प्रतिवक्तव्यम् । बहुशो निर्बन्धस्तु, 'देव्या राज्या अनुचरोऽहम्' इत्येतावत्कथय, अन्यत्किमपि न कथय" इति । एतावदेवोक्त्वा वीरजा खण्डगृहं प्राविशत् । अहमप्यश्वौ गृहीत्वा कुल्यातीरस्थं वनं प्रातिष्ठे ।

कीदृशीयं रहस्यमयी घटना ? कोऽयमुद्देशो भूमेः ? कुत्राहमागतोऽस्मि ? किं वा प्रयोजनमुद्दिश्यायं प्रयत्नः ? महाप्रतापशालिन्या अस्या देव्याः खलु लीला दुर्विज्ञेयाऽस्मादृशाम् । नूनमस्ति किञ्चिद्गूढं तत्वम्, अन्यथा किमितीयमियत्कष्टं सहते ? एतावद्दूरमश्वाभ्यामागमने किं कारणम्? हे महामाये देवि ! क्षुद्रतमोऽस्म्यहम्, नास्मि शक्तस्त्वदीयमनन्तपारं महिमानं विज्ञातुम् । यदि कश्चिदागत्य पृच्छेन्माम् "कस्त्वमसी" ति, नूनमहं वदिष्यामि—"अहमस्मि देव्या राज्या अनुचरः" इति । केयं देवी राज्ञी ? किमियमेव वीरजा, वीरबाहु, देवी राज्यपि ?

जन्मप्रभृत्यद्यावधि न मया कदाचिदपि मान्दुरिककृत्यं कृतम् । यदाऽहं पितुर्गृह आसम् तदा मान्दुरिका निजं कर्म कुर्वन्तो दृष्टाः । किं तदा मया इदमपि चिन्तितं यन्मम शिरसि विधात्रा मान्दुरिकताऽपि विलिखितेति ! हा ! हन्त ! सर्वमिदं कस्य दुष्कर्मणः फलम् ? अस्तु, किमनेनेदानीं पर्यालोचितेन । किन्तु राजकुमारास्संसारचक्रे पतिता यादृशीं दशामनुभवन्ति, तस्या अहं दृष्टान्तभूतोऽस्मि । लज्जा तु मया तदैव क्षालिता । हसन्तु निन्दन्तु वा, अहमस्ति देव्या राज्या दासः, देव्या राज्यास्सेवैव मे प्रधानतमं कार्यम् ।

यावच्छक्यं मया कुत्रापि न्यूनता नाक्रियताश्वयोः परिचर्यायाम् । सुन्दरतमानि नवीनानि शष्पाणि महता प्रेम्णा भक्षयितुमारभेताम् तुरगौ । अहमपि कस्यचिद्घनच्छायस्याम्रवृक्षस्य छायायामुपविष्टश्श्रममपनयन्नासम् । कियतःकालस्यानन्तरं मन्दः कश्चिच्छब्दोऽश्रूयत, ततश्च पदशब्दोऽपि । अहमपि तदानीं पन्थानमालोकयन् महताऽवधानेन निश्शब्दपदं तदेव खण्डगृहम्प्रति यान्तौ द्वौ पुरुषावपश्यम्, यस्मिन्नेव कियतः कालात्पूर्वं मदीया वीरजा देवी प्राविशत् । मा मामेतौ द्राक्षातामित्यहं केनचिद्वृक्षप्रकाण्डेन प्रतिच्छन्नस्तौ सम्यगदृश्यवर्तिषि । तत इतश्च सावधानं निरीक्ष्य ताभ्यां कश्चित्सङ्केतः कृतः, तत्क्षणादेव कश्चित्पृथुदीर्घशरीरः स्थूलं दीर्घं कञ्चिद्दण्डं हस्ते दधान आजगाम । तद्दर्शनमात्रेणैवोद्विग्नमेवाभवन्मे मनः, किं ते पर-

सरं सल्लपन्ति किं वा चिकीर्षन्तीत्येतदवज्ञिगमिषयाऽहमाक्रान्तोऽभवम् । यत्रैतेऽवर्तन्त तत्पाश्चात्यभागे कुल्यातटे घनं कञ्चित्कुञ्जमपश्यम् । तत्र गमने तेषां सल्लापस्सम्यक् श्रोतुं शक्येत । अद्यापि क्रमाद्दूरे निर्गतौ । अयमेव समय इत्यहमपि तेषां दृष्टिवंचयंस्तमेव कुञ्जम् प्राप्य छन्नगात्रोऽतिष्ठम् । तेषामालापश्रवणाय उत्क्षिप्तकर्णोऽभवम् । तेष्वेक एवमकथयत् ।

"अरे ! साऽहि महाधूर्ता,तस्याः छलेन हननं कष्टसाध्यम् । अस्तु, मन्दं मन्दं गच्छामः,तस्या. पाश्चात्यभागे स्थित्वा मस्तके एकं दण्डं पातय" इति ।

अपरः—"रायेन किमुक्तम्, अपि जानीषे ? तयैवाद्यावधि तस्य प्राणा रक्षिताः । अरे सा कृतघ्ना महाधूर्ता । तदुपरि महत्कुपितो रायः ।। माधव ! किं त्वयाऽऽभ्यामेव नेत्राभ्यां सा खण्डगृहम् प्रविशन्ती दृष्टा ?" इति ।

प्रथमः -"किमहम् मिथ्यैव वदामि । तदाकर्ण्य तत्र तां रे स्थिरेन मया सर्वमालोकितम् ! स नवीनो दुष्टो यत्र बन्दीकृतोऽस्ति तस्यैव निकटे त्रिशूलहस्ता यत्किञ्चिच्छोचन्ती सा मया दृष्टा । नन्वागच्छ, त्वमेव किमेव. बिभेषि ? एकस्या बालाया एतावती भी. । ( सक्रोध दण्डधर प्रति ) वीरेन् ! त्व पृष्ठत. पृष्ठत आयाहि छन्नगात्रः । गच्छामोऽत्र किंवा भवतीति पश्याम. ।"

एवं वदन्तस्ते खण्डगृहं प्राविशन् ।

गोविन्दलालोऽब्रवीत्-"एत मन्ये देवी राज्ञीं रक्षिष्यतीति । अस्मदीया देवी राज्ञी किमेतावन्निर्बलाऽसमर्था च यदनायासेनैवान्यदीये जाले पतेत् ? अत्र भूमण्डल एव तादृश कोऽपि नास्ति य एना हानिं प्रापयेत् । सा हि निर्जन चातुर्येण महतो दुर्गादपि शक्नोति विनैव कष्ट निर्गन्तुम् । ये तु तस्या हिंसने प्रवृत्तास्ते हि लाभस्थाने हानिमेव प्राप्नुयु " इति ।

अहमपि ससम्भ्रममपृच्छम्-"किमियमेव देवी राज्ञी ? किमिदम् ? सर्वं रहस्ययुक्तया मदीय सन्देह किमिति न दूरीकुरुषे ?" । गोविन्दलाल

स्सगम्भीरमवादीत्-"तूष्णीं भवत, एवं करणं हि देव्या राज्ञ्या आज्ञाविरुद्धम्। अहमिव नान्यःकश्चिदेवं प्रष्टव्यः,यदहं पृष्टोऽस्मि कामं प्रष्टोऽस्मि।"

अहम्—"अस्तु, खण्डगृहेऽत्र गमने किं प्रयोजनम्, कस्य कृते महानयं प्रयास उररीकृ... ?"

गोविन्दलालः—"सर्वमिदं स्वत एव व्यक्तीभविष्यति परस्तात्। क्षणमुपविशत स्थिरतया। ततो द्रक्ष्यथ देव्या राज्ञ्याः प्रभावम्।"

एतावत्येव समये महान् रोदनशब्दोऽश्रूयत। गोविन्दलालस्ससम्भ्रममवादीत्-यत्र पूर्वमास्तत्रैव गत्वा छन्नास्तिष्ठन्तु भवन्तः किञ्चिदहं गत्वालोक्य चागच्छामि-किमिदमिति। नात्र भीः कार्या, नच खण्डगृहम् प्रवेष्टव्यम्" इति। एतावदुक्त्वा गोविन्दलालोऽगात्।

अहमपि तत्रैव वन उपविष्टो मनोरथमारूढो विचरितुमारभे। 'केयं देवी राज्ञी! रूपेणाबला बालिकाऽपि बुद्धया सिंहवाहां देवीमप्यतिशेते। द्रष्टव्यमद्य किं किमाश्चर्यं भवतीति' इत्यादि यद्यदहमचिन्तयं नास्ति शक्तस्तत्सर्वं कथयितुम्। विमना इव भूत्वा यावदहमेतदन्यच्च चिन्तयामि तावदेव त्रिशूलहस्ता देवी राज्ञी सभ्रुकुटीभङ्गं गोविन्दलालाय "नेतो मम पुरतः किमपि हिंस्रं कर्म भवतु। कुत्र वा गच्छन्ति ते सर्वे? मदीयमुष्टेर्निर्गत्य गन्तुं मार्ग एव कोऽस्ति। अद्य यत्कर्तव्यं तज्झटित्येव कुरु" इति कथयन्ती समदृश्यत। क्षणाच्चान्तर्हितैवाभूत्।

गोविन्दलालो मामवादीत्-"झटित्यागच्छत" इति। अहमपि तथैव पृष्ठतःपृष्ठतो गन्तुं प्रावर्तिषि। इतस्ततश्च भ्रमन् यत्राहं फुल्यातीरे सर्वाभ्यां पूर्वमासम् ततोऽपि किञ्चिद्दूरं निर्गतो यदहमपश्यं तेन कृत्स्नमेव शरीरं जडप्रायमभूत्। अन्धतमसा वृतेचाभूताम् लोचने। किमहमपश्यम्? कञ्चित्पुरुषम्। कम्? देवनारायणमुखोपाध्यायस्य पुत्रं निर्मलकुमारम्! मम प्रियभ्रातरं निर्मलकुमारम् हन्त! हन्त!! तर्हि किमयमेवात्र बन्दीकृतोऽभूत्? किम् एव निर्मोचनाय देव्या राज्ञ्येयान्प्रयासोऽङ्गीकृतः? धन्याऽसि देवि धन्या-

ऽसि ! धन्या ते दयनीयेषु दया ! आनन्देन मे नेत्राभ्याम् गङ्गा इरीव प्रावर्तत वाष्पधारा । ततोऽपि स्थातुमशक्तो जडीकृतसर्वाङ्ग उपाविशं तत्रैव। गोविन्दलालोऽवादीत् "स्वाभाविक एवायं गुणो मनुष्याणाम् । उचितुत, नैतादृशेषु स्थानेष्वेवमाचरितुं युक्तम् । किं न पश्यन्ति देवीं राज्यस्मदीया वास्तिकापि कीदृशधैर्यवतीति । श्रूयताम्, इतोऽपि देव्या राज्ञ्या बहवो निदेशाः पालनीया वर्तन्ते भवद्भिः । योऽयं प्रभुस्तत्र तिष्ठति नूनं जानन्ति तं भवन्तः । तस्यैव कृते प्रयत्नोऽयमियान्व्यरच्यताय । यथा सप्रयत्नेनापि न प्रत्यभिजानीते भवतस्तथा वर्तितव्यं तन्निकटे भवद्भिः । पुनरपि तन्निकटं गत्वैवं रोदनादिकं न कर्तव्यम् । एतदर्थमेव वेषपरिवर्तनमपि भवतामक्रियत । कामं स करोतु यद्वा तद्वा, भवद्भिस्तु मूकतैवात्मनोऽभिनेया तन्निकटे । इदमेव चास्माभिर्भवद्विषये तस्मै कथितमप्यास्ते । उभावपि भवन्ता-वश्वारूढौ येनैव पथा पूर्वमागत तेनैव गच्छताम् । चतुरा भवन्तस्ततस्स्वयमेव मार्गोऽपि ज्ञातव्यः । यदि कदाचिन्मार्गो विस्मृतस्स्यात् भवद्भिरेव कष्टं सोढव्यं स्यात् । नान्योऽत्र दोषस्य भाजनम् । यो रात्रौ यत्र कुटीरे रूपपरिवर्तनं कृतं तत्रैवास्मदागमनपर्यन्तं स्थेयं भवद्भिः । अश्वस्तु वने समुत्स्रज्यताम् । तस्मै च ( निर्मलकुमाराय ) गमनाय हस्तसङ्केतः क्रियताम् । यच्चान्मयोक्तं सर्वं तद्धृदि स्थाप्यताम् । मास्म विस्मरत । आगच्छत, भवतोः प्रस्थानसंविधानं करोमि, " इति ।

सर्वमिदं श्रुत्वाऽवनमितशिरास्तस्यैव पृष्ठतः पृष्ठतोऽगमम् । हन्त ! हन्त !! इयताम् दिवसानामनन्तरं निर्मलभ्रात्रा सङ्गतोऽस्मि । परमेकमपि शब्दं तेन वक्तुं न शक्नोमि । निजपरिचयदानस्य नास्ति मेऽधिकारः । जिह्वायाश्चालनमपि निषिद्धम् । अनात्मवशोऽहम्, किंवा कुर्याम् ! निर्मलस्य समीपं गतस्तूष्णीमतिष्ठम् न जानामि गोविन्दलालेन तस्य कर्णे किमपि कथितम् । पुनश्च तस्यैव प्रेरणयाऽवामश्वावारुह्य येनाहं पूर्वमागतस्तेनैव पथा गन्तुं प्रावर्तिष्वहि ।

गच्छतोरेव बभूव मध्याह्नः । निद्रया तु स्वयमेवाहं चिरादेव परित्यक्तोऽस्मि । अद्यतु भोक्तुं पातुमपि नास्ति कोऽप्युपायः । कृत्स्नाम् रात्रिं जागरणम्, तदुपरि बलवती समुत्कण्ठा, ततोऽप्ययं निर्जलैकादशी ! प्रियपाठकाः, भवन्त एवालोचयन्तु कीदृशी मे दशा तदानीं स्यादिति । परमप्रियो निर्मलकुमारस्सहैव वर्तते । परं तेन सह सल्लपितुम्; किमिति सल्लपितुमिति, तस्मै मुखं दर्शयितुमपि नाथाहमीशे । पश्यत कालस्य माहात्म्यम् । किमिदमल्पं दुःखकारणम् ? परं किं क्रियताम् । अवशेन मूकताऽङ्गीकृता । मध्येमध्ये यदा निर्मलकुमारो मां पश्यति तदाऽहं सङ्कुचितगात्रो भवामि । एकैकदा च मनसि भाति-निर्मलकुमारं सम्यगालिङ्ग्य प्ररुद्य सर्वं च वृत्तजातं तस्मै निवेद्य मनसो वेदना किञ्चिच्छिथिलीक्रियताम्' इति । परं कर्तुमेवं तदा न समर्थोऽभवम् । यतएवं प्रवर्तमान एव मयि शरीरं जडतां भजति गळश्च प्रतिरुद्धो भवति । किमेवम्, देव्या राज्ञ्या आज्ञा वा कथं मयोल्लंघ्यताम् !

प्रायस्सायं पञ्चघण्टावादनसमये महता भ्रमणेन तस्यैव कुटीरस्य निकटमभजावावःम्, यतएव पूर्वेद्युःप्रस्थितोऽहम् । मास्म भूवमहं प्रत्यभिज्ञातो निर्मलेनेति तत्र सावधानोऽभवम् । स्वेदेन स्रवता मुखनिहिते वर्णकलापेऽपहृते नूनमहमनेन प्रत्यभिज्ञातो भवेयमिति महती शङ्का समभून्मनसि । परं मुखे निहितौ वर्णौ न सहसा विलययोग्योऽभूत् । अत एवैतावतापि स्वेदजालेन न कापि विक्रिया समजायत ।

कुटीरनिकटं प्राप्यैवाहमश्वादवातरम् । निर्मलेन सह सङ्केतकारणस्याप्यावश्यकता नासीत् । स्वयमेव स एकदा मां निरीक्ष्य गन्तुं प्रवृत्ते । पश्यत्येव मयि सोऽन्तर्हितोऽभूत् । चिरमहं तस्यैव मार्गं निरीक्षमाणोऽतिष्ठम् । परं सत्वेरदापि नैव मुखं व्यवर्तयन्नवालोकयन् स्वैरमगादेव । किंचिद्विषण्णमनाश्चाहं तत्रैवाश्वमुत्सृज्य कुटीर प्रत्यगाम् । परं तदा तावदहं श्रान्त आसं-यनः कुटीरं प्राप्यैव विचेतनोऽपनम् । यदा चारण्यकर्शीतो मुग्धो वातःकियच्चिरं शरीरमस्पृशत्तदाऽहं लब्धचेतन. किञ्चिद्विश्रान्तविमर्नाभायोऽभवम् ।

उत्थायच मन्निकटस्थयैव कुञ्चिकया तालयन्त्रमपनीय द्वारमुद्घाट्यान्त प्रविश्य चोपविष्ट एव जयावरणे शिरस्त्रमन्यच्चावतार्यास्थापयम् । भारापगम इव किञ्चित्सुखमन्वभवम् । ततश्च मुखनिक्षिप्तो वर्णकल्पः कथमपगच्छेदिति चिन्तयम् । यत्र यत्र वस्त्रमावृतमभूदङ्ग तत्र तु नासीद्वर्ण । केवलं मुखगलादिषु दृष्टियोग्येषु स्थानेष्वासीत् । कलशात्पानीयमादाय वर्णापनयने बहु प्रायते । पर कथमपि वर्णो नापागात् । तैलश्लिष्टे वस्तुनि जलप्रक्षेपे या दशा भवति सैवात्रापि समदृश्यत । नाय जलेन गच्छेद्वर्ण इति च निरचिनवम् ।

वर्णापाकरणाशां कोष्ठके निधाय भोजनार्थं यत्किञ्चिदन्वेष्टुमारभे । क्षुधा यद्ध तदा तथा पीडितोऽभवम्, यथा क्षणमपि भूमावुपवेष्टुमप्यसमर्थो ऽभवम् । 'गोविन्दलाले कार्यनिर्वाहार्थे किं कस्यचिद्ग्रामगम्य क्षुधा पीडित स्यात्कश्चभोज्यस्थावस्थान सम्भावितम् । येनावश्यमेवात्र कुटी रे यत्र कुत्रचि- यत्किञ्चिदपि वा भोज्य निहितमेव भवेत्' इत्यालोच्य ततइत कियन्तश्चि- रकालमन्विष्यन्नह कुत्रचित्कोष्ठके कानिचित्फलानि मूलानि भक्ष्याणिच कस्य- चिद्वानरस्यान्तर्निहितान्यपश्यम् । यद्यप्येतेषा भक्षण न तेनाज्ञप्तम्, तथापि किं करोमि,क्षुधा बलवत्पीडितोऽह कथ तूष्णीं तिष्ठेयम् ' । क्षालितहस्तपाद- श्चाह तेषा कन्दादीना भागत्रयमकल्पयम् । एकेन झटित्यपूरयमुदरम् । पूर्णे चोदरे किञ्चित्स्वस्थ इवाभवम् । पश्यत्येव मयि क्रमाद्व्यतीयाय दिवस । सन्ध्यारुणिम्ना च द्विगुणितारुणिमानि वृक्षाग्रतरुणपल्लवानि रागिणामिवान्य- कुर्वन् हृदयानि । अन्तर्हिते च सवितरि भर्तृविरहदीनाना कमलिनीनामिव हृदयेषु धूमायमानस्य विरहानलस्यान्तरान्तरा धूमानन्वकुर्वस्तमांसि । चतुर्दिश चान्धेन तमसाऽध्यक्रियत ।

क्रमेण रात्रिरप्यागात् । निश्शब्दतया निर्जोऽन्धकारोऽशून्योऽक्रि- यत । केवलमहमेकाकी तत्र कुटीरे उपविष्टो यत्किञ्चिच्चिन्तयमान आसम् । न दीप ,नदीपोज्ज्वलनायाग्नितूलिका वाऽऽसीत्, अतएवालोकेन दूरादेव परि- हृतोऽहमभवम् । अनायत्तया तूष्णीमुपविष्ट एवासम् । किमत्र दीप प्रकाशि- ष्यत एव न ? किमेक दिनमपि वा न परित्यजेद्विपन्नाम् ? किं यावज्जीव-

मेवमेवानुभाव्यं मया कष्टम् ! मन्ये जन्मन्यस्मिन् न मे मातापित्रोर्दर्शनं भवेदिति । विधात्रा किमित्यहमुत्पादितः ! हन्त ! निर्मयं बहिर्विचरितुमपि न शक्यते । किं विपदोऽनुभवायैवाभून्मे जन्म ? पश्यत,न सहायः,नानुचरः, एकाकी घोरेऽस्मिन् वने समुपविष्टोऽस्मि । स्थानस्यास्य नामापि नजानामि, कीदृश्याऽहं विपदा ग्रस्तोऽस्मि । किं करोमि ? कुत्र गच्छामि, न मार्गमपि जानामि ? हन्त गमनमेव मे कुत्र ? कुत्रवा गम्यताम्, अत्रैव हृदये निधाय शिलाशकलं यापयामि रात्रिम् । आयातु यः कश्चिन्नवा; अनुभाव्यं त्वनुभवेनैव नाश्यम् । स्वपन् जाग्रत् उपविशन् तिष्ठन् परिवर्तमानश्च कथंकथञ्चिदयापयं रात्रिम् । यथा नियमं भगवानभ्युदीयाय भास्करः । मम तूदितेऽपि सहस्रांशौ न कश्चिद्विशेषः, यतस्सूर्याचन्द्रमसौ राकामावास्ये दिवारात्रीच तुल्यरूपाः । जगति प्रसृतञ्च तमो व्यनश्यत्, न पुनर्मम मानसे । किमेवं वदसि ? कस्तवानर्थः ? इतिचेत्; न कोऽपि, न मामकस्मादधि व्याघ्रः, नाहमस्मि निगीर्णो राक्षसेन, न चापतच्छिरसि मेऽशनिः । केवलमस्मि मज्जामि विपत्समुद्रे । शान्तिसमुद्रे क्षणमात्मानं प्रच्छायोपविष्ट आसम् न किमप्यन्यत् ।

युगमात्रारूढ एव नभो भगवति भानौ गोविन्दलालोऽभ्यागात् । पूर्वेति पूर्व इति क्रमेण देवीमधिकृत्य शतं शतं प्रश्ना अक्रियन्त मया ।

गोविन्दलालोऽब्रवीत्–“देवी राज्ञी काममस्ति कुशलिनी, नास्ति काचिदपि तस्या विषये चिन्ता । महति कार्यचक्रे पतिता वयं नाशकाम पूर्वेद्युरागन्तुम् । क्षम्यताम् । देवीराज्ञ्यपि प्रार्थयत इत्थमेव । भो महत्कष्टमनुभूतं भवद्भिरिति सत्यमिदम् । अस्तु, इदन्तु कथयत, येन सह पूर्वेद्युर्मन्तस्समागतास्तेन अपि न प्रत्यभिज्ञाताः ? कथयत सत्यम्,यद्यन्यथापि कृतं स्याच्छक्यतेऽद्यैव समीकर्तुम्' इति ।

अहमवदम्-“सशपथमहं वदामि, यथयथा यथा त्वयोक्तं तत्तथातथाक्रियत मया, अल्पोऽपि व्यत्यासस्तत्र नाकारि । गोविन्दलाल ! यथा मन्यसे, नाहमस्मि विश्वासघाती ” इति ।

गोविन्दलालः-"नहि नहि, किमित्येवं कथयन्ति भवन्तः ! मया त्वे- तदर्थमपृच्छ्यत, यदि कदाचिद्दैवाद्रहस्यं प्रकटितं तदाऽथैव तस्य प्रतीकारः कर्तव्य इति । अस्तु, वस्त्रादिकंतु भवद्भिरपसारितम्, वर्णकं नाशक्यत किल मोचयितुम् !" ।

अहम्-"बहुप्रयत्नेऽपि नाहमशकं वर्णकमुन्मोचयितुम् । कथय, शक्यते वर्णापाकरणं कर्तुम् ? अथ यावज्जीवमेवमेव मया स्थेयम् ?" ।

गोविन्दलालः-"वर्णापाकरणस्य त्वस्ति सुकर एव कश्चिदुपायः,तं विना कस्यास्ति सामर्थ्यम् ? योऽपाकुर्यात् । अस्मदीया देवी राज्ञी एतावन्तं कालं बालकरूपेणावर्तत, किं कदाचिदपि वा भवतामन्यथाबुद्धिरभूत् । आगच्छत, अपाकरोमि वर्णम् ।

उपवेशिन्यां यानि पत्रमूलादीनि निहितान्यासंस्तेष्वेव कानिचित्पला- शानि सम्मर्द्य तद्रसेनोपलिप्ते कृत्स्नोऽपि वर्णकलापोऽपागमत्, सहजश्च वर्णः प्राचीकशत् ।

गोविन्दलालोऽद्य येनकेनचिद्भोजनायाभिमन्त्रितो वर्तते, अतएव सो- ऽपि मां भोजयित्वा पाययित्वाच भोजनाय गमिष्यति । गोविन्दलालेन सर्व- मपि सामग्रीजातमेकीकृतम्,मयापि निजेन हस्तेनापच्यत । महता च प्रेम्णा स्वयं भणीतत्वद्विगुणितरसास्वादमभुज्यतान्नादिकम् । अहो ममता !

भुक्तपीतश्चाहं गोविन्दलालश्च मध्ये एकादशघण्टावादनसमये बहिर्वे- दिकायामागत्योपाविशाव । अवदं चाहम्-"गोविन्दलाल ! त्वदीयया कृपया- ऽद्यावध्यहमस्मि सजीवः, रक्षितश्च । किन्तु इतः परमहं कुत्र गमिष्यामि ? देवनारायणमुखोपाध्यायस्यापि कोऽप्युदन्तो नज्ञायते । जीवति मृतो वा सः ? निर्मलकुमारः कुत्रागात् ? तदपि नोक्तं त्वया । वद, अद्याहं किं कुर्याम् ? कुत्रवा गच्छेयम् ?" इति ।

गोविन्दलालोऽवादीत्-"अद्यास्मिन्दिने कुत्रापि नगच्छत यूयम् सर्व- तो हिच गुप्तचरा विचरन्ति । अद्यापि नात्मानं विपदुन्मुक्तं जानीत । श्व.प्रातः

कालपर्यन्तमत्रैव भवद्भिः स्थेयं भविष्यति । कदाचिदद्य सायं देवी राज्ञ्यपि समागच्छेत् । सा यदाज्ञापयिष्यति तदेव युक्तम् । इदानीं भवद्भिरेकाकिभिरेवात्रैव स्थेयम् । शयनीयमहमास्तृणोमि,; आगच्छत, तावत्किञ्चिन्निद्रात । येन शरीरमपि किञ्चित्सुस्थं भवेत्" इति ।

एवमुक्त्वा च गोविन्दलालः कलशचषकादिकं दूरीकृत्य तत्रैवोपवेशिन्यां शयनीयमास्तृणोत्, अगाच्च भोजनाय । अहमपि कुटीरद्वारमपिधाय तत्रैव शयनीयेऽपातय शरीरम् । अनभिज्ञा खलु दुःखानां निद्रा, क्षणादेव तया वशीकृतोऽहमभवम् ।

सायं पञ्चघण्टावादनसमये च हृदयहारिणा केनचिद्गीतशब्देन प्रबोधितोऽहमभवम् । अहो ! कीदृशं तद्गीतम् !

### अष्टपदी ।

सुन्दर ! मन्दिरसीमनि पत्तनसौधावलिषु च धीरम् ।
कुन्दरदन ! देशे च विदेशे कलयन्ती संचारम् ॥
नक्तंदिनमविरतमिह भवतो राकाशशिसमवदन ! ।
सक्तं कर्तुं काङ्क्षे नयनं सफलं भवति तु मे न ॥
चिन्ता कापि न सन्निहिते त्वयि चोर दवीयसि सा मे ।
हन्ताशंसा शुभदा दूरे हा त्वयि निकटे नो मे ॥
नयनासेचनमनुपममनघं लोकयितुं तव रूपम् ।
स्वयमासक्तं याति न परतस्त्वं मानसमनुरूपम् ॥

अद्यावधि स्मरामि तद्गीतम्, ननु शृणुत पाठकाः—

श्रुतमात्र एव गीते विकलेन चेतसाऽहमुत्थाय कुटीराद्बहिरागाम् । अहह ! सैव मे देवी राज्ञी समागच्छति । नहि नहि, अद्य न सा मूर्तिः । नेय सा परिव्राजिका मूर्तिः, मम हृदयहारी स एव बालकाकारः । मन्द निःशब्द मामेवोद्दिश्यागच्छति । अहमपि प्रत्युद्गमनाय किञ्चिदग्रतो गत्वाऽतिष्ठम् । बालकोऽप्यागत्यावादीत्-"यदि दिदृक्षसे अपूर्वमाश्चर्यतमद्य क्रोड-

नकम्, तर्हि पूर्वयायिनाऽनेनैव पथा गच्छ, कियदपि दूरं गत्वाऽनन्तरमेव काञ्चन पण्यवीथिकामुपलप्स्यसे, यत्रायादृष्टश्रुतचरौ क्रयविक्रयौ भविष्यतः। एतादृशौ क्रयविक्रयौ मन्ये जन्मप्रभृति न त्वया दृष्टौ स्यातामिति । गच्छ, नेतो विलम्बस्व" इति ।

अहमवदम्—"किं त्वं न गमिष्यसि ?"

बालकः-"नहि, केवलं त्वयैकाकिनैव गन्तव्यम्, सावधानं पश्य तस्यापूर्वस्य वस्तुनः क्रेता को भवतीति। न विस्मर्तव्यमत्र, गच्छ, नेतोऽत्र तिष्ठ।"

अहम्-"प्रत्यावृत्तस्यतु मे त्वया सङ्गमोऽपि भावी । ?"

बालकः-"ईश्वरो जानाति, नेतो विलम्बस्व।"

ततश्चाहं किञ्चिदप्यविलम्बमानः बालकं पश्यन्नेव पूर्वयायिन्या रथ्यया गन्तुं प्रावर्तिषि । गच्छन्नेवचाचिन्तयम्-"को वाचापूर्वोऽद्भुतो व्यापारो भविष्यति, देवी राज्ञी जानाति देवो वा, कथमहं जानीयाम् ?" इति ।

इति सप्तदशं चक्रम् ।



## अथाष्टादशं चक्रम् ।



### ( विप्रयोगस्संयोगश्च । )

चिन्तयन्नेवाहं कियदपि दूरङ्गतः काञ्चित्पण्यवीथिकामपश्यम् । अशृणवञ्च ग्रामस्यास्य देवग्राम इति नामेति । किमयं [1]देवनारायणमुखोपाध्यायस्यैव देवग्रामः ? एतावति समीपे वर्तमानोऽपि दिनत्रयमहर्निशं देवनारायणमुखोपाध्यायमुखमङ्गे वहन्नुपविष्टोऽपि किमपि नाजानाम्। महदिदमाश्चर्यम्। द्रक्ष्यामि कोऽयमपूर्वो व्यापारः । कथञ्चाद्भुतमन्तरक्रयविक्रयादिकम् ।

एवमादि चिन्तयन्नेव विपणिमध्यं प्रापम्। मनुष्याणां संघर्षादेकमपि पदं पुरतो गन्तुमशक्यमिवाभून्। महद्धि कौतूहलं मे, अतश्च महता श्रमेण जनौघं प्रविश्य मार्गमन्विष्यन् पुरतः प्रातिष्ठे। मच्छ्वशुरस्य तत्पण्यस्थानं यत्पूर्वं कदाचिद्वर्णितमासीदपिहितमासीत्। यदि नापिहितं स्यात्स्यादवश्यं मया पलायितव्यम्।

किञ्चिदग्रतो गत्वा च मदीयं श्वशुरम्, शङ्करम्, अन्यौच द्वौ यावहं नजानामि, कुत्रचित्किञ्चिन्मन्त्रयमाणानपश्यम्। हृदयं च मे कम्पितुमारभत। जवेनान्यतोऽपसृत्य संघं प्रविश्यातिष्ठम्। तत्राद्भुतं किञ्चिदपश्यम्। किमपश्यम्? कृशमलिनगात्रं देवनारायणमुखोपाध्यायं हस्तावलम्बितनिजपत्नीहस्तम्। महति कोलाहले किमपि न श्रूयते। केयं दशा बुद्धिमतामग्रेसरस्य देवनारायणमुखोपाध्यायस्य! देदीप्यमानं तत्संहननं कथमेवमभूत्? सत्यमेवाद्य देवनारायणमुखोपाध्यायो वृद्धसंजातः। धन्याऽसि देवि! राज्ञि! यस्याः कृपयायमद्यावधि जीवति देवनारायणमुखोपाध्यायः। समीपमुपसृप्य किञ्चित् सल्लपेयमिति मनस्यभूत्, परं किञ्चिद्विचार्य तूष्णिमतिष्ठम्। दैवादेकान्तं स्थानमलभ्यत कुत्रचित्। तत्रैव गत्वा देवनारायणमुखोपाध्यायो यत्रासीत्तस्य पृष्ठतः कस्यचित्तृणमयस्य गृहस्य पश्चाद्भागे छन्नगात्रोऽतिष्ठम्। तत्र स्थितेन च तस्य वाचस्स्पष्टमश्रूयन्त।

सहि कम्पितगात्र एवं वदन्नासीत्-"श्रूयतां दुर्भगस्य मे वचनं भवद्भिः। इय सर्पिणीव स्त्री मम यथाविध्यूढा पत्नी। यावन्मम मोहोऽस्यामासीत्तावदिमां सावित्रीमिव सतीं जानन्नासम्। अस्यां प्रेमातिशयेनान्धीभूत एककं मे प्रियं पुत्रमपि पर्यत्यजम्। चण्डालीनीयं कामवशङ्गता तेनसह पापमाचरितुमकामयत। परन्तु स निर्मलचरित्रः पापमिदं सोढुमशक्नुवन्पापस्येवास्य प्रायश्चित्तं चिकीर्षन्देशमिमं परित्यज्य केनाप्यनालक्षितो देशान्तरमगात्। गजेन्द्रभूषणनामा कश्चिदनाथो बालो मदीयगृहे निवसन्नास्त, तस्मै सर्वमिदं कुचरित्रमुक्त्वा स गतवान्। धूर्तायामस्यां भृशमोहितोऽस्मि पुत्रहीनोऽभवम्। अनया कश्चिद् भृत्यमभिकामयमानया तत्साहाय्येन मद्धमदीयत

विषमपि । न जानामि कस्य देवस्य कृपयाऽहं पुनरुज्जीवितोऽभवम् । नाहमिच्छामीतोऽत्र पापमये संसारे जीवितुम् । कथयत किमस्य पापस्य प्रायश्चित्तम् !" इति ।

तत एव जनसमूहाद्बहिरागत्य कश्चिद्वृद्धोऽवादीत्-"तीर्णमो मत्क्षेपः, यावज्जीवं वा परित्यागः पापस्यास्य प्रायश्चित्तम्" इति । सर्वेऽप्यवदन् "एवमिदम् एवमिदम्" इति । देवनारायणमुखोपाध्यायोऽवादीत्–"तर्हीवमेवभवतु, त्यजामीमामितो यावज्जीवम् । नेतो ममास्याश्च कश्चित्सम्बन्धोऽस्ति, यदिच्छति तत्करोत्वियम् । यत्रवा रुचिस्तत्र गच्छतु,नास्ति मे कश्चिदप्याक्षेपः" इति ।

देवनारायणमुखोपाध्यायस्य कठिनतरमिदं वाक्यं श्रुत्वा क्षणमहं स्तब्ध इवाभवम् । सच सायतनस्समयः । महान् शब्दोऽश्रूयत-"अवलम्ब्यताम्, अवलम्ब्यताम् तपस्विनी म्रियते"इति । बहवो जनास्तामवलम्बितुमधावन्। अहमपि तां मृतामिव भूमौ शयानामपश्यम् । यद्यपि दण्डोऽयमुचित एव तस्याः,तथापि चित्तं मे विह्वलमिवाभवत् । देवनारायणमुखोपाध्यायोऽपि स्तम्भ इवाचलोऽवर्तत । नेत्रेच निमीलिते अवर्तताम् । एतावत्येव समये द्वाभ्यां वस्त्रछन्नवदनाभ्यां पुरुषाभ्यामपावाह्यत सा झटिति । केनापि किमपि कर्तुं नाशक्यत । मनसि चाभूदेकदा देवनारायणमुखोपाध्यायेन सम्भाषेयेति, परन्तु सद्यएव निर्मलकुमारस्य स्मरणेनोद्श्रुणी अभूतां नयने । जयकाल्यापवादानन्तरं संघोऽपि विरलोऽभूत् । देवग्रामवासिन उत्तमोत्तमाःपुरपादशून्यप्राया अतिष्ठन् पुत्तलिकाइव तत्र । सर्वेऽप्यनुत्साहा अभवन् । देवनारायणमुखोपाध्यायस्तु प्रावर्तताश्रूणि वर्तयितुम् । सर्वेषामपि नयनेभ्यः प्रावर्तताश्रूणो झरी प्रवोढुम् । ९

ततश्च पश्यत्स्वेव सर्वेषु निर्मलोऽकस्मादागत्य पितुश्चरणयोरपतत् । अचिन्तितमेव निजं पुत्रं दृष्ट्वा महताऽऽनन्देन मूर्छित इव देवनारायणमुखोपाध्याय. क्षणं स्तब्धोऽवर्तत । ततश्चोभावपि सम्यक्प्रकृत्य शान्तद्द्वेगा वभूवाम् । तत्क्षणमेव मुखोपाध्यायस्सर्वमपि धनं निजपुत्राय दत्वा वृद्धत्व-

इवाभवत् । अब्रवीच्च-"वत्स ! क्षम्यतां वृद्धस्यास्यागः" इति । इत्थमुक्त्वैव मूर्छितोऽपतत्क्षितौ । पितृपुत्रयोरानन्दमयमिदं सम्मिलनं दृष्ट्वाऽमन्दमानन्दमन्वभवन्प्रेक्षकजनाः । तदात्वेच मम चेतस्यभूत्-"उभयोरनयोर्मध्ये उरप्लुत्य निपतेय" मिति । परं तदैव शङ्करः श्वशुरश्च दृष्टिगोचरावभूताम् । दृष्टयोरेव तयोर्धैर्येण त्यक्तोऽहममवम् । हन्त ! सर्वत्रैवान्तरायः ! पुनश्च किञ्चिद्धैर्यमिवाभूत । अभूच्च मनसि-"एतावत्सु जनेषु तिष्ठत्सु किमेतौ कुर्याताम् । अथैवाहमेतौ ग्राहयेयम् । देवनारायणमुखोपाध्यायाय कथयेयम्"इति

इत्यादि चिन्तयन्नुभयोर्दृष्टी परिहरन्नग्रतः प्रावर्तिषि गन्तुम् । एतावत्येव हठात्कश्चित्कर्णयोर्मे किञ्चित्कथयित्वाऽपसृतोऽभूत् । सविस्मयं परावृत्तो यावदवलोकयामि गोविन्दलालं मां देवनारायणमुखोपाध्यायसमीपगमनात्सङ्केतेनैव प्रतिषेधन्तमपश्यम् । तदीयं वचनमगणयित्वा पुनर्गन्तुमेव प्रवृत्तं मां गोविन्दलालः पुनरपि सङ्केतेनैव न्यषेधत् । ततश्चानिच्छयाऽपि निरुद्धगतिरहमभवम् । देवनारायणमुखोपाध्यायः कथमपि निजगृहान् गन्तुं नेच्छतिस्म । निर्मलकुमाराय सर्वं दत्वा वनायैव गन्तुमैच्छत्, परन्तु बहुभिर्महाजनैर्मित्रैर्बन्धुभिश्चानुनीतः कथंकथञ्चिद्गृहान्प्रत्यगमत् । सान्ध्येन तमसा निजमधिकारमशून्यीकुर्वता प्रावर्त्यत निजो व्यापारः । सर्वतश्चापणेषु दीपास्समारोपिता अभूवन् ।

अहमपि विपणौ ततइतो विचरितुमारभे । एवञ्चाचिन्तयम्-"कुत्र गच्छामि, किंवा कुर्याम् ? शिरसिहि सङ्कटानुभव एव लिखितोऽस्ति विधिना । पितुःपुत्रस्य चैतादृशमपूर्वमानन्दमयं सम्मिलनमभूत्, ममतु दुर्भगस्य भागधेयं न परिपच्यते । नजानामि गोविन्दलालः किमिति मां धर्मपितुस्सकाशगमनात्प्रत्यषेधत् ।" ततो व्याकुल इव भूत्वा गोविन्दलालमन्वेष्टुमारभे । सतु नोपालभ्यत । मनस्यभूत्-"देवनारायणमुखोपाध्यायस्य गृहान् गत्वा पितृसुतयोस्संलापमाकर्णयेयम्" इति । महतोत्साहेन ततएव गन्तुं प्रावर्तिषि । कियद्दूरं गत्वाच किञ्चिदालोच्य निरुद्धगतिरभवम् । अचिन्तयं चैवम्

"देव्यै राय्यै किलाघटितकास्सर्वा घटना कथयितव्या । साहि मा प्रतीक्षेत । मन्तु यथा देवनारायणमुखोपाध्यायस्तथैव देवी राय्यपि । अथतु विशेषतो देवी राय्येव परममाननीया" इति ।

देवनारायणमुखोपाध्यायगृहगमनात्प्रतिनिवृत्तोऽहं कुटीरम्प्रत्येव गन्तु प्रवृत्तोऽभवम् । बहुविधाश्च चिन्ताः कुर्वन्नेव गच्छन्नासम् । मार्गे तु बहवो गच्छन्त आगच्छन्तश्चासन् । तत्र केचित् "देवनारायणमुखोपाध्यायेनानुचितमिदं कृतम्, यन्महति जनसंघे जयकाल्या परित्यागो नाम" इत्यवदन् । केचिच्च-"यादृशी साऽऽसीत् तादृश एव दण्डस्तस्या " इत्यवदन् । स्त्रियस्तु-"कलङ्कोऽस्य गृह एव च्छन्न स्थापयितु योग्य" इति परस्परमकथयन् । अहन्तु देवनारायणमुखोपाध्यायस्यानुपमेन धैर्येण विस्मित इवासम् । अग्रतः पृष्ठतश्च पाद निक्षिपन्नहं गच्छन्नासम् "गोविन्दलालो लब्धश्चेत्कारण पृच्छेयम्" इति चिन्तयन्नेव । एतावत्येव य कश्चिन्मा निरीक्ष्य पार्श्वेन पश्यन् जगाम । अहन्तु सभ्रान्तस्ततस्ततो ऽवालोकयम् । बहवो गच्छन्ति । परमेकोऽपि तत्र न मे परिचित । एतावत्येव पुनरेकतमेनाहतोऽहमभवम् । ततोऽन्येन, ततश्चापरेण । आपदं सन्निहितामालोच्य जवादहं धावितुमारभे । पदपाण्येव पदानि धावति मयि दृढालेनचिद्दण्डेन जानुनि दृढमाहतोऽभवम् । चतुर्दिशमन्धकारमयमद्रक्षम् । शिरो घूर्णितुमारभत । सद्यैव वज्राघातेनेव विचेतनोऽभवं मूर्छा ।

इत्यष्टादशं चक्रम् ।

---

# अथैकोनत्रिंशं चक्रम् ।

( पुनः कारागृहम् । )

कुत्राहमस्मि ! कुत्राहमानीय स्थापितोऽस्मि ! किमपि न जानामि। मनुष्यमात्रस्य मुखमेव न पश्यामि । भूम्यामस्मि नरके वा ! जीवामि मृतो वा ! किमपि न मनस्यवतरति । अन्धकारमये निर्जने गृहे कुत्राहमस्मि ! चतुर्दिशमवलोकयामि, किमपि न जानामि । किमयं स्वप्नः । सम्यगवबु विचार्याजानां नाहं स्वपिमि जागर्मीति । चक्षो हस्तेन भ्रक्षयन्नाकुर्वञ्ज्ञा तम् । सर्वतः पिहितेऽन्धतमसा वृते च तस्मिन् गृहे क्रियानप्यालोकोऽवर्तत । शिर उत्क्षिप्य पश्यंश्चाहं शवमेकमपश्यम् । कस्यायं शवः ! तमस्यस्मिन्नयं कः ! अहम् अहम् हन्त ! मच्छरीरादेवाहमेवं भीतोऽस्मि ! हा धिक् चरणयोः कथमियती वेदना ? कथं कुत इयं वेदना ? अपसर संसार अपसर दूरम् । क्षाम्य, बहुभूत् । नेतोऽपि मां दुःखापय । नाहमिच्छामि राज्यम्, नाहमभिलषामि । कामं मज्जयागाधे समुद्रे माम्, मास्म त्वमागच्छो मत्समीपम् । नाहं गच्छामि त्वन्निकटम्, । चित्ते हि तावान् शोकावेगोऽभूत्, यावन्तमहं न सोढुमशकम् । क्रमेण च पुनरहमचेतनोऽभवम् ।

यावन्तं कालं मूर्छितोऽहमासम्, न जानामि । कपाटोद्घाटनशब्देन प्रबुद्धश्च यावदवलोकयामि, गोविन्दलालं पुरतः स्थितमपश्यम् । ससम्भ्रममहम्—"आगच्छ ! गोविन्दलाल आगच्छ ! ! अहन्तु उत्थातुमपि न शक्नोमि ! कटिस्तु चलयितुमपि न शक्यते ! कुत्राहमस्मि ? त्वदीयेऽभयदुर्गे किलासम्" इत्यवदम् ।

गोविन्दलालः—"तूष्णीं तिष्ठन्तु, किमितीयदुद्भ्रान्ता भवन्ति । कटीपदवेदनायाः किं कारणं न स्मरन्ति । अस्तु, किञ्चित्पूर्वानुभूतं तु सावधानं स्मरन्तु ।"

अहम् "आम्, स्मर्यते । देवनारायणमुखोपाध्यायस्य पत्नीत्यागं पितृसुतयोरानन्दमयं सम्मिलनं च दृष्ट्वा त्वामेवान्विष्यतो मे जान्वन्यचिन्ति-

तमेव दण्डाघातोऽभून्, अचेतनश्चाहमभवम् । न जानामि ततः किमभूदिति। अस्तु, गोविन्दलाल ! कस्याहमस्म्यद्य हस्ते ?"

गोविन्दलाल "येनैव निमित्तेन भवद्भिस्सुखं स्वप्तुं न शक्यते, येनैव च निमित्तेन भवन्तो निजादेशान्निष्कासिताः, किं बहुना, प्राणा अपि संशये भवताम्, तस्यैव हस्ते सन्त्यद्य भवन्त" ।

अहम् "किमत्र कारणम्, किमपि हृदयं नावतरति, किं त्वमपि न शक्नोषि मां बोधयितुम् ? किमिमां ग्रन्थिं न विस्रंसयितुं शक्नोषि ?"

अर्धोक्तौ गोविन्दलालस्साक्षेपमवादीत् "तूष्णीं तिष्ठत, व्यर्थं न प्रलपत । मास्म किमपि पृच्छत माम् ।"

अहम्-"अस्तु, अहं कुत्रेदानीं तिष्ठामि ? कथमत्रागतोऽस्मि ? मुच्ये किलास्या आपद" ।

गोविन्दलाल "मोक्षममोक्षञ्च जानाति भगवानेव । मोचनाय यत्नस्तु यावद्बलमनुष्ठीयत एव । आगच्छत, पादे कश्चन किञ्चित् लेपनं लेपयामि" ।

इत्थमुक्त्वा च मम सर्वाङ्गेषु किञ्चिदौषधमलिम्पत् । बहुनिर्बन्धेन पृष्टश्चैतावदकथयत् । यथा-"दिनद्वयं यावदहं मूर्छित आसम्, मध्येमध्ये च गोविन्दलाल आगत्य मां निरीक्षमाण आस्त, दिनद्वये एकदापि मम चेतना नाभूत्" इति । देवीं राज्ञीमधिकृत्य मया बहु पृष्टोऽपि किमपि नावादीत् । तस्मिन्दिने देवनारायणमुखोपाध्यायसमीपगमनान्निषेधे किं कारणमित्यपि नाब्रवीत् ।

गोविन्दलालोऽब्रवीत् "कथमिदानीमस्ति शरीरम्, किमस्ति बुभुक्षा ?" इति ।

अहम्—"अस्तु शरीरं यथा तथा वा । नास्ति काऽपि चिन्ता तत्र । मनसा तु निर्भरेण निश्चरेण च भाव्यम् । यावन्नभवति तावन्न क्षुधा नवा पिपासा ।"

गोविन्दलालः—"अस्तु, एकं दिनमनशनमितोऽप्यस्तु । अद्यावधि नात्यन्तम मुक्ता भवन्तो ज्वरेण । शृणुत, स्थिरास्तिष्ठत । न भेतव्यं कस्मादपि । योऽपि कोऽपि वा समीपमागच्छतु न स किमपि प्रष्टव्यः । पलायनं मनस्यपि न कार्यम् । देवी राज्ञी अहं च भवतो रक्षाव इत्ययमंशः कथमपि न प्रकाश्यः । मद्विषये किमपि कस्मा अपि न वक्तव्यम्, नवा प्रष्टव्यम् । सावधानं स्थीयताम् । जाग्रत्स्वस्मासु नास्ति किमपि भयं भवताम् ।"

एतावदुक्त्वा गोविन्दलालो यत एवाऽऽगमत्तत एव निर्गत्य पिहितकवाटोऽगमत् । अहन्तु निर्बलो निरुत्साहश्च तत्रैव तूष्णीं पतित आसम् । अत्रानन्तेऽन्धतमसि गोविन्दलाल एक एव क्षुद्रदीपतुलामवलम्बते । परन्तु गोविन्दलालो देवी राज्ञी वा कः का वा ? पश्यतोहरेषु मां पीडयत्सु गोविन्दलालस्येयती कृपा मयि कुतः ? पिशाचेष्वेतेषु केयं देवता ? कराळायामत्र काळरात्र्यां केयं विद्युदिव देवी राज्ञी ? तस्या वा इयती दया मयि कुतः ? किमपि नावतरति हृदयम् ।

गोविन्दलालस्य दयया मम शरीरव्यथा अर्धं शान्ताऽभवत् । निद्रैवाजगाम किमपि ।

यमभटस्येव भयङ्करस्य कस्यचिच्छब्देनोदमिलतां मे नेत्रे । ससम्भ्रममवलोकयंश्चाहं श्वशुरमपश्यं पुरतः स्थितम् । भयेन न्यमीलयेतां नेत्रे मया । तेन च सतर्जनमुक्तम्—"किमरे धूर्त ! कथमसि ? किमिति मां न पश्यसि ? किमहं व्याघ्रोऽस्मि ?" अनुन्मीलयन्नेव नेत्रे अहमवदम्—"मम तु भवान् व्याघ्रस्यापि तात एव । भवतामेव कृपया गणयामि मृत्योर्दिवसान् । नेतोऽपि भवतां श्रमः कर्तव्यो भविष्यति । इतो गमनेनानुगृह्यतामयं जनः ।"

रायः—"वैधवेय ! त्वां संयमनीमनापय्य किमितो गमनानुग्रहो मया क्रियेत ?"

अहम्-"तदेव कुरुत, महद्भवेद्भवता पुण्यम् । चित्रवधादस्मादेकदैव मारण श्रेय । करोम्यहमञ्जलिम् । शीघ्रमस्या यमयातनाया उन्मोच्यो-ऽहम् ।

राय -"अलमलम्, तूर्ष्णीम्भव ! किमिति बहु जल्पसि । एकदैव मारण चित्रवधोऽन्यद्वा मदिच्छाधीनम् । कोऽसि त्व तत्र वक्तुम् !

अहम् किमित्येव मा पीडयति भवान् ? किम्मयाऽपकृत भवत ।यदि भवतोऽपि दशा ममेव स्यात्तदा किं कुर्याद्भवान् ? अयि भो" ममापराध कथ्यता तावत् ! प्रथम त्वया श्वशुरेण भूत्वा महान् स्नेह प्रकाशित । अद्यपुनरयमत्याचार ! सत्य कथय-कोऽसि त्वम् येनाहमष्टादशवर्षान्पालित, यमह पितर जानन्नासम्, किं स मे पिता ? माता मे कुत्रास्ते ? भार्या मे कुत्र वर्तते ? धन मदीय कुत्र ? पतामि ते चरणयो, सत्यमुच्यताम् कोऽहम् ?" ।

एतादृशेन मम रोदनेन मन्ये दयैव समजनि तस्य, कियन्त कालं मदीयमेव मुख पश्यन् शोचश्चास्त । ततश्च महता सारल्येन मृदु मामेवमवादीत्-"सर्वमह जानामि, कस्यामसि विपदि त्व पतितस्तदपि जानामि । यदि यदह पृच्छामि तत्सर्वं कथयेस्तर्ह्यहमपि सर्वं कथयामि" इति ।

अहम्-"यद्यदिष्ट तत्सर्वं पृच्छन्तु भवन्त , पर भवद्भिरपि मम पिता माता च कुत्रास्ते' इत्यादिक सर्वं वक्तव्यम्" ।

रायः-"अस्तु, कथय, कारागृहान्निर्गमनाय मार्ग केन त उक्त, गुप्तद्वारस्य कुञ्चिका गृहीत्वा द्वौ पुरुषौ हत्वा वनलतावेषेण कथ त्व कारागृहान्निर्गतोऽसि ? येन ते साहाय्यमाचरितम् ? मदीयाना द्विसहस्रसंख्याना पुरुषाणा नेत्रेषु धूली प्रक्षिप्य वनलतावेषेण मङ्गलानाम्नया वृद्धाया गृहे सा रात्रिस्त्वया कथ यापिता ? देवनारायणमुखोपाध्यायस्य गृहात् कथ मासोऽसि ? कस्योपदेशेन दिनत्रय त्व मूर्छित देवनारायणमुखोपाध्यायमुत्सङ्गे धृतवान् ? निर्मलकुमारस्यावस्थितिस्थान केनोक्तम्, अथः पुरुषा ये निर्म-

लकुमारं रक्षन्त आसंस्तानपसार्य कथं निर्मलकुमारो रक्षितः । मन्ये नूनं कश्चिद्गदादीयेष्वेव तव साहाय्यमाचरति । स एव विश्वासघातं करोति । यदेतान्प्रश्नान् सम्यगुत्तरयेस्तत्वं त्व परित्यक्तो भवे. । सर्वाणि च रहस्यानि प्रकाशयेत्"।

मदीये शिरस्यशनिनेव निपतितम् ! हन्त ! कीदृशोऽयं धूर्तो वञ्चकः ! यस्या देव्या राज्ञ्याः कृपयाऽहमेतावतीभ्य आपद्भ्य उन्मुक्तो जीवामि-किं तामेव पातयाम्यापदि रहस्यं प्रकाशयन् ! गोविन्दलालसदृशस्यापि सज्जनस्य रहस्यं प्रकाशयेयम् ! चुल्ल्याङ्गच्छतु मदीयं गुप्तरहस्यम् ! प्राणास्तिष्ठन्तु गच्छन्तु वा कदापि न प्रकाशयामि रहस्यम्।

मा तूष्णीभूतं दृष्ट्वा रायेण सैव मूर्तिः पुनरपि धृता । सगर्जनमवादीच्च "किमिति तूष्णी भूतोऽसि ! किं कथयितुमस्तीच्छा नवा ! कथय कस्ते सहायभूतः ! ।

अहन्तु सोच्चैस्स्वरमवदम् "ईश्वरो मे रक्षकः"

रायस्सक्रोधमवादीत्-"यद्यनेव दण्डेन, ते शिरः पातयेयम्, ईश्वरो रक्षेत्त्वाम्?"

महान्तं दण्डं हस्तेन धृत्वाऽब्रवीत्-"द्रुतं कथय, न चेत्पातयेयं ते शिरः"

हा देवि ! कुत्रासि त्वम् ! नेतस्त्वां छत्रे स्थापयितुं शक्नोमि । विश्वासघातं कर्तुमुद्युक्तं कृतघ्न-हन्तुं यतामि ! विश्वासघातः क्रियताम् उत म्रियताम् ! कस्समधिकः, त्वं वा अहम् ! कस्य प्राणा अनर्घाः ! तव, मम वा ! सत्यं तवैव प्राणा बहुमूल्या नाहमस्मि किमपि । त्वदीयप्राणमूल्यं कृत्स्नस्य ब्रह्माण्डस्य विक्रयेण न लभ्येत । तिष्ठ त्वमचला, ददाम्यहमेव प्राणान् ।

दृढो भूत्वाऽहमुपविष्ट आसम् । तेन पापण्डिना बहु निरभर्त्स्यत, परमहम् किञ्चिदपि नाचलम् । ततस्स सक्रोधमवादीत्-"पश्य, इतस्ते का

मृशा भाविनी । विनाशं कथं त्वं म्रियसे । अहमेवान्वहं गोविन्दलालं प्रेषयन्ना सम् । स आगत्य त्वामुपचरन् औषधं ददच्चासीत् । इतस्तु तस्य प्रवेशमपि गृहे न ददामि, अत्रैव पतितस्त्वं गलितो भव ।" एवमुक्त्वाच पादेन मां प्रहृत्य कवाटं पिदधानो निरगात् । यादृशी मे दुर्दशाऽसीत् कथं कथ्यतां सा । भगवन् ! शत्रोरपि मे न सा दीयताम् ।

इत्येकोनविंशं चक्रम् ।

## अथ विंशं चक्रम् ।

### ( लोमहर्षणी घटना । )

एवमवस्थ एव मयि व्यतीयुस्सप्ताहानि, किन्तु गोविन्दलालः पुनर्नागमत् । कश्चिदन्य एव सायंप्रातरागच्छति भोज्यहस्तः । अनेन सह मम न कश्चिदप्यालापो भवति । मयातु तेन सल्लपितुं बहु प्रायत्यत, परं स प्रत्युत्तरयितुं नाभ्युपागमत् । गोविन्दलालेनोक्तमभूत्-"अस्ति ते शरीरे ज्वर" इति । परन्तु नाहमशकं निश्चेतु किमद्याप्यस्ति ज्वरो नवेति । किन्तु यादृशी वेदना शरीर आसीन्न तादृश्यद्य, किमित्येवम्, नास्त्येव सा । कियद्भ्यो दिवसेभ्योऽनन्तरमद्य शरीरमपि किञ्चित्सुस्थं वर्तते । भवतु यद्वा तद्वा, अहं त्वद्य ससन्तोषमेवात्रोपविष्टोऽस्मि । "यद्भावि तद्भवेदेव" किंवा वृथा-चिन्तया कृतया । को वा लाभो मेऽनया ?

तस्मिन्नेव गृहेऽहम्-"अन्धकूपे कथयत कारागारे वा निश्चिन्तमुपविष्टोऽस्मि । विस्फारितनयनेनापि तदेव गृहम्, सैव भित्तिः, तदेवच मलिनमेकमास्तरणम् मदीयानि चाङ्गानि दृश्यन्ते । निमीलितलोचनेनापि तान्येवावलोक्यन्ते ।

रामस्य यो मे श्वशुरस्तस्माद्दिनात्पुनश्शुभागमनं नैवाभूत्, तदीयं पद रज., सुन्दरतमश्चरणघात., मुष्टिनिपीडनम्, सहजसुन्दरयोर्नेत्रयोः क्रूरतमम-

चलोकनम्, कर्णहारीणिच निन्दावचनानि कियद्भ्यो दिवसेभ्यो मया न प्राप्तानि । किमनेनैव कारणेन हृदयं मे प्रसीदति ? नजानामि ।

रात्रेरयं समयः, स्यात्कदाचिद्दशघण्टावादनस्य समयः । प्रायः प्रतिदिनमेवेयत्येव काले मम भोजनमागच्छेत् । अरुचावपि प्राणरक्षायै यत्किञ्चिदहमश्नाम्येव ।

बहिश्शृङ्खलया इवोन्मुच्यमानाया अश्रूयत शब्दः । अहञ्च किञ्चिदवहितोऽभवम् । अवधानस्यतु नास्ति काचिदप्यावश्यकता, यतःप्रतिदिनं य आगच्छति स एवाद्याप्यागच्छेत् । परन्त्वद्य कश्चिद्भेद इव दृष्टो मया । यः प्रतिदिनमागच्छेत् तस्य ह्यावमावगत्यादिकमहं सम्यग्जानामि । स यदाऽऽगच्छेत् निर्भयं सघडघडात्कारं वेगेनागच्छेत् । आद्यत्विकः शृङ्खलायाश्शब्दस्तु महान्मनोहारी श्रुतः-यथा येन केनचिन्मन्दं मन्दं सभयमुन्मोचिता शृङ्खला । सखटात्कारं कवाटिकाप्युदघाट्यत । अहह ! हृदये मम महत आनन्दस्य सञ्चार उदभूत् । पुलकितं चाभूच्छरीरम् । सर्वमपि कष्टं दूरोत्सारितमभूत् । मम परमहितैषिणी देवीराज्ञी बालकरूपेण भोज्यहस्ता समुपस्थिता । अहं चोपवेष्टुं नाशकम् । आनन्देनोत्प्लुत इवाभवम् । मम नेत्राभ्यां मावर्ततास्रु प्रवोढुम्, तस्या अपि धारया । घनाम्बुदघटातः पूर्णचन्द्रेण बहिर्निर्गतम् । भयानके श्मशाने पारिजातेन पुष्पितम् । भीषणो नरकस्स्वर्गात्मना पर्यणंसीत् । किमिदं दृश्यं द्रष्टुं नेत्रे शक्नुतः । किमितोऽप्यहं दुःखभाक्किष्ठेयम् ।

देवीराज्ञी अद्य वीरबाहुवेषेणास्ते, अतएवाहमपि नाम्नाऽनेनैव तां सम्बोधयामि ।

अहम् "वीरबाहो ! महति पतितोऽसि सङ्कटे त्वम् ? जानाम्यहं बहु पीडयति त्वां राय इति ।"

वीरबाहुः-"सर्वोऽप्ययमालापः पश्चाद्भवतु । प्रथमतो भोजनं क्रियतां माम, येन सुस्थं भवेन्मनः ।"

अद्यावधि मे सम्भ्रमो नात्यन्ताय निवृत्तः । तस्या वदनचन्द्रमहं निर्निमेषेण लोचनेन पिबन्निवासम् । अहो ! कीदृशं सुन्दरमुदारगम्भीरं वदनमण्डलम् । सगद्गदमब्रुवमेवाहम्-"नास्ति मे क्षुत्, वीरबाहो ! वीरजे ! देवि राज्ञि ! त्वदीयमनुपमं सौन्दर्यमवलोकयन्नहं रोगं शोकं पीडां क्षुध पिपासां भयं आपदं अन्यच्च सर्वं विस्मरामि । यत्रासि त्वं स एव मे स्वर्गः । क्षुधितस्य पिपासितस्यास्यानाथस्य ब्राह्मणकुमारस्य पुरतः अन्नपूर्णं स्थालं हस्ते वहन्ती त्वमन्नपूर्णेव देवी तिष्ठसि । अहञ्च त्वां प्रेमार्द्राभ्यां लोचनाभ्यां पश्यामि, आचरामि च ते मनसा पूजाम्" । इतोऽपि वक्तुमशक्नुवन्नहं तस्या एव चरणयोरलुठम् ।

द्वित्राणि पदान्यपसृत्य वीरयाऽहुरब्रवीत् "ऐं, किमिदं करोषि ? किमिदं करोषि ? उन्मत्तोऽभवः किम् ? सर्वमिदमाचरणं त्यज । क्षुधा पिपासया च ते घूर्णतीव शिरः । अस्ति बहु वक्तव्यं मे, नेतोऽपि विलम्बो युक्तः, झटिति भुक्त्वा सबलो भव" इति ।

वीरबाहुर्महताऽऽदरेण पुरत उपविष्टः प्रेम्णा मामभोजयत् । मया तु "अस्म्यहमद्य कारागृहे" इत्येतदेव विस्मृतम् । निर्भयं निरुद्वेगं च सुखेनाहमभक्षयममृतमिव सर्वम् । अक्षालयञ्च हस्तमुखमपि तत्रैव । न मे तदानीमासीदुद्वेगः, न वा काचिच्छङ्का,मन्ये तदानीमस्मि निरापदहम् ।

यदाऽहं निश्चिन्तोऽभवं तदा वीरबाहुरवदत्-"बह्वस्ति वक्तव्यम्, सर्वं शृणु । कोऽहमस्मि का वा, को वा मदीयो वृत्तान्त इत्येतज्ज्ञातुं विस्मृत्यापि यत्नं मा कुरु । त्वञ्च कः किमिति केन हेतुनाऽत्रानीतोऽसीत्येतद्विज्ञानेऽपि नास्त्यावश्यकता । रत्येण सह मे कस्सम्बन्धः, अहञ्च छद्मरूपः किमित्येतैस्सह तिष्ठामि, इत्येतद्विज्ञानमपि नात्यन्तावश्यकं ते । गोविन्दलालेन नेतस्सन्नतिर्भवेत्, यतस्स महत्यामापदि पतित आस्ते । पश्यतोहरा गोविन्दलाल एव त्वां कारागृहान्निरकासयदिति तस्मिन् साशङ्का वर्तन्ते, परं नास्ति कोऽपि चिन्ताया अवसरः, तस्य प्राणास्सन्ति मे हस्त एव । पश्यतोह-

राणां प्रधानः कियद्भ्यो दिवसेभ्योऽत्र नास्ति, केनाप्यत्यावश्यकेन कार्येण विदेशगतो वर्तते, अत एवाहं महता बुद्धिपरिश्रमेणापि चात्रागन्तुमशकम् । इदञ्च किञ्चिदवधारय, नाहं निश्चितं वक्तुं प्रभवामि-अस्मिन्नेव दिने तवेतो निर्गमनं भवेदिति । परन्तु अद्यार्धरात्रेऽहमेकदा तव निकटमायास्यामि, मया सह तूष्णीं मौनिना त्वया यत्र कुत्रचिद्गन्तव्यं भविष्यति, विचित्रतरं किञ्चिद्द्रक्ष्यसि । यदि कदाचिदहं नागन्तुं शक्नुयां तदा प्रेषयिष्याम्यन्यमेव वा कञ्चित्, तेनैव सह निर्भयं याहि । ग्रन्थिमिममत्रैव परित्यजामि, अत्रैव वेषपरिवर्तनसामग्र्यस्सन्ति । अद्य पुनरपि त्वया वनलतया भवितव्यम् । यस्त्वां नेतुमागच्छेत्तेन सह यत्र स त्वां नयति गच्छ । मन्ये कदाचिन्मयापि न्म्मिलनं तत्र स्यादिति । कदाचित्तेनैव वेषेण तव सङ्कटादस्मान्मुक्तिरपि सम्भाव्यते । अस्तु, तर्ह्यहमद्य यामि"-इति ।

इत्थमुक्त्वा च वीरबाहुस्तां पोटलिकां तत्रैव निधाय झटिति कपाटिकां पिदधन्निरगात् ।

हर्षविषादाभ्यां मूक इव भूत्वा तत्रैवाहमुपविष्ट आसम् । तदुक्तानां तात्पर्यमवगन्तुं नाहमशकम् । कस्यास्ति सामर्थ्यं देव्या राज्ञ्या मायामवगन्तुम् ! केयं देवी राज्ञी ! किमियं पश्यतोहराणामधिष्ठात्री ! उत तैरेव बन्दीकृता काचित् ! किमपि नावतरति हृदयम् । सम्भाव्यते,कदाचिदहमद्य सङ्कटादस्मादुन्मुच्ये, परं गोविन्दलालो मत्तोऽपि गहनायां विपदि पतितो वर्तते । चिन्तित एवास्मिन्नरो सद्यो हर्षविषादाभ्यामध्यक्रियत हृदये मे । देव्या राज्ञ्या अनुमत्यैव सोऽस्यामापदि पतितः, तन्नूनं जानाति सा तस्य दुःखम् । देवी राज्ञी हि सुचतुरा, तत्तस्या एव बुद्धिबलादहं गोविन्दलालश्चापदो मुक्तौ भवेव नूनम् ।

हृदयं मे विह्वलति नितराम् । कदाचिदुत्तिष्ठामि कदाचिदुपविशामि मनस्तु न कुत्रापि प्रवर्तते कार्ये । कदा भविष्यत्यर्धरात्रम् ! कदा संश्रस्ये देव्या राज्ञ्या ! कदा चाऽवलोकयिष्यामि तदद्भुततमं वृत्तम् !

ततोऽपि तूष्णीमवस्थातुमशक्नुवन् पोटलिकांतामुदमोचयम्। अपश्यञ्च तानेव पदार्थान्, यैरेकदाऽहं वनलताभूमिकामधारयम्। द्रक्ष्यामि किमद्य वनलतारूपधारिणाऽनुमोक्तव्यमिति।

मन्दं मन्दं चोदघाट्येतां कवाटिके। अहञ्चोन्मत्त इव तदभिमुखमेवावालोकयम्। अपश्यं च कञ्चिदन्तःप्रविष्टमायान्तम्। नाहमेनं वेद यतो नायमितः पूर्वं दृष्टः। अन्तःप्रविश्यैव सोऽवादीत्-"अस्मि गङ्गाधारो नाम्ना, भवतां रूपपरिवर्तनायागतोऽस्मि, सन्नद्धा भवत" इति।

गङ्गाधरोऽपि झटित्येव पोटलिकामुन्मोच्य तत्रत्यं सर्वं वस्तुजातं
बहिर्निष्कास्य मदीयरूपपरिवर्तनायारभत। कस्ततो विलम्बः! क्षणादेवाह-
मपि षोडशवर्षदेशीया युवत्यभवम्। हस्तपादमपि वर्णनारज्यत मे। दर्पणा-
भावाच्च नाहमशक्नमात्मनो रूपमवलोकयितुम्। अत एव न शक्नोमि वर्णयितु- 12
मपि, अन्यथा पुनः पाठकेभ्यः श्रावयेयमेव सौन्दर्यम्। अस्तु, अभवञ्च
तदानीं मे नाम वनलतेति। गङ्गाधरश्च सङ्केतेनैव सल्लपन्नासीत्। परमेकदा
मन्दतमेन स्वरेणावदत्-"आगच्छत, पृष्ठत एव ममागच्छत" इति। इदं
कथयितुं व्यस्मार्षमेव-"यद्यपि पादौ मे न नूपुराभ्यामलङ्कृतौ, हस्त एव
स्तो मे तुलाकोटी। बहिर्निर्गत्यैव धारयिष्यामि पादयोः। एवमेवासीद्गङ्गा-
धरस्याज्ञा।

नूपुरहस्त एवाहं गङ्गाधरमनुधावन्तिपि गन्तुमन्धकार एव तस्मिन्। बहून् गृहाङ्गणानि चातिक्रम्य गच्छतो मे क्रमेण संशयेन भयेनानन्देन च न्यधीयत पदं मनसि। कुत्राहं यामि! दुर्गमेऽस्मिन्नन्धतमसा वृते प्रदेशे भयानकेऽपरिचितेन केनचिन्मनुष्येण सह वनलतावेषेणाहं कुत्र यामि? देवि राज्ञि! न जानामि त्वया केन मन्त्रेण तन्त्रेण यन्त्रेण वा मोहितोऽहमिति।

यद्यप्यन्धं तमः, तथाप्यतिमहद्विपुलं गृहमिवादृश्यत, यस्य चतुर्दिशं निःशब्दताऽऽसीत्। विपुलतमेऽत्र गृहे तिष्ठति पश्यतोहराणां महति मण्डले किमित्येवं निर्भयाम्स्तिष्ठन्त्यत्रत्याः। निःशब्दतामवलोक्य शङ्केव समभून्म-

नास । घनावृतमाकाशमवलोक्यासीज्झंझावातस्य शङ्का । तथाऽपि घनघटायामत्र स्थिरतमां मे विद्युतं प्रकाशमानामालोचयतः स्थिरतममभवच्चेतः ।

मन्दं मन्दं पादं निक्षिपन्नहं यामि । अश्रूयताचिन्तितमेव गों गों शब्दः,यथा केनचित्कस्यचित्कण्ठे पिप्यमाणस्य । उभावप्यावां सचकितं निरुद्धगती अभवाव । क्षणाच्च गङ्गाधरोऽवादीत्—"द्रुतमागच्छत, द्रुतमागच्छत, सम्भावयामि कार्यं पूर्णमिव" इति ।

पुरत एव दक्षिणदिशायां काचिदासीद्वीथिकाऽत्यल्पपरिणाहा । महता जवेन साऽप्यतिक्रान्ता । ततश्चाग्रत एवातिविपुलं किञ्चिद् गृहमदृश्यत । यस्यैव कोणे कश्चिदन्योऽपि तिष्ठन् दृष्टः । नौ दृष्ट्वा च सोऽब्रवीत्—"मा भैतम् अहमस्मि वीरबाहुः, पश्यतमनेन द्वारेणान्तः कीदृशोऽनर्थो भवतीति" इति । तत्क्षणात्तत्प्रदर्शितेन रन्ध्रेणान्तरपश्यम् । तत्र च काचित्स्त्री बद्धकटिः कस्यचिदधः पातितस्य पुरुषस्य वक्षसि निहितपदा तस्य कण्ठं पेषयति अन्यश्च कश्चिद्दण्डहस्तः कियत्यपि दूरे तत इतः परिभ्रमति । भयानकमिदं दृश्यं पश्यतो मे समकम्पत शरीरं रोमाञ्चितमेकदैव । प्रथमतस्तु नाहं प्रत्यभ्यजानां ताम् । परं वीरबाहुमुखेन विमातरं सपत्नीसुतं घातयन्तीमशृणवम् । चण्डालिनी जयकाली निर्मलकुमारस्य कण्ठं मर्दयति । श्रुतमात्र एव विदीर्णमिव हृदयेन । उदपतन्निव नेत्राभ्यामग्नेः कणाः ।

वीरबाहोः कर्णेऽहमेवमवदम्-"कथमद्य निर्मलस्य प्राणा रक्षितास्स्युः ? कुरु झटिति यं कञ्चिदुपायम्, अन्यथा तपस्वी निर्मलो नैव तिष्ठेत् भूमौ ! कुरु रक्षाम्, कस्त्वयोपायोऽनुशोचितोऽद्य" इति ।

वीरबाहुस्सचकितमवादीत्-"किमुपायःपृच्छयते ? उपायः ? पश्याद्य" इति ।

दन् इति नाळीकयन्त्रस्य गुळिकाशून्यस्य शब्दः कश्चनाक्रियत, येन दशापि दिशः कम्पिता इवाभूवन् । क्षणेनैवान्धतमस्तरङ्गिण्यां प्रावर्तन्त तरङ्गाः, गृहाभ्यन्तरे सा चण्डालिनी सच तस्यानुचरस्तत इतो द्रष्टुमारभे-

-ताम् । त्रिभिरप्यस्माभिरेकदैव कवाटिकायां मर्दितुमारभ्यत । क्षणाच्च कवाटिकापि सफटात्कारं भिन्नाऽभूत्, द्वारञ्च विवृतम् । वयं च झटित्युत्प्लुत्यान्तःप्राविशाम । कार्यमिदमस्माभिरतिशीघ्रं महता वेगेन पर्यपूर्यत । गङ्गाधरस्तु किञ्चिदप्यवदन् त्रिनैव विलम्बं झटिति तस्य हस्ताद्दण्डमपाकृष्य तमेव शिरसि सवेगमताडयत्तेनैव दण्डेन । रक्तधारा प्रवोढुमारभत । सोऽपि दुष्टो मूर्छितो न्यपतद्भूमौ । एतावत्येव यावज्जयकाळी तेनैव भिन्नकवाटेन द्वारेण निर्गत्य पलायितुमिच्छति, तावद्वीरबाहुरनुधाव्य तां गृहीत्वा भूमावपातयत् । वस्त्रकवचाच्च सम्मोहनौषधं निष्कास्याऽनिच्छन्त्या अपि तस्या हस्तपादं रज्जुभिन्र्यबध्नत, येन सा ग्रन्थिरिव काचिन्नितरामवशाऽभूत् । गङ्गाधरोऽपि तं पुरुषं रज्जुभिर्बबन्ध सम्यक् ।

गङ्गाधरो जयकाळीमहं वीरबाहुश्चेत्युभौ मूर्छितं निर्मलकुमारञ्च स्कन्धे वहन्तः प्रावर्तिष्महि गन्तुं प्राचीनेन मार्गेण ।

केनाहं यामि पथा, तमोवशात्किमपि ज्ञातुं न शक्यते । अनुमानेन तु नायं मदीयकारागृहस्य मार्ग इत्यजानाम् । यतोऽहं पूर्वमागत उत्तरतः यामि च दक्षिणेन । दक्षिणभागे इयन्महद् गृहं मयैतावता कदापि न दृष्टम् । किमिति गृहमिति वक्तव्यम्, अल्पीयान् ग्राम एव । कियद्दूरगमनानन्तरं च कञ्चिदन्धे तमसि तिष्ठन्तमारभ्रच्छादनव्यग्रं पुरुषमद्राक्षम् । वीरबाहुस्तु दूरादेव तमाहूयावदत्-"जयपाल ! मदीयन्तु कार्यं पूर्णमभूत् । त्वमात्मीयं वृत्तान्तं कथय " इति ।

जयपालोऽप्यवादीत्-"मयापि सर्वं यथोक्तमनुष्ठितम् केवलं भवदाशाया एव विळम्ब." इति ।

वीरबाहुः "कियती रात्रिरवशिष्यतेऽद्य ?

जयपालः-अर्धरात्राद् घण्टात्रयमभूत् ।

वीरबाहुः-तर्हि मन्ये रायस्य प्रत्यागमनेऽस्ति महान्विलम्ब इति । कथं वा त्वं मन्यसे" ।

जयपाल -"यथैव त्वम्" ।

वीरबाहु-"त्वदीयं बलन्तु सन्नद्धमस्ति किल ?"

जयपालः-"अथ किम्, सर्वं सन्नद्धमास्ते ।"

वीरबाहु-"तर्हि कुर्वैकं कार्यम् । नीयन्तामेते त्वदीयमावासमद्य । ( मामङ्गुल्या निर्दिश्य ) अद्यैका रात्रिमियं सावधानं पालनीया । ( जयकाली निर्मलं च निर्दिश्य ) यदाऽनयोश्चेतना भवेत्तदा जयकाल्यन्यत्रापसार्यताम्, यथा जयकालीनिर्मलौ परस्परं न पश्येताम् । गृहाण, निर्मलमवलम्बस्व । गङ्गाधर ! जयकालीं यथास्थानं निक्षिप्य मया हस्तिशालायां सङ्गस्व । अस्तु तर्हि, गच्छामि" ।

एतावदुक्त्वा वीरबाहुर्निरगात् । वयमपि ततो निरगच्छाम ।

इति विंशं चक्रम् ।

---

## अथैकविंशं चक्रम् ।



### ( तदेव श्वाशुरं गृहम् । )

नास्ति विलम्बः कमलिनीपतेर्भास्वत उदये कोऽपि । प्रातस्त्यः श्वेतिमा क्रमेण पूर्वस्यान्दिशि गगनमण्डले च समदृश्यत । पक्षिभिश्च चुहचुहत्कारस्समारभ्यत । सांसारिकविषयविज्ञाने रहस्यावगतौ चाहमाजन्मन एवान्धोऽस्मि । कुत्र किं भवति, किमप्यहं न जानामि । ज्ञाने नास्त्युपायोऽपि कोऽपि । कदा ज्ञास्यामि तदपि न ज्ञायते । क्षणे क्षणे या आश्चर्यमय्यो घटना भवन्ति, ता मन्ये जानाति भगवान्, अथवा मदीया देवी राज्ञ्येव वेति । अत एवाहमत्रापि सुतरामनभिज्ञ एवास्मि-'कुत्राहमद्य वर्ते' इति । कुत्रचिज्जीर्णतमे प्रत्ने खण्डगृहेऽचेतसा निर्मलकुमारेण सह यापिता मया यथाकथञ्चिद्विपदामिव निधीरात्रिः । जयकाली यदा किञ्चित्सचेतनाऽभूत्तदा नजाने जयपालस्तां कुत्रानयदिति । गमनसमये स मा किमपि नावदत् ।

अत एवाहमिदमपि न जानामि 'स पुनः प्रत्यागमिष्यति न वा' इति। सम्यगचोदितं भास्करेण । निर्मलेनोदिवितेन मा स्माहं दृष्टोऽभवमिति शङ्का समसजति मनसि । दृष्टः प्रत्यभिज्ञातो वा, यद्यपि स्याम्, का तत्र हानिः ? । कदाचिद्देवी राज्ञी नैवमभिप्रैति । समयमिमं परित्यज्यान्यदैव कदाचिन्मत्प्रकटनंमभिप्रेयाद्देवी राज्ञी । यद्यपि देव्या राज्या नाहं निषिद्धः, तथापि नाहमद्य निर्मलस्य पुरतो गमिष्यामि ।

अस्तु, तर्हि अहं कुत्र गच्छेयम् ? इयदतीतं दिनम्, कुत्राद्यात्मानं छादयिष्ये ? स्त्रीवेषेण मम स्थापने देव्या राज्याः को वाऽभिप्रायः ? किं मम स्वाभाविकेनैव वेषेण पूर्वेद्युरानिकृतं कार्यं न सिद्ध्येत् ? अनेन वेषेण किं वा कार्यं मया कृतम् ? प्रश्नानामेषामुत्तराणि विना देवीं राज्ञीं को वा दास्यति ? न कोऽपि ।

बहुकालमेकाक्ष्येव तिष्ठमानो विमना इवाभवम् । निरचिनवञ्च-"भवतु यद्वा तद्वा, एकदा त्वहं प्राभातिकान् सुगन्धशीतळान्वातपोतानवश्यं पास्यामि, नित्यकर्माणि च कृत्वा निश्चिन्तो भविष्यामि" इति । पादकटकयोरद्यावधि पादे संयोजनस्यावसर एव नालभ्यत । अद्य यावत्ते मदीयवस्त्रदशायामेव बद्धे स्तः । अत एव गमनेऽपि बहु सौख्यमासीत् । झटित्युत्थाय निःशब्दपदमहं तस्मात्खण्डगृहाद्बहिर्निरगाम् । बहिरागत्य च उत्तरतः कियत्यपि दूरे किञ्चिद् घनं वनम्, यस्य किलोपरितो भास्वतस्सौवर्णकिरणानां सन्नादेन्यादइयेव शोभाऽऽसीदपश्यमहम् । किमिदम् ? वनं स्विदं मया दृष्टचरमिव भाति । अत्रैव हि मयैकं दिनं प्राणभयेन वृक्षाग्रमारूढेन यापितम् । हन्त! इतएव खलु मे श्वशुरगृहं दृश्यते, यत्राहं पितृनामधारिणा छलेनानीतो यद्धितोऽस्मि । हन्त ! हन्त ! ! पुनरप्यहमत्रागतोऽस्मि ! हा ! न जानामि किमिदम् ? महत्कष्टमनुभूयापदो मजलहमुन्मुक्त इव तस्याः पुनस्तत्रैवापतितोऽस्मि ! हा ! न जानामि कोऽभिप्राय एतेषां दुष्टानाम् । किमित्येते मनेन पृष्ठतः परिभ्रमन्ति ? किमेते प्राणानगृहीत्वा न त्यक्ष्यन्ति ? किमेतावत्कष्टं दत्त्वाऽप्येते न तृप्यन्ति ? हे कृष्ण ! महदिदं कष्टम् ! स एवाय वटवृक्षः,

यमारूढेन मया देवी राज्ञी बालकवेषेणावालोक्यत । अद्य येन वेषेणास्मि तस्मिन्नपि दिने तेनैव वेषेण मयास्यैव वटस्याधस्तात्प्राणा रक्षिताः । किमिदं क्रीडनम् ! पुनरपि तदेव स्थानमहमागतोऽस्मि ! किं करोमि ? कुत्र पलाये ! मार्गस्तु नैव दृश्यते ! यदि कदाचित्पुनर्गृहीतोऽभविष्यम्, अभविष्यन्निष्फला सर्वापि चातुरी देव्या राज्याः ।

सर्वत्र निश्शब्दतैवासीत्, कुत्रापि मनुष्यमात्रस्य शब्द एव नासीत् । मनस्यभूत्-'सकृदपि वा गच्छेयम्, वनस्यास्य शोभां पश्येयम्' इति । किन्तु साहसं नाकारे । अहं त्वद्यापि वनलतैवास्मि, किमिमं भूमिकापि गोपकुर्यान्मे । व्रजेन्द्रशब्द्‌ादन्योऽसौ किं वनलताशब्दोऽपि न निरापत् ? किं ममेमं कृत्रिममाकारं दृष्ट्वापि धूर्ता न सदया भवेयुः । पश्याम्येकदा-काठिन्यादपि कोमलतायां कियती शक्तिरस्तीति । उन्मत्तोऽस्म्यहम्-मदीयाः प्रश्ना अपि तादृशाः, उत्तराण्यपि तादृशान्येव भवेयुः । भयस्य तु सीमैव न दृश्यते ।

कथं कथञ्चित्स्थिरीकृतमनाश्चाहं निजं श्वशुरगृहं प्रति प्रातिष्ठे । चतुर्दिशमेव निर्जनता निश्शब्दता चासीत् । न जानामि कुतोऽप्यचिन्तितमेव गोविन्दलालः पुरत आगत्यातिष्ठत् । सचकितमपृच्छमहम्-"कोऽसि ? गोविन्दलाल ? कथं त्वं मुक्तोऽसि ?" इति । गोविन्दलालोऽप्यवादीत्-"सर्वोऽप्ययमालापः पश्चाद्भविष्यति, यदहमद्य कथयामि तच्छ्रूयताम् । दिवसो यमस्काकं महाभयङ्करः । भवत्तामेव निकटमहं अगच्छन्न्सम्, साधु जातम्, यन्मार्ग एव भवन्तो दृष्टाः । पोटलिकामिमां गृह्णीत । अस्त्यत्र भवतां वस्त्रादिकम् । झटिति परिवर्तयत रूपमात्मीयम् " इति ।

अहमब्रवम्-"तदन्तरं कुत्र गन्तव्यं भविष्यति ? देवी राज्ञी कुत्रास्ते ?" । गोविन्दलालोऽवादीत्-"साऽप्यत्रैव कुत्रचिदावश्यके कार्ये व्यापृतास्ति । नेतोऽपि भवद्भिर्विलम्बः कार्यः " ।

अहमप्यात्मनो वेषमन्यथाऽकरवम्, यादृशो व्रजेन्द्रः पूर्वमासम्,तादृश एवाभवम् । गोविन्दलालोऽवोचत्-"बह्वस्ति वक्तव्यम्, आगच्छत, सर्वे

मार्ग एव कथयामि" इति । उभावप्यावां वनस्य समीपे समीप एव गन्तुं प्रावर्तिष्वहि । गच्छन्नेव गोविन्दलालोऽपृच्छत्, अस्तु, अपि स्मर्यते हरिहरबनर्जी ?" ।

ससम्भ्रममहमवदम्-"किमकथयो गोविन्दलाल ! हरिहरबनर्जी ? कुत्र ते ! कुतस्त्वमेवमपृच्छः ! ते कुत्र सन्ति ?

गोविन्दलालः-"तूष्णीं भवत, किमित्येवं बिभीथ, तान्दृष्ट्वाऽहमागच्छन्नेवास्म्यद्य"

अहम्-"कुत्र ? ते कुत्रेदानीं सन्ति ? सन्तु यत्र कुत्र वापि ते, एकदा तु मां तन्निकटं नय गोविन्दलाल !"

मन्दं मन्दं किन्तु सगम्भीरं गोविन्दलालोऽवादीत्-"हा ! आश्चर्यम् ! किमेवमवगच्छन्ति भवन्तस्तत्र गमनेन न कापि क्षतिर्भवेदिति ? नहि नहि, नैवं कदापि, निश्चितं ज्ञायताम् तत्र गमनं विषदः कवणं च तुल्यमिति । अस्तु, के नाम ते ? किं सत्यमेव ते भवतां तातपादाः ।

ससङ्कोचमहमवदम्-"नाहमिदं कथयितुं शक्नोमि, अत्र विषये किमप्यहं न जानामि । ते मम के भवन्ति, तैस्सह मम कस्सम्बन्धः, नाहं किमपि निश्चेतुं शक्नोमि, नन्वागच्छ, एकदा तन्निकटं गच्छावः । यद्यपि ते न मे पितरो भवेयुः, तथापि तन्निकटमवश्यमेव गन्तव्यं मया । यतस्तैरष्टादशवर्षाण्पालितोऽहम् । दिवा त्वयि च सन्निहिते किं तेऽपकुर्युर्मे । किम् ! एकदा नन्वागच्छ गोविन्दलाल !"

गोविन्दलालः-"न जानन्ति भवन्तः, अद्यापि भवन्तो बाल्य एव वर्तन्ते खलु । अस्तु, श्रूयताम्, किं तानेकाकिन एव जानन्ति भवन्तः ! नहि नहि, ते किल रात्रौ शङ्करादिभिश्च निजसहचरैस्सह गूढं किमप्यालोचयन्तो वर्तन्ते । यदि चाचिन्तितमेव भवन्तस्तत्र गच्छेयुस्तदा भवतां प्राणा न तिष्ठेयुः ! रात्रिवृत्तान्तं ते किं जानन्ति ? रामस्तु मन्ये जानाति भवन्तः कारागृहे वसन्तीति । तत्र किं कथयन्तो भवन्तो गमिष्यन्ति ? कथं भवन्तो निर्गताः कारागृहात्, कुतश्च निर्गताः, इत्यादिकमज्ञात्वा किं भवन्

मुग्धेद्राय: ? तस्मिन् किल दिन एषामेव विषयाणामवगतये भवतः कियद-पीडयत्, किं विस्मृतं तत्सर्वम् ? लाभस्य स्थाने हानिरेव भवेत् । देव्या रा-ज्ञ्याशिरसि सर्वे दोषा निहितास्स्युः । ततश्च कीदृशी विपदापतेत्, सम्य-गालोच्यताम् । अतश्च तामिच्छां मनसि नानयत । पश्यत पश्यत । देव्या राज्ञ्या अद्भुततमेन कौशलेन निर्मलकुमार उत्तराभिमुखमश्वारूढः पलायते । साध्विदमभूत्-तपस्वी रक्षितोऽभूत् ।"

आवर्तितमुखश्च सत्यमेवाश्वारूढं यान्तं निर्मलकुमारमपश्यम्। पश्यत्येव मयि सोऽपि दृष्टिपथमतिक्रान्तः। सम्यगेवाभूत् मनस एका चिन्ता दूरेऽभवत् ।

एतावत्येव समये जयपालं पूर्वदिशातोऽस्मदभिमुखमेव सवेगमाग-च्छन्तमपश्यम् । गोविन्दलालोऽपि सवैमनस्यम् "द्रक्ष्यामि, जयपालः की-दृशं वृत्तान्तमानयतीति" इत्यवदत् । जयपालोऽपि निकटमागतः सोच्छ्वासं गोविन्दलालमब्रवीत्-"गोविन्दलाल ! एतावद्भ्यो दिवसेभ्योऽनन्तरं भगवान-स्मासु मकृपोऽभूत् । आगच्छ, आगच्छ, त्वरितमागच्छ, अस्माकं सर्वोऽप्य-यं श्रमः चातुरी च सफले अभूताम् । देवी राज्ञ्यधास्ते एकाकिनी, ब्रजेन्द्र-प्रभुमपि सहैवानय । अहं पुनः प्रथमं गत्वा सूचयामि" इति एतावदेवो-क्त्वा शिरः पादाभ्यां स्पृशन्नधावज्जयपालः ।

अहं पुनर्दिङ्मोहमिवोपयातस्साश्चर्यं गोविन्दलालमपृच्छम्-गोविन्द-लाल ! कीदृशोऽयं वृत्तान्तः, एतावद्भ्यो दिनेभ्योऽनन्तरं कोऽसौ श्रमस्स-फलोऽभूत् ! कस्यायमानन्दः ? मम, उत देव्या राज्ञ्याः ?"

गोविन्दलालस्सहर्षमवादीत्-"अद्यावधि तु देव्या राज्ञ्या एवायमानन्द इति वक्तव्यम् । यद्येवमेवास्मदीयो यत्नस्सफलस्स्यात्, मन्येऽस्मिन्नप्यानन्दे भवतामप्यस्ति दाय इति । आगच्छत, आगच्छत, त्वरितमागच्छत,"इति ।

गच्छन्नेव चाहं यदा पृष्ठतः परिवृत्तमुखोऽभूवम्, तदाऽद्भुतदेवश्वशुरं गृहमपश्यम् । इत्येकविंशं चक्रम् ।



इति संसारचक्रे प्रथमो भागः ।

| | | | |
|---|---|---|---|
| १९ | २० | साहाय्यकम् | साहाय्यकं |
| २१ | २ | झटित्यवे | झटित्येव |
| २२ | १२ | दर्शन | दर्शन |
| २४ | ६ | विलम्वधाः | विलम्बधाः |
| २६ | २ | पथिभ्रमौ | पथिभूमौ |
| २८ | ६ | हृदयोद्वगं | हृदयोद्वेगं |
| ३१ | २१ | किमधिकन | किमधिकेन |
| ३४ | १७ | कवाटिद्घाट्यतां | कवाटिकोद्घाट्यतां |
| ३६ | २ | पष्ठतः | पृष्ठतः |
| ४२ | ८ | उपघा | उपघा |
| ४२ | १९ | नत | नेतः |
| ४७ | १७ | धर्मे | धर्मे |
| ५९ | ६ | वस्तुवस्तु | वस्तुतस्तु |
| ६२ | ९ | भावादिमिः | भावादिभिः |
| ६४ | १६ | मिथ्या | मिथ्या |
| ७० | २३ | घृत | धृत |
| ८१ | १७ | पारत्यक्त. | परित्यक्तः |
| ८८ | २० | सिरसि | शिरसि |
| ९४ | ३ | अतु | अस्तु |
| ९९ | १४ | भोजनाया | भोजनाय |
| १०० | १ | स्थयं | स्थैर्यं |
| १०८ | ९ | अन्धतमसि | अन्धेतमसि |
| ११९ | २ | दृष्टोऽभवं | दृष्टोभवं |
| १२० | २१ | तदन्तरं | तदनन्तरं |

श्रीः ।

# ॥ संसार चक्रम् ॥

नाम

पण्डित जगन्नाथप्रसादचतुर्वेदिप्रणीतं हिन्दीभाषानिबद्धं
मूलग्रन्थमवलम्ब्य शास्त्रमुक्तावली—न्यायरत्नावली
मञ्जुभाषिणीनां सम्पादकैः

प्रतिवादिभयङ्करम्—अनन्ताचार्यैः

संस्कृतभाषायां विलिखितम्
आख्यायिकारत्नम्
( द्वितीयो भागः )

---

श्रीसुदर्शनमुद्राक्षरशालायाम्
अमुद्यत ।

द्वितीयसंस्करणम् ] १९३४ [ मूल्यम् १—०—०

॥ काञ्ची ॥

श्रीः ।

# ॥ संसार चक्रम् ॥

नाम

पण्डित जगन्नाथप्रसादचतुर्वेदिप्रणीतं हिन्दीभाषानिबद्धं
मूलग्रन्थमवलम्ब्य शास्त्रमुक्तावली--न्यायरत्नावली
मञ्जुभाषिणीना सम्पादकैः

## प्रतिवादिभयंकरम्–अनन्ताचार्यैः

संस्कृतभाषाया विलिखितम्
आख्यायिकारत्नम्

( द्वितीयो भाग )




## श्रीसुदर्शनमुद्राक्षरशालायाम्

अमुद्रत ।

द्वितीयसंस्करणम् ]   १९२०   [ मूल्यम् १-०-०

॥ काञ्ची ॥

श्रीः ।

# भूमिका .

)—:(

आसीत्पूर्वं कदाचित्संस्कृतभाषैव सर्वेषामेव जनानां व्यावहारिकी ...षा भारतादिषु देशेषु केषुचित् । आसीच्च स कोऽपि समयो यत्र ब्राह्मणा ...कारणमेव सषडङ्गवेदाध्ययनमकुर्वन् । क्षत्रियवैश्यानामपि साङ्गवेदाध्ययन ...मवश्यकर्तव्यं कर्माभूत् । अत्रैवर्णिका अप्यम्बष्ठनटगायकाद्या आयुर्वेदादीन् ...न्संस्कृतभाषाकुशला अभूवन् । गतस्स समयः । इदानींतु संस्कृतभाषाभिज्ञाः पुरुषा विरला । तद्भाषापरिज्ञानमनावश्यकम्मन्यन्ते ब्राह्मणा अपि । येऽपि किञ्चित्पठन्ति तेषामपि न पूर्णं भाषाविज्ञानं भवति । संस्कृतभाषा रत्नाकर इव नानाविधापूर्वकलामन्थरत्नपूर्णा रसिकानां न केवलमानन्दं ददाति, किन्तु जीवनाधारभूतापीति विद्वांसो मन्यन्ते । कालेऽस्मिन्नाख्यायिकाग्रन्थाः प्रतिदिनं बहुसङ्ख्यास्सर्वास्वपि भाषास्ववतरन्तो दृश्यन्ते । ता कालिकमनोविनोदार्थमप्येषां पठनं क्रमेण पठितॄणां साहित्यरुचिमप्युत्पा... यतीति विचारकुशला मन्यन्ते । अस्मज्ञा अप्याख्यायिकापठनप्रवृत्ता महत्वस्साहित्यरसिका भाषाकुशला भवन्तीत्यनुभवसिद्धोऽयमर्थः । तदद्य जनानां हृदयेषु संस्कृतसाहित्यपठनरुच्यभिवर्धनाय संस्कृतभाषामयीनामाख्यायिकानां बहुसङ्ख्यानामवतरणमत्यावश्यकमिति संस्कृताभिमानिनामभिप्रायो युक्तरूप एवेति मन्यामहे वय । परन्तु संस्कृतभाषामयीनां मधयावदङ्गुलिरचनीयानामाख्यायिकानां परिगणनायैकस्यापि हस्तस्य सर्वेषामङ्गुलीनामवश्यकता नास्तीतीयं वस्तुस्थितिः । तदेव संस्कृतभाषामयीनामाख्यायिकानामावश्यकताम्मन्यमानेनेयं संसारचक्रनामाख्यायिका मया लिखिता विदुषामिवाल्पज्ञानामपि प्रिया भविष्यतीति मे विश्वासः । इयं च हिन्दीभाषामय्या आख्यायिकाया अनुवादरूपापि प्राभिक्रमवृचि-

# संसारचक्रम् ॥

## द्वितीयभागे प्रथमं चक्रम् ।



### ( आश्चर्यदर्शनम् )

अहं गोविन्दलालश्च तावता वेगेनाक्रमाव येनाल्पेनैव कालेन मध्येमार्गं जयपालेन समागमोऽभवत् । ततश्च वयं त्रयोऽपि तेनैवारण्यपथेन द्रुततरं गन्तुं प्रावर्तिष्महि । तदात्वे मदीये मनसि कियत्यो भावना आविरभवन्, तासां लेखनं किञ्चित्कष्टसाध्यमिव । अविच्छिन्नतया वयं दक्षिणाभिमुखं चरणान् निक्षिपन्त एव गच्छन्तोऽभवाम । कियद्दूरगमनानन्तरं वामतो वयं प्रत्यावर्तिष्महि ।

तस्मात्पुरातनात् खण्डगृहाद्यदा क्रोशमेकमुपयाता वयं तदा पुरत एव किंचिज्जीर्णशीर्णं गृहमद्रक्ष्यत । यत्किल वनस्य तस्य सुतरामेव मध्येऽभूत् । जयपालस्तदेव गृहमंगुल्या निर्दिश्य मामवदत्—"अस्यैव गृहस्याभ्यन्तरं प्रविश्य निःशब्दं तूष्णीं तिष्ठत । अस्मदीयं कण्ठस्वरं तु जानन्ति खलु भवन्तः ! यावदहं गोविन्दलालो वाऽऽगत्य "सदारम्" इति शब्दं न वदावस्तावन्नगृहादस्मान्न बहिरागन्तव्यं भवद्भिः" इति । इदमुक्त्वा च जयपालस्ततोऽगाद्गोविन्दलालश्च ।

अहमपि शिथिलपदं तदेव जीर्णशीर्णं गृहं प्राविशम् । हा धिक् ! कीदृशस्तत्र दुर्गन्ध आसीत् ! यादृशो नरके स्यात् । दशपञ्चदशानां मनुष्यशवानां क्लिन्नानामेकत्र समावेशे यादृशो दुर्गन्धस्स्यात्, नूनं तादृश एव तत्राप्यासीत् । दुर्गन्धेनानेन विमना इवाभवम् । क्षणे क्षणे वमनमपि प्रारभत ।

जगत्यामस्यां याः काश्चिद्विपदः सन्तापाः, अत्याचाराः अविचाराः, प्राणहारिण्यो दुर्घटनाः, दुःखम्, क्लेशो वा सन्ति, सर्वाण्यपि हि

मह्यमेव निर्मितानि, तर्हि दुर्गन्धमेनं मां विना को वा सहताम् । किं क्रियताम् संकोच्य नासिकारन्ध्रं तत्रैवोपविष्टोऽभवम् ।

गृहमिदमष्टादशभिर्हस्तैरायतं चतुर्भिश्च विततमासीत् । षोडशभिः पटलाधारदारुभिः छदिरस्य ध्रियमाणमासीत् । पूर्वस्यां पश्चिमस्यां च अत्यल्पपरिमाणौ नाममात्रस्य गवाक्षावास्ताम् । यतस्तत्र कवाटादिकं किमपि नासीत् । केवलमाकारेण गवाक्ष इत्युच्यते ।

,, प्रधानद्वारस्यापीयमेव दशाऽऽसीत्, कवाटिका तु नासीदेव, इतः किमवशिष्यते, द्वारम् तदपि शपथाय केवलं मनो मशासति मही निर्मितं
१ तत्रासीत् । परन्तु ऐषमो वर्षर्तौ तस्यापि स्थितावल्पीयानेव विश्वास आसीत् । तलादारभ्य शिरःपर्यन्तं भित्तिषु क्षीणामावासोऽभूत् । मशकमक्षिकाझिल्लिकादीनां तु तत्राकम्प्यं राज्यमेवाभूत् । अहमपि नासारन्ध्रे वस्त्रमापूर्य तत्रत्यां शोभां पश्यन् कुर्वंश्च तदपूर्वं दृश्यं हृदयभित्तौ चित्रितमवर्तिषि । यदेदं गृहं निर्मितमासीन्मन्ये तदैव निहितः किल्किञकः कश्चित्कोणे समदृश्यत । विनेमं किमपि नासीत्तत्रोपयोगि वस्तु । अधश्च धूलीनां राशिरासीत् । वन्यजन्तूनां नानावर्णमलं विना कपोतानां कुक्कुटानां च पक्षास्संघशोऽवर्तन्त । अन्यदपि बहु कुत्सितं दुर्गन्धि च वस्तुजातं तत्रासीत् यस्यात्र लेखनं व्यर्थमिव पश्यामि ।

इयमेव तस्य गृहस्य तदात्न्यवस्था । ननु कथयत पाठकाः ! स शिरोभ्रामको दुर्गन्धः कुतस्समायातीति । एषां पदार्थानाम् ये मया वर्णिताः, संमिलितानां पर्युषितानां किन्नाना चैतादृशो गन्धस्स्यात् ? नहि नहि, कदापि न स्यात् । तर्हि कथमयम्; कुतोऽयं दुर्गन्धस्समायाति । कियन्तंचित्कालं जयपालस्याज्ञा कोष्ठके न्यधीयत मया । महत्योत्कण्ठया मया गृहस्यास्य सर्वेऽपि भागा अष्टसूचिनेव समवालोक्यन्त, तथाऽपि कुतोऽयं गन्धस्समायातीति नाज्ञायत ।

असहनोऽहमभवम्, पुनश्चोदतिष्ठम् गृहस्याधोभागमवधानेनालोक-

पितुमारभे, कटस्य कटतापि मया न रक्षिता,तेन संमार्जन्याः कार्यमकरवम्। महतो महतो धूलिराशेर्बहिः प्रक्षेपादनु समदृश्यत कुट्टिम'।

सर्वोऽपि मम श्रमो व्यर्थ एवाभूत्। अहो कष्टम् पूतिगन्धोऽय कुतः समायाति? पुनरप्यहं गृहद्वारं प्रति प्रस्थितोऽभवम्। एतावत्येव समये तेन महता वाततरङ्गेण निश्चयमेवाकथ्यत गन्धोऽय पश्चिमतस्समायातीति। झटित्यहं बहिर्निरगच्छम्।

बहिर्निर्गत्य चेतस्ततस्सावधानं द्रष्टुमारभे। एतावत्येव दृष्टिर्मम कुत्रचिन्मृत्तिकाराशावपतत्, यः किल कस्यचिदाम्रवृक्षस्याधारतादभूत्, यस्य चोपरि पिपीलिका मक्षिका मशकाश्च संचरन्त आसन्। आश्चर्येण चाहमाक्रान्तोऽभवम्। नूनमस्य मृत्तिकाराशेरन्तश्शव कश्चिन्निखातोऽस्ति, अवश्यमेव मृत्स्नामपाकृत्य शवोऽयमुद्धर्तव्य', निश्चितमेव च यत्किंचिद्रहस्यमत्र प्रकट भवेत्।

सर्वमिदं विचिन्त्य मृत्खननाय यत्किंचिदायुधमन्वेष्टुमारभे। दैवाच्च नातिदूरे पतित. कश्चित् कुद्दालो दृष्ट.। ततः किमवशिष्यते? महताऽऽनन्देन पूर्णोऽहं कृतार्थ इवाभवम्। झटित्येव कुद्दालेनानेन मृद खानितुमारभे। यथा यथाऽहमखनं तथा तथा दुर्गन्धोऽधिकाधिकीभवन् सर्वतः प्रसृतोऽभूत्। एवमेव खनति मयि शवः कश्चिददृश्यत। दर्शनादेवाहं संकुचितगात्रोऽभवम्। दुर्गन्धेन नासा स्फुटितु प्रावर्तत। तथापि किंचिदवहितो भूत्वा तस्यैव शवस्य पार्श्वत. पुनरखनम्। अदृश्यत चान्यः कश्चिच्छवः। इत्थमेव यावदहमखनं तावच्छवादनन्तरं शव इत्येव शवपरम्परा समदृश्यत। कुत्रचित्केवलमस्थीनि पर्यभासन्, कस्यचिच्छरीरं स्थूलीभूतं विरूपमवर्तत। एकस्य शिर एव नास्ति चेदन्यस्य हस्त एव नास्ति। एकस्य शिरोऽस्ति चेदन्यस्य *कबन्ध एव नास्ति। किमधिकेन*, यावन्तश्शवा उपलब्धाः सर्वे एव प्रायो हीनाङ्गा आसन्।

अस्मिन् शवसमुदाये कस्याश्चित्स्त्रिया अपि शव आसीत्, स यद्यपि पूर्णाङ्ग एवाभूत्, अथापि स्थूलतामुपयातस्तथा विरूपोऽभवत्, येन

झटित्यहं तां प्रत्यभिज्ञातुमेव नाशकम् । चिरात्तु शवोऽयं तस्या देवनारायणमुखोपाध्यायस्यालिकाया इति ज्ञातम्, या किल यदाऽहं मूर्छितं देवनारायणमुखोपाध्यायमुत्सङ्गे वहन् कुत्रचिद्वनकुटीरेऽभवं तदा मां निर्वेद्धुमागात् । अद्य तु पापिभिस्सह पापस्य फलमनुभवति । हेतुना केनेयं मृतेति तु मया नाज्ञायत, महांश्च विस्मयोऽभूत् । शवस्त्वयं न बहुदिनपर्युषितः, अधिकादधिकं स्याद्वेत्त्रयाणां एव दिवसास्स्युरस्या मृतायाः । कुत इयं मृता! पश्यतोहराणां येऽनुचराः किं तेषामन्ततो दशेयमेव भवति, नैवं नैवम्, नाहं शक्नोमि ज्ञातुम् । अस्त्यथाप्यहं बाल. ।

एतावत्येव काले भयानकेन 'सदारं' शब्देनाहमुद्भ्रान्त इवाभवम् । यद्यपि समये तस्मिन्नैवासीत्कीदृशमपि भयं कस्मादपि मम मनसि, अथापि शब्देनानेन स्वीयः पराक्रमो मयि विशेषतः प्रादार्शि । तदैव जयपालस्य वार्ताऽपि स्मृतिपथमारूढाऽभूत् । झटित्येव कस्यचिन्महतोऽश्वत्थवृक्षस्याधश्छन्नोऽभवम् । पुनरपि दूरात्सदारं शब्दोऽश्रूयत । छन्न एवाहं त्रिंशद्धस्तदूरे द्वौ पुरुषावपश्यम् । दूरस्थतया तयोस्सल्लापो नाशक्यत श्रोतुम् । जयपालो गोविन्दलालश्च येन मार्गेण पूर्वं गतौ तेनैवैत, वप्यगाताम् ।

अहमपि ततस्तत्र क्षणमपि नातिष्ठम् । यथाशक्ति द्रुतं द्रुतं तं गर्तं यत्र शवमण्डली दृष्टा मृत्तिकयाऽऽपूर्य समीकृत्य कुद्दालमेकतो निक्षिप्य तदेव गृहमागाम् । पाठकाः पश्यत ! कीदृशोऽहमुन्मत्तः । बुद्धिपूर्वकं नरकपर्यटनं मयाऽकारि । कदा गोविन्दलालस्समागच्छेत् ? इत्यनया चिन्तयाहमाक्रान्तोऽभवम् । कदाचिदुदतिष्ठम् कदाचिदुपाविशम् कदाचिदभ्रमम्, परन्तु मनः केनापि शान्तं नाभवत् ।

यदा चैवमेवाहं तत्र गृहे पर्यटन्नासम् तदा कुत्रचित्क्रियान्तपि कुट्टिमभागश्चलन्निवाज्ञायत । प्रथमतस्तु ममैव भ्रमस्यादिति विचिन्त्य महता वेगेन तत्र पादेन प्राहरम् । तेन च विशेषतस्स भोगोऽचलत्, अज्ञायत चाधोऽयं भागश्शून्यो रन्ध्रवानिति ।

तस्मिन्नेव क्षणे त प्रदेशमहं सम्यक्कुद्घमकरवम्। अपश्यं च सुधा-चूर्णष्टकाखण्डाभ्यां एकीकृत्य संघट्टिताभ्यां निर्मितं तलम्। यथालोकयं च यादृश रूप कुट्टिमस्य तादृशरूपमेवैकहस्तचतुरश्र कुट्टिमेन सहैकराइयेन स्थापितं फलकखण्डम्। बहुप्रयस्यापि नाशक न फलकखण्ड समुद्धर्तुम्। हठाच्च स्मृतिपथमारुहत्स कुद्दालः। पलाय्य च तमानयम्। कुद्दालेन च तेन मे बहु साहाय्यमाचरितम्। तेन कुद्दालेन तस्मिन् फलकखण्डे कुट्टिमात्पृथक्कृतेऽदृश्यत हस्तापिकगाधः कश्चन गर्तः।

अचिन्तयच्चाहम्-' नूनमत्र रहस्य किंचिदस्ति, अन्यथा कुतोऽय-मियत्या चातुर्या निर्मीयेत, अतोऽवश्यमेव मया सम्यग्द्रष्टव्योऽयम्'' इति। विचिन्त्य चेत्थं हस्तद्वयावलम्बेन तस्मिन्नवातरम्। आगल सर्वोऽपि शारीरो भागस्तस्मिन् गच्छति स्म। पोट्टलिकेव काचित्पादेनास्पृश्यत। महता परिश्रमेण दक्षिणपादेन तामुद्धृत्य हस्तेऽकरवम्। अपश्यं च जीर्णवस्त्रा-च्छादिता ग्रन्थिमेकाम्।

'पोट्टलिकेय नून रहस्यपूर्णा अवश्यमेवेद्य टनीया' इत्यालोच्याह तामुद्घाटयितुमारभे। परन्तु नापारय तामुद्घाटयितुम्। यत्र वस्त्रे सा पोट्टलिका बद्धाऽऽसीत् तदपि विशीर्णमभूत्, अथापि ग्रन्थिर्नोन्मोचिताऽभूत्। यत्र छिन्नमभूत्, अथापि ममेच्छा नासीत्पूर्णा, यतो वस्त्रान्तरा-चर्ममयी काचन पोटलिका निरगात्, या किल दृढा सम्यग्बद्धा चासीत्। तस्या उद्घाटनाय तावत्प्रायतम्, यावदहं शक्नोमि प्रयतितुम्, अथापि हा धिक्! नापारयमुद्घाटयितुम्। अस्तु यद्वा तद्वा, तामह नास्यत्र पोटलिकाम्। तस्माद्गर्ताद्बहिर्निर्गत्य गृहाद्बहिः कस्यचिद्दृश्यवृक्षस्याधः मृत्तिकायामन्तर्गर्ते न्यधाम् 'यदा कदाचिदपि याऽस्य रहस्य प्रकटीभवेदेव' इति चिन्तयन्।

यथाशक्ति चाहं तं गर्तमपूरयं मृत्तिकाभिर्यथापुरम्, न्यधा च जीर्ण-शीर्णखण्डपटादिकमपि यथापुरम्। सर्वमिदं कृत्वा यावदेवाह निश्चिन्तो भवामि तावत् 'सादर शब्दः कर्णेऽपतत्। प्रथम त्वहं ना'.. निश्चिनु

कस्यायं स्वर इति, पश्चात्तु प्रत्यभ्यजाना गोविन्दलालस्याय स्वर इति। अहमपि बहिरागत्य 'सदार' इत्यवदम्। झटित्येव गोविन्दलालो मन्निकट-मुपस्थितोऽभूत्। अहं च सोत्कण्ठमपृच्छम्—' गोविन्दलाल! को वृत्तान्तः' किमिति मामन्धकार एवाद्यापि स्थापितवानसि ' इति।

गोविन्दलालः— 'किमित्येव वृत्तान्तार्थं सम्भ्रमः,समये समुपस्थिते सर्वोऽपि विदित एव भविष्यति। अद्य भवन्तो भवन्ति निश्चिन्ताः, इतः केनापि प्रकारेण नास्ति भवता भयम्, महान् समयोऽतीत , आगच्छन्तु, कुर्वन्तु भोजनम्।"

अहम्—"देवी राज्ञी कुत्रास्ते ?"

गोविन्दलालः—"इदन्तु सैव कथयितु शक्नोति, देव्या राज्ञ्या लीला यदि हृदयङ्गमा भवेत्तदा का नाम कथाऽन्यस्य। सर्वस्यास्य प्रश्न एवाय भवता व्यर्थः। आगच्छन्तु, मदीय कुटीरम्।

उभावप्यावा ततोऽगच्छाव।

गोविन्दलालस्यैव कुटीरे मया कृत्स्न दिनमयाप्यत। अद्य मदीय शरीरमन्यदिवसापेक्षया किंचिच्छान्तमिव लक्ष्यते। पाठका! मन्ये युष्माभिर्न विस्मृतस्स्याद्य कुटीरः, स एवाय कुटीरः, यत्रैकदा गोविन्द-लालेनाह बालकरूप धारितोऽभूवम्।

अस्मिन् दिने न जानामि गोविन्दलालेन कुत इद स्वादु सुमनोहर भोज्यमानीतम्, यदह भोजितोऽस्मि। अपृच्छमप्यह बहुधा कुत इद-मानीतमिति, तेन तु किमपि नोक्तम्। भोजयित्वा यद्गतस्तदद्यापि न निवर्तते। अह च कुटीरस्य देहल्यामुपविष्टो नानाविधाश्चिन्ताः कुर्व न्नेवावर्तिषि। एतावत्येव समये गोविन्दलाल स्मयन् दृष्टिपथमवातरत्।

आगतमात्र एवावदच्च—"व्रजेन्द्र प्रभो! उत्तिष्ठतु, आगच्छतु, दर्शयाम्यतिविचित्रा काञ्चिल्लीलाम्। परन्तु प्रथमतो भवद्भिरिद प्रतिज्ञेयम् त्किंचिद्भवन्तो द्रक्ष्यन्ति तेन नाह भेष्यामीति।

अहम्—नहि नहि, कदापि न भेष्यामि, गोविन्दलाल ! का सेदृशी लीला ?

गोविन्दलाल—या कदाचिदपि स्वप्नेऽपि नैतावतापि भवन्तोऽपश्यन्, या च विचारपथमपि नावतरेत्, तामेव लीलां भवन्तो द्रक्ष्यन्ति । परन्तु न सत्यभूतं तत्, किन्तु काल्पनिकम् ।

अहम्-आत्मानं स्थिरतयाऽवस्थापयितुं यथाशक्ति प्रयतिष्ये, आगच्छ, दर्शय, का सा लीला ?

गोविन्दलालोऽपि कुटीरद्वारकवाटिकायां तालयन्त्रमापद्दयामतोऽक्रमत्, अहमपि तमनुगच्छन्नेवाचिन्तयं कीदृशमिदं कार्यम् ?

इति संसारचक्रे द्वितीयभागे
प्रथमं चक्रम् ।

—०००—

## अथ द्वितीयं चक्रम् ।

### ( देवी दानवी वा । )

उत्तरमुखेन महता मार्गेण वयं वेगेन गच्छाम । रात्रिश्चान्धतमसा वृता । सर्वतश्च निःशब्दता बरीवर्ति । मार्गस्योभयतः पार्श्वयोर्घनं वनम् । गच्छतां चास्माकं केनापि कस्यापि सल्लापो न भवति । मौनव्रतमिव धारयन्तो वयं गच्छामोऽश्रान्ताः । इत्थमेव किञ्चिन्न्यूनाधिकभावेन घण्टाद्वयं यावद्गमनानन्तरं कस्यचिन्महतोऽश्वत्थवृक्षस्याधस्तादुपविष्टैरस्माभिर्व्यश्रम्यत । किञ्चिद्विश्रमानन्तरं गोविन्दलालोऽब्रवीत्—"कियन्तञ्चित्कालमत्रैव तिष्ठन्तु भवन्तः । तावदहं निश्चिनोमि किमित्र कर्तव्यमिति । इदन्तु इदं तिष्ठतु, नाद्यापि भवन्तो निरापदोऽभवन्निति" इति ।

एतावदुक्त्वा च गोविन्दलालो ग्रामपार्श्वस्था कुत्यामेकं लघुनौका-ध्यच्च पश्चिमदिशायामन्धकारे न्यलीयत, अहन्तु पदयंत्रात्रानर्ति ।

अहो ! कियतः कालादनन्तर स एव पुनर्मुनिजनमानसोन्मादी गगनतलचुम्बी सङ्गीतरवो न जानामि कुत आगत्य मदीये कर्णकुहरे मधु-सिञ्चन कर्तुमारभत ! अहो कीदृशो मधुरोऽस्य स्वरः ! देवि राज्ञि ! निश्चितमय तवैव कण्ठ, मनोमादक तवैवेद गानम् महामहिमशालिनि कुत्र त्वमस्यद्य ? श्रवणमात्रेणैव त्वदीयमधुरगानस्य सुदूरमभवन्मम सर्व-मपि दुःखम् । आगच्छ, देहि मे दर्शनम्, शरच्चन्द्रशकलमिव ते वदन बिम्ब दर्शयित्वा कुरु कृतार्थं माम् ।

तथाय शब्द कथयति त्वमसीतोऽर्धक्रोशदूर इति। किमर्धक्रोशोऽपि दूरमिति कथयितु युज्यते ? कुत्राद्य त्वमात्मान छादितवत्यसि ? किं स्वर्गे उत ततोऽप्युत्तमे कुत्रचिल्लोके ? गगनेऽथ पाताळे ? देवि कुत्रासि ? गोवि-न्दलाल ! आगच्छ आगच्छ, झटिति मा नय देव्या राज्ञ्या निकटम्। गच्छ, नेत० पर त्वदीय वचनमहमङ्गीकुर्याम्, भवतु यद्वा तद्वा, प्रापय मा देव्या राज्ञ्या निकटम् । तत्र गमनेनैव मे सर्वमपि कष्ट नष्ट भवेत् ।

तस्य गीतस्याकर्षिणी शक्तिर्मां निजपार्श्वयाकष्टुमारभत । अह-मपि तत्पार्श्वत एव एकमेक पद निक्षिपन्नमतो गन्तु प्रावर्तिषि । ततश्च गीतमपि सम्यक्छ्रवणपथमवतरितुमारभत । अहमप्यनन्यमनाश्श्रोतु मारभे । इद च तद्गीतम्=

तस्य विचिन्त्य वचो हृदि सतत रचयामीह छन्द ।
तेन च मनसि प्रमाम्भोधिर्वर्धतेऽपि चानन्द ।
सगमनाशाकुरति मनसि मे तया च मोदोऽमन्दः ।
त्व मयि रुष्टः किमिति न जाने तादृक्करुणाकन्द. ।

अहो ! कीदृशमिद सुन्दर गानम् ! कीदृशोऽस्य गभीरो भावः ! अहह ! कुतो न भवेत् ? देवि राज्ञि ! वस्तुतस्त्वमसि नाकवासिनी देवी !

लाभ हानिं वा किमप्यविचिन्त्य तमेव गानशब्दमनुसरन्नुन्मत्त इव गन्तुमह प्रावर्तिषि । अन्धकारावृता सा रात्रि ,तथाच स दुर्गमःपन्थाः

पकपदनिक्षेपोऽपि दुष्करोऽभूत् । कण्टकैः पदे पदे लग्नैर्बहु प्रायत्यत मा प्रतिरोद्धुम्, अहन्तु तैः रुद्धोऽपि न विरुद्धगतिरभवम् ।

हा हन्त ! इदन्तु तदेव खण्डगृहम्, यत्र देव्या राज्ञया दशाऽऽदर्शितः कारागृहाद्विनिष्कास्य वेशान्तरवेषेणाह प्रवेशितोऽस्म्यहम् । अस्मिन्नहत्यन्धकारेऽपि शक्नोम्यहं कथयितुम् इदं तदेव, पश्यतोहरेणा मालुर्मजळानाम्ना जेरठाया गृहमिति । अयमेव हि स पञ्चपाण्डवनामा वृक्षः । आश्चर्यमाश्चर्यम्, कुत्याऽपि खल्वियं सैव । हा धिक्, कीदृशमिदं रहस्यम्, किमपि हृदयं नावतरति !

एतदनन्तरं च बहवः प्रश्ना मनसि मम सञ्चरितुमारभन्त । खण्डगृहस्याभ्यान्तरं गच्छामि न वा ? देव्या राज्ञया गोविन्दलालस्य वाऽऽज्ञा तु नास्त्येव, एवं सति तदाज्ञामुल्लङ्घ्य कथं गन्तव्यम् ? किं कर्तव्यम् ? किमपि निश्चेतुं नाशकम् । इत्थमेव च शोचन् विचारयंश्च प्रधानद्वारस्य निकटमहं प्रापमचिन्तितमेव, कपाटिका तु तदर्गळाऽभूत् ।

पुनरचिन्तयं चाहम्—'इत्थं नामान्धतमसावृतेऽत्रैकाकिनो मम भ्रमणं न युक्तम्, यत्र गोविन्दलालेनोपवेशितोऽस्मि तत्रैव गच्छामि' इति । परं पादौ न प्रसरतस्तदभिमुखम् । कथं वा प्रसरतः ? मनसि खलु विश्वासोऽभून्नूनमत्रैव गृहे देवी राज्ञयस्तीति । एतावत्येव समयेऽतर्कितमेव द्वौ पुरुषौ गृहान्निर्गत्य सञ्चरन्तौ वनमध्यमविशताम् । अहमप्येतावालोक्यैकत्र पार्श्वे छन्नोऽभवम् ।

यदा च तावुभौ सुदूरं निर्गतौ तदाऽहं गृहाभ्यन्तरं गत्वा देव्या राज्ञया दर्शनमेव कर्तव्यं निरचैषम् । भगवन्तमनुस्मरन् सधैर्यावष्टम्भं पादावग्रतो निक्षेप्तुमारभे । अन्धकारस्तु तथाऽऽसीत्, यथा निजावपि हस्तौ न दृश्येते, अस्तु, येन केनापि प्रकारेण हस्ताभ्यां भित्तिं स्पृशन् स्पृशन् सोपानपर्यन्तमगच्छम् । तत्र तु सर्वतो फुसफुसाकारं विना किमपि नाश्रूयत । अपरं तु ऐकान्त्येन निःशब्दमेवासीत् ।

पुनरप्येकेन मनोहरेण गीतशब्देन तद्गृहं प्रतिध्वनितमभूत् । तदा मम निश्चयोऽभूत्—यत्र गृहे कोणस्थे मञ्जुलानाम्न्या जरठया सह सल्लापो ममासीत्तत एव गृहादयं गीतशब्दस्समायातीति ।

तत्र महत्यङ्गणे कोणे यत्र तद्गृहमासीत्कोष्ठके कश्चिद्दीपः प्रज्वलन्नासीत्, यस्य खलु प्रकाशः पञ्चषान् हस्तान् प्रसरंस्तत्रैव विलीयमान आसीत् । ततोऽग्र्यमत पदं निधातुं नासीत्साहसम् । अतश्च कुत्रचित्पार्श्वे स्थितोऽहं गीतं श्रोतुमारभे । शृणुत—

अर्चयामि हृदि सन्निहितं त्वाम्, अर्पयामि हृदयं च मदीयम् ।
दुर्भगोऽन्यदिह किन्नु ददामि प्रीतिदानमिदमेव गृहाण ॥

यदा गानं समाप्तमभूत् तदा गद्गदेन स्वरेण प्रस्खलता शब्देन कथयतः कस्यचिदिमान् शब्दानशृणवम्—अहो ! धन्याऽसि !! किं कथयतां प्राणप्रिये !

श्रवणमात्र एवास्य शब्दस्य कर्णौ मे स्तम्भितावभूताम् । देव्या राज्ञ्या गानमधिकृत्य कुत एतादृशमुत्तरम् ! 'यद्वा तद्वा भवतु । अहन्तु रहस्यमिदमवश्यमेव प्रकटयिष्यामि' इति निश्चित्य मन्दं मन्दं द्वारस्य समीपमुपागाम् । ततः कवाटरन्ध्रेण यदहमपश्यं तेन तु हृदयमेव विदीर्णमभूत्, सर्वाङ्गीणश्च रोमाञ्च इवाजायत । ज्ञानं च व्यलुप्यतेव । मनस्तदानीमिदमेवाभिलषतिस्म—यद्भूमिर्विदीर्णा स्यादहं चान्तः प्रविष्टो भवेयम्' इति । हन्त ! संसार. किमेवं घृणापात्रम् । किमयं स्वप्नः ! उत कस्यचिन्मायाविनो माया ? हा धिक् ! हा धिक्, कीदृशं कुत्सितं दृश्यमाभ्यां नेत्राभ्यामपश्यम् । चक्षुर्भ्यामग्नेरिव स्फुलिंगा निरसरन्, शिरसि च पतितमिवाशनिना । कृत्स्नं शरीरं कम्पितुमारभत । शिरः प्रह्वत्य यत्रासं तत्रैवोपाविशम् ।

नाहं किमपि कथयितुं शक्नोमि, न विचारयितुम्, न वा लेखिनीमितोऽप्यग्रतः प्रसारयितुम् ! शृणुत पाठकाः ! अस्य दुर्भगस्य कथां शृणुत ? गृहे तस्मिन् कः क उपविष्टः ? किं शुश्रूषन्ति ? साधु शृणुत

यस्या दर्शनमात्रेण सर्वमिदं दुःखजातं पलायितं भवति, यस्या एकशब्द-श्रवणेनैव सर्वमिदं बाह्यं वस्तुजातं विस्मरामि, या च संसारसागरे मज्जतो-ऽस्य एकावलम्बनम्, सैव-सैव मम पालयित्री वीरजादेवी हस्ते मद्यस्य दर्पणमयीं कुप्यां दधाना केन सह सल्पति ! अपि जानीथ यूयम् ? हन्त नेतोऽप्यहं धर्तुं शक्नोमि ! मम-मम तेनैव पित्रा सह ! चण्डालादधमेन, दुष्टेन, मम-मम पित्रा हरिहरवर्नजिना सह !

मदोन्मत्तो मम पिताऽवादीत्—"इतोऽप्येकं चषकम्, अद्य मे सुदि-नम्, अद्य मे महानुत्सवः, स्रावय स्रावय, अहहह ! महानानन्दः ! किम् प्रिये !"

यस्य किलाग्रे रूपस्य नदी प्रवहेत्स किं स्थिरस्तिष्ठेत् ! स मद्यपो वीरजादेव्या आकर्षणाय हस्तौ प्रसारयितुमारभत, वीरजा तु कौशलेन झटिति तस्य मुखे मद्यस्यैक चषकमदात् ।

मद्यपोऽब्रवीत्—"अहह, एका कुप्याऽन्याऽपि समुद्घाट्यताम्, अस्तु, पुनरप्येकदा गायस्व तावत् ।"

वीरजा तु तत्क्षणादेव गातुमारभत—

उरसा हृदयं स गलेन गलं
नयनेन दृशं परिमृद्य गतः ।
अवबोध्य वियोगशुचिं हृदये
परिपोष्य च रागमहो क गतः ॥

'अरे ! तव दासस्तु तव चरणयोरग्र एव पतितो वर्तते' इत्युक्त्वा स मद्यपस्तस्याश्चरणयोरधोऽलुठत् ।

मया पितृनाम्नस्तस्य दुष्टात्मनो घृणितं कार्यजातं कियद्दूरं लिख्य-ताम् । प्रायो मद्यपा यत्कुर्वन्ति, यच्च शक्यं कर्तुं तत्सर्वं सोऽकरोत् । परन्त्विदमेवात्राश्चर्यस्थानम्—यद्देवी राज्ञी तदीयस्य कस्यापि प्रत्युत्तरेण नाददात् । किन्तु किंचित्किंचित्स्मयन्ती तं चषकादनन्तरं चषकमिति क्रमेण मद्यं पाययन्ती, गानान्तरायां कृतायां विनैव विलम्बं गायन्ती चासीत् ।

यादृशेनाऽधानेन चातुर्येण च सा तेन मद्यपेन सहालापं कुर्वन्त्या-सीत्तस्य सर्वस्य पर्यालोचने महताऽऽश्चर्येणाविष्टं भवति चेतः । नासृशद्, न वाचालम्भत, केवलं बुद्धिबलेन तं स्थिरं कुर्वन्त्यासीत् ॥ तर्हि किमिदं सर्वं काल्पनिकम् ? किं कस्याप्यावश्यकस्य कार्यस्य साधनायैव देव्या राज्ञ्या भूमिकेयमाश्चर्यतरा धृता ॥

अथ किम्, नूनमित्थमेव । न चेद्देवी राज्ञी किमेतादृशं घृणावहं कार्यं केनचिन्मद्यपेन सह कुर्यात् । स मद्यपोऽपि यादृशस्तादृशो न, यम-हमद्यादशवर्षान्निर्गतेति समबोधयम् । एवं कदापि नैव भवेत्, नूनमस्ति किमपि रहस्यमत्र ।

सत्यं सत्यम्, अद्य स्मरामि गोविन्दलालस्य वचनम् । स हि कस्याचि-दाश्चर्यमयस्य कृत्यस्य प्रदर्शनाय मामेतावद्दूरमानयत् । अकथयदपि सा, लीला सर्वाऽपि काल्पनिक्येवेति । इदमेव तदद्भुतं कृत्यं नूनम् ।

इयतः कालादनन्तरं देवी राज्ञ्यब्रवीत्—"किं कृत्स्नामपि रात्रिं मद्यमेव पिबन्स्थास्यसि ? अथ किमपि कार्यमपि करिष्यसि ?"

मद्यप — 'इतोऽप्युत्तमं कार्यमेव किमस्ति ? यदि त्वमेवमेव चषक-मापूर्यापूर्य दद्याः किमिति कृत्वा रात्रिमिति कृत्स्नं जीवितकालमेव याप यामि । किं शशिबाले ! अयमानन्दो यावज्जीवं तिष्ठेत्खलु ; पश्य, त्वदर्थेऽह वत्सरान्क्लिश्यन्नासम्, त्वं तु कियत्यपि दया नासीत् । अद्य महता महता परिश्रमेण तवेन्दुनिभं वदनं समदृश्यत । किमितस्त्वां त्यक्तुं शक्नोमि । शशिमुखि ! शशिबाले ! एकम्—सधडात्कारं स मद्यपो धरायामपतत् ।

कुत एवम्, ? देवी राज्ञी कुतोऽनेन शशिबालेति सम्बोध्यते ? शशि-बाला ! शशिबाला ! इदं नाम मया पूर्वं यत्र कुत्रचिच्छ्रुतम्, सम्यगहं स्म-रामि, आम्, आम् स्मरामि सम्यक्—दशमाङ्कचिह्निते कारागृहे भित्तौ लिखित मासीत् । देवि राज्ञि किं त्वमेव शशिबालाऽपि भवसि हन्त ! कीदृशी कठि-नतमा प्रहेलिका ?

क्रमशश्च मधपस्य कण्ठोऽधिकाधिक रुद्धोऽभूत् । तेनैव रुद्धेन कण्ठेन शिथिलशिथिलेन स्वरेण सोऽवादीत्—"शशिबाले ! एकं चषकमितोऽपि, कण्ठः शुष्को भवति ।"

"हि हि हि हि हि हि हि हि !" हसन्ती शशिबालाऽब्रवीत्—नहि, नहि, एव न दास्यामि, यदा त्वं तस्य प्रत्युत्तरं दास्यसि तदा दास्यामि ।"

मधपः—"तूष्णीं भव तूष्णीम्, अय किल महत आनन्दस्य समयः प्रचरति, सर्वम्स वृत्तान्तस्तिष्ठतु,आनन्दं न विघातय, यद्भवति तदेव भवतु, उद्घाट्यतां कुप्यापिधानम्, विक्षाल्यताम् च मद्यम् ।"

शशिबाला—"तर्हाहं गच्छामि"। एतावदुक्त्वा शशिबालोदतिष्ठत् ।

मधपः—किं कुपितासि ? प्राणप्रिये ? उपविश उपविश, स्पृशामि ते चरणौ, घर्षयामि नासिकाम्, किमिति मृतं मारयसि, उत्तिष्ठ, एकं चषकं देहि मे प्रिये !"

यदा शशिबालाऽऽत्मन उपवेशनाय मधप हस्तौ प्रसारयन्तमपश्यत्तदा स्वयमेवोपाविशत् । एकं चषकं च मधपाय दत्त्वाऽवादीत्—"गच्छ, तिष्ठतु तव कथनं प्रतिज्ञा च, सर्वं मयाऽवलोकितम् ! गच्छ, गच्छ, ज्ञातं मया, त्वं महान् वञ्चक इति । किं मया कदापि मद्यं पूर्वं स्पृष्टम्, केवलं तवैव प्रीत्यै तस्यार्थस्य श्रवणाय च मयेदं कृतम्,न चेन्मम का नामावश्यकताऽसीन्मद्यस्पर्शनस्य, कथयिष्यसि न वा ? न कथयसि चेत् पश्य,अहं रोदिमि" एताश्च कथयन्त्या एव तस्या नयनयोरदृश्यताश्रु । अहो ! साऽपि शोभा दर्शनीया नामासीत् ।

मधपोऽब्रवीत्—"कुतो न कथयिष्यामि, शशिबाले ! किमिति त्वं रोदिषि ? श्रस्तवं कथयामि, अद्य तु यच्चलति,तदेव चलतु ।"

शशिबालाऽब्रवीत्—"नहि नहि, तन्न भविष्यति, यद्येव सर्वं वृत्तान्तं स्पष्टतया न कथयेस्तदा गच्छाम्यहं रायमानेतुम् । स आगत्य तवेदं

चरित्रं सर्वं निजाभ्यां नयनाभ्यां पश्यतु । त्वं किल बलात्कारेण मदीय गृहं प्रविश्य मदीय गौरवमपहर्तुमिच्छसि, कथय, सत्यं कथय, नजेन्द्रभूषणस्तव को भवति ?

मद्यपस्तूच्चैर्गातुमारभत–

"मालतीभूयछादय, हेममराजम्
मालतीभूयछादय"

देवी राज्ञी–"किमिदम् ? किमिति गातुमारब्धम् ?

मद्यप.–"यदि त्व राजन् मालतीभूयछादये.–पीत्वा विषं म्रियेयम्, हेममराजन् मालतीभूयछादय, हेममराजन्"

गायन्नेव स उन्मत्तवन्नर्तितुमारभत ।

देवी राज्ञी–"किमिदम्, उन्मत्तभावं किं प्रकटयसि ? यद्वा तद्वा कुरु त्वम्, नाहं तव वाग्जाले पतिष्यामि, यदि चिकथयिषसि झटिति कथय, न चेदन्यमुपायं प्रयोक्ष्ये ।

मद्यपः–"किमहं न शक्नोम्यन्यमुपायमवलम्बितुम् ! किमित्यधिकीकरोषि वाच शशिबाले,

देवी राज्ञी–"न कथयिष्यसि ?"

मद्यपः–"नजेन्द्रः को वा ! कथमहं ज्ञास्यामि ? स तु त्वां केवलं वञ्चयन्नासीत् ? सर्वमिदं वाग्जातमद्य तिष्ठतु, उद्घाट्यतां कुप्या ।

पश्यत्येव मयि देव्या राज्ञ्या वदनमारक्तमभवत्, परन्तु पुनरप्यात्मानं सस्तभ्य सा चषकमेकं मद्येनापूर्यावादीत् ।

"हरिहरप्रभो ! न कथय, यथा तवेच्छा, अहं स्त्रीभूत्वा तव किं वा करिष्यामि । अस्तु तल्लेखकनामशून्यं पत्रं कथमभूत्, यत्त्वन्निकटे समागतमभूत् ।"

एतावन्मात्रशब्दस्य श्रवणमात्र एव स मद्यपस्सम्भ्रान्त इवाभवत् । परन्तु पुनरप्यात्मानमवष्टभ्यावादीत्—"कीदृशं पत्रम्, कुतस्त्यम् ?

देवी "कथमिदमहं जानामि, अस्तु, इदं गृह्यताम्"

मधपः-"इदमेवापेक्ष्यते, देहि"

इत्युक्त्वा तमपि चषकं पपौ। एतावत्येव समयेऽज्ञायत, यथा कश्चित्सोपानमार्गेण गच्छति, अहं नु भीत इतस्ततः पश्यन्नेवासम्। गोविन्दलाल पुरतो ममागतोऽभूत्।

गोविन्दलालो हस्ते मां प्रगृह्य एकतोऽनयत्-अवादीच्च-"साधु साधु, भवता तु सम्यग्गाम्भीर्यं प्रकाशितम्। सर्वत्रापि विचिन्वतो मम यदा भवन्तो नोपलब्धास्तदाऽगत्या देव्यै राज्ञ्यै वृत्तान्तमिमं कथयितुं गच्छन्नासम्। अस्तु, गृहस्यान्तः कः ? दृष्टं किल ?"

अहम्-"सर्वं दृष्टम्, यन्मया दृष्टं तेन शिरो घूर्णतीव"

गोविन्दलालः-"इदमेव दर्शयितुं भवन्तोऽहमत्रानिनयिषुरभवम्। अस्तु, किमनेन गृहीतम्।

अहम्-"देव्या राज्ञ्या, न ज्ञायते, कस्य वृत्तान्तस्यावगतये बहु प्रायत्यत, स तु किमपि नावदत्। परन्तु कस्यचिल्लेखकनामशून्यस्य पत्रस्य नामश्रवणमात्रेण स किञ्चिन्मृदुरभूत्। तत्पत्रं किं काल्पनिकम् उत सत्यम्"

गोविन्दलालः"सत्यमपि काल्पनिकमपि, किं केनाप्युपायेन स मार्गं नायाति ?'

अहम्-"नहि, कथमपि नायाति।"

गोविन्दलाल किञ्चिद्रोषेणावदत्-"स किं सुखमेव मार्गं समागच्छेत्। अस्तु, इद भवन्त कुर्वन्तु कार्यम्। अहमन्तर्गच्छामि। यत्रासन् भवन्तस्तत्रैव गच्छन्तु। मया द्वारं पिहितम्, अतश्च नास्ति शङ्कापि कस्याप्यागमनस्य"

गोविन्दलालोऽन्तरगच्छत्, द्वारदेशं प्राप्य च तिष्ठत्। गोविन्दलालेऽन्तः प्रविष्ट एव स मद्यपोऽवादीदुच्चैस्स्वरम् "कः ? गोविन्दलाल ! आगच्छ, आगच्छोपविश" एतावदुक्त्वा देव्या राज्ञ्याः पुरतः स्थिता मद्यस्य कुप्यां गृहीत्वा चषके मद्यं निषिच्य गोविन्दलालमवादीत्-"गृहाण, पिब

मित्र ! अद्य हि महत आनन्दस्य समयः । बहोः कालादनन्तरं प्रियायास्श-
*शिवालायास्समागमोऽभूत्"*

गोविन्दलालस्तु चषकं गृहीत्वा सविनयमवदत्-"अद्य मे भाग्यस्य नास्त्यवधिः, यत् स्वयं हरिहरप्रभुर्निजेन हस्तेन मद्यं विस्तार्य मद्यं ददाति, सम्बोधयति च श्रीमुखेन, परन्तु किं मया श्रीमतां समक्षमेव मद्यपानेन धाष्टर्यं प्रकाशयितुं युक्तम्" इत्युक्त्वा गोविन्दलालश्चषकं गृहीत्वा किंचित्प्र-च्छन्ने स्थाने गत्वा, न ज्ञायते, तत्र मद्ये यत्किंचिद्वस्तु सम्मेळयित्वा प्रत्या-गत्य निजे स्थाने समुपाविशत् । कियतः कालादनन्तरं तदेव चषकं हरिहं-राय दत्त्वा तमपाययत् ।

देव्या राज्ञ्या साभिप्राया काचिद् दृष्टिर्गोविन्दलाले निपातिता, यस्या रहस्यमहं न जानामि । पश्यत्येव मयि हरिहरप्रभोर्मम पितुरवस्था परिव-र्तमानाऽऽसीत् । नेत्रे च स्थिरे अभूताम् । क्षणाच्च सोऽपि मूर्च्छितो न्यपत-त्क्षितौ ।

*"किमेतत् ? गोविन्दलालेन किं विषं पायितः ? न चेदियद्द्रुतं कुतो ऽयं मूर्छितोऽभूत् ? किं देव्या राज्ञ्या अनुमत्या कार्यमिदं जातम् ?"* सतोऽपि तत्राहं स्थातुं नाशकम् । कपाटमुद्घाट्यान्तः प्राविशम् ।

मामन्तः प्रविशन्तमालोक्य देव्या राज्ञ्या साश्चर्यमुक्तम्-"त्वं कुत ? किं गगनात्पतितोऽसि ?'

अहन्तु तस्य प्रत्युत्तरमदत्त्वैव झटिति निजपितुः पार्श्वे गत्वोपावि-शम् । तस्य वक्षसि हस्ते निहितेऽज्ञायत नायं मृत इति, यतो धुक् धुक् शब्दोऽश्रूयत । देव्या राज्ञ्या तु सोच्चैर्हासमुक्तम्-"मा भैः, पिता तव नायं मृतः, गोविन्दलाल ! मायाया महिमानं पश्यसि खलु ! अन्ततोऽपि पितैव खलु !" इति गोविन्दलालेनापि सहासमेवास्य किंचित्प्रत्युत्तरं दत्तम् । अहं तु लज्जयाऽवनतशिरा अभवम् ।

देवी राज्ञी गोविन्दलालमवदत्—"भयोऽनर्थपर्यवसायि तु किमपि कार्यं नाभूत्, अस्तु, साधु, किन्तु तावदेनाम् कुञ्चिकैका लभ्यते न वा पश्य" इति ।

गोविन्दलालेन तु सुचिरमन्विष्य हरिहरस्य कटिदेशात्काचिद् बृहती कुञ्चिका निष्कासिता । देवी राज्ञी सानन्दमुच्चैरुद्घोषयत्—"जयतु भगवान् परमात्मा ! एतावद्दिनानन्तरमाशा परिपूर्णाऽभवत् । गोविन्दलाल ! अस्यामेव कुञ्चिकायां सर्वं रहस्यं छन्नमस्तीति रायान्मया श्रुतम् ।

गोविन्दलाल —किं तत् ?"

देवी राज्ञी—"अस्तु, शृणु । अद्य प्रातरेव रायो हरिहरश्च किञ्चिदालोचयन्तावभवताम् मया छन्नया सर्वं श्रुतम्, परन्त्ववगन्तुं नाशकम् । अस्याः कुञ्चिकाया विषये बहवो गुप्ता वृत्तान्तास्सन्ति, येषामिदानीं कथनस्य नास्ति काऽप्यावश्यकता । हरिहरमहं रायहस्ते कुञ्चिकां वितरन्तमहमपश्यम् । यदा रायो गतस्तदाऽहं हरिहरमभोर्निकटेऽपृच्छम् । स तु मां दृष्ट्वैव महताऽऽनन्देनोत्फुल्ल इवाभवत् । किं कथ्यताम् कुञ्चिकाया एव निमित्तं मयाऽद्य गणिकात्वमप्यवलम्बनीयमासीत् ।" एवं कथयन्त्या एव देव्या राज्ञ्या नेत्राभ्यामश्रु प्रावर्तत धारया । मुखं च मलिनमभूत् ।

कियत्कालादनन्तरं देवी राज्ञी पुनरवदत्—"न युक्तमितो विलम्बाचरणम्, जयपालमाहूय हरिहरं तदधीनं कुरु, यथा च एतदीयानां बन्धनानां सम्यगुपरं व्यवस्थामुपदिश च तस्मै ।"

गोविन्दलालः—"तर्हि किं भवन्तोऽद्यैवेतः प्रस्थास्यन्ति ?"

देवी राज्ञी—"अद्यापि कस्मिन्नेह, अस्तु रायोऽपि किं तत्रैव वर्तते ? कथय ।"

गोविन्दलालः—"अथ किम्, तत्रैव वर्तते ।"

देवी राज्ञी—"तर्हि सोऽपि किञ्चिद् द्रष्टव्य, अद्य कस्मात्? ।"

गोविन्दलालः—"किञ्चिन्मूलाणिकभावेन दशाध्यक्षासादनम्"

देव्या गम्भमनुक्तम्—"तर्हि झटिति गन्तव्यम्, त्वं जयपालद्वारा कार्यं समर्प्य रत्नालयेऽहं नौकया यद् न गच्छेयम् ।"

गोविन्दलालोऽगच्छत्, तदा देवी मामवदत्-"आयाहि, अन्यदद्भुतमेकं प्रदर्शयामि ।"

देव्या राज्ञ्याः कार्यशैलीमप्रतिमां बुद्धिमतिमानुषं चेष्टितं चावलोक्याहमन्यादृश इवाभवम् । अहमवाङ्मुखो भूत्वा तस्या मुखं निरीक्षमाण आसम् ।

देवी राज्ञी सम्यगहसत्, मधुरेण स्वरेण मामवदच्च-"आगच्छ, उत्तिष्ठ, किमित्युपविष्टोऽसि ।" हस्ते प्रगृह्य स मामुत्थापयामास ।

अहन्तु प्रेमगद्गदेन कण्ठेनावदम्-"कुत्र गच्छेयम् ? त्वया सह कियच्चिरमहं भ्रमामि । मादृशस्य क्षुद्रतमस्य प्राणिनः कृते किमितीयत् कष्टमाद्रियसे ? मम नेत्रयोरावरणमपसारय ? प्रदर्शय मार्गं मे । मज्जन्तं संसारे समुद्धर ! स्पष्टं कथय च-"काऽसि त्वम् ? देवी दानवी वा ?"

इति संसारचक्रे द्वितीयभागे द्वितीयं चक्रम् ।

—००—

## अथ तृतीयं चक्रम् ।

### ( भैरवीचक्रम् । )

श्वशुरगृहमित्युक्त्वा ममान्यादृशेन पित्राऽहं यत्पुरातनं खण्डगृहं नीतः, यतो वेयस्याप्यम्मम शिरस्यारुहत्, तस्यैवाहमद्य खण्डगृहस्य पृष्ठभागस्थेन गुप्तमार्गेण देवीं राज्ञीमनुसृत्य गच्छामि । महता परिश्रमेणान्धतमसावृतं मार्गमतिक्रम्य यदा समीपमवापं तदा गङ्गाधरं दीपहस्तं तिष्ठन्तमपश्यम् । ततश्च वयं त्रयोऽपि सोपानमार्गेणोपरि गन्तुं प्रावर्तिष्महि । शिरोगृहं प्राप्तेषु चास्मासु देवी राज्ञ्यपटकर्णे गङ्गाधरेण किञ्चित्संलप्य परावृत्य मामब्रवीत्—"त्वं गङ्गाधरेण सहात्रैव तिष्ठ, अहं तत्रत्यामवस्थामवलोक्य झटित्येवागच्छामि" एतावदुक्त्वा च गङ्गाधरहस्ताद्दीपं गृहीत्वा देवी राज्ञी प्रातिष्ठत ।

तत्रान्धतमसावृते स्थाने निश्शब्दे गङ्गाधरमहं बहून्प्रश्नानपृच्छम् । गङ्गाधरस्तु कस्याप्युत्तरमदत्त्वा "किमहं कथयामि, देवी राज्ञयेवाद्येव सर्वं कथयिष्यति" इत्येतावदेवाकथयत् ।

एतावत्येव समये समागता देवी राज्ञी "गङ्गाधर ! त्वं गच्छ, महताऽवधानेन चतुरस्त्वयानेन सह तत्र सन्नद्धस्तिष्ठ, गृहाण तवेमं दीपम्" इत्यवदत् । गङ्गाधरस्तु गृहीतदीपो न जानामि कुत्र गत इति ।

देवी राज्ञ्यग्रतः, अहं च तस्याः पृष्ठतो गन्तु प्रावर्तिष्वहि, बहूनल्पगृहाङ्गणानि चातिक्रम्य किञ्चिदनावृतं स्थानमाविश । तत्र प्राप्तयोरेवावयोः कश्चिन्महान् हासशब्दोऽश्रूयत । अह देवीं राज्ञीमपृच्छम्–"कुत्र मां नयसि, कथय किं नामेदम् ?" इति ।

देवी राज्ञ्यब्रवीत्—"कार्यमिदमतिमहत्, नास्ति सर्वस्य तस्य कथनस्यावश्यकता, केवलमेकं दर्शयितुं त्वामहमत्रानयम्" इति । एतावत्येव पुनरप्येको महान् हासशब्दोऽश्रूयत । सङ्क्रान्तावेवावां तत्स्थानमगच्छाव; यतोऽयं हासशब्दस्समायाति ।

देवी राज्ञ्यब्रवीत्—"ननु गच्छावः, पश्यावश्च गवाक्षरन्ध्रेण कः कोऽस्ति गृहाभ्यन्तर इति' इति ।

ततोऽहं गवाक्षमार्गेणाभ्यन्तरमपश्यम् । यदपश्यम् तेन मनुष्याणां चरित्रेषु विशेषतश्च मायाविनीनां स्त्रीणां चरित्रेषु घृणा नाम समपद्यत महती । तत्राहं किमपश्यमिति चेत् ? शुद्धचरित्रस्य देवनारायणमुखोपाध्यायस्य परमप्रेमपात्रं श्रीमतीं जयकालीदेवीं मद्यपानमत्तां रायस्योत्सङ्गे निविष्टाम्, तत इतो भूमौ निहितं मद्यकुप्याः, चषकानि, मद्यपजनोचितं भक्ष्यं भोज्यं इत्यादिकं रायस्य परितस्तस्योत्साहवर्धनानि वद्धचनोचितानि वचनानि सोल्लासं कथयतश्च शङ्करादीन् ।

देवी राज्ञी कुत्सितमिदं दृश्यं निरीक्ष्य मन्दं मन्दं मामवक्त्—"दृष्टं किल, यथाऽस्यास्स्वभावेन परिणतम् ! महापुरुषस्य पत्नी नाम भूत्वा य थाऽद्य पश्यतोहरस्योत्सङ्गे सुखं निविष्टा ?

एतावत्येव न जाने मद्भूदेन स्वरेण जयकाळया किञ्चिदुक्तम्, यदधिकृत्यान्तः कश्चिदुच्चाट्टहासोऽभूत्, येनावायोश्श्रोत्रभित्ती फलिते इव।

रायः प्रेमगद्गदमवदत्-' प्रिये ! रात्रिमिमां सहस्व,मया ह्युपायोऽवलम्बितः, येन कोऽपि नावशिष्येत । तस्य तु पुनश्छिन्नं शिरश्श्वः प्रातस्तुभ्यं नूनं दर्शयामि । त्वन्निमित्तेनैव कियद्भ्यो दिवसेभ्योऽहं बहिर्गन्तुं नाशकम्, नो चेदितः पूर्वमेव स संयमिनीं प्रापितस्स्यात् । अस्तु रात्रिरेव हि विलम्बः, श्वस्तु पश्य किं भवती" ति ?

जयकाळी तु रायदर्शितेन प्रेम्णा विह्वलाऽवदत्-"अरे त्वं तु नित्यमेवमेव कथयन्नसि ! न त्वया किञ्चिद्भूत भविष्यति ! पश्य ! मया तु, निज पतिरपि विषमपि पायितोऽभूत् । न जानामि स दुष्टः कथं पुनरुज्जीवितोऽभूदिति । कथं स चितायाः प्रत्यावृत्तोऽभूत् ? नूनं सर्वमिदं तस्यैव वैरियस्य कृत्यम् ? त्वं तु महान् मूर्खः, गर्दभादपि नीचोऽसि ! अतिक्षुद्रः कुत्रचिद्वालकेऽपि तव न फलति किमपि । तस्मिन् दिने रात्रौ निर्मलं पर्यङ्कस्थ मल्लमर्दनेन मारयितुमुद्यतायामेव मयि न जाने केन नाळीकयन्त्रं प्रयुक्तम्, अस्मांश्च हस्तपाददण्डपातेन प्रहृत्य मूर्छितान् कृत्वा स उन्मोचितोऽभूत् । त्वमिमां शशिकालां साधारणीं न जानीहि, इयं विषलिप्तो बाणः। सर्वमिदं कृत्यं तस्या एव । त्वं त्विदमपि न जानासीस् । प्रथमतस्तु सैवा धूर्ता मारणीया । अरे त्वया तु किमपि न भवति । गच्छ, नेतोऽहं किमपि कथयामि" इति ।

रायस्तदीयं वदनं परिचुम्ब्य सप्रेमाविष्करणमवदत्-"प्रिये यत्किञ्चिद्वक्तुमिच्छसि तदद्यैव कथय,श्वोऽर्थं किमपि नावशेषय । बजेन्द्रस्य मारणं किं दुस्साधं कार्यम् ? तं च मृतमेवावगच्छ । केवलं हरिहरस्य कथनेन स इच्छापूर्वकमेव मया त्यक्तः, यतस्तेन साधनीयं किञ्चिदावश्यकं कार्यमस्ति। परन्तु नास्ति किमपि भयस्य स्थानम् । स खलु कारागृहनञ्च प्रापितोऽस्ति । तस्य कोऽप्युपायो न फलेत् । निश्चितं जानीहि कार्यं समाप्तमेव । शशिकालाविषये यत्कथयोऽन्मम्, तत्र किमहं कुर्याम् । । तत्र भगिन्येव सर्वोऽ

प्ययमनर्थ आपादितः । तस्याः कम्पिमुष्टिमात्रेणैव हि सर्वमिदमत्याहितं जातम् " इति ।

रायस्य मुखान्निजभगिनीनामश्रवणमात्रेण जयकाळ्या दुःखमिवाजायत । खिन्नमना विवर्णवदना च साऽवदत्–"यतः कुतोऽपि वा मम भगिनीमानीय देहि । युष्माभिरेव सा यत्र कुत्रचिच्छन्नं स्थापिता । प्रतिदिनमेव कथयसि श्व आगमिष्यति श्व आगमिष्यतीति । परन्तु नाद्याप्यायाति सा । मनसि मम सन्देह इवोपजायते । सत्यं कथय, सा जीवति खलु" इति ।

रायः—"उन्मत्तवत्किमेवं प्रलपसि । यदहं कथयामि, शृणु । एकदा मया काचन पत्रिकामञ्जूषा निष्कासिता, यस्या एवास्माकं जीवनं मरणं चाधीनम् । दैवाच्च तव भगिन्यपि तत्रागताऽचिन्तितम् । तानि च पत्राण्यवलोकितुमैच्छत्सा । महदेव करोन्निर्बन्धम् । किं क्रियताम् ! त्वयि त्वद्भगिन्यां च स्नेहेन यन्निरतेऽदर्शयमनिच्छन्नपि तस्यै तानि पत्राणि । दर्शयित्वा च यावदहं तानि पत्राण्येकीकृत्य कुत्रचिदेकान्ते स्थापयामि, तावदेव फकीरचन्द्रस्सोच्छ्वासं पलाय्यागतोऽवदत्–"आगच्छत ! आगच्छत ! महाननर्थो जातः । देवनारायणमुखोपाध्यायो जयकाळीं मध्ये विपणि परित्यक्तुं समायाति । परित्यक्तां च तां योऽभिलषेत्स एवापहरेत्" इति । एतावच्छ्रुत्वापि किमहं स्थातुं शक्नुयाम् ? मध्येविपणि किं तवापमानं श्रुतं सहेय ? तत्क्षणेनैव ततो निर्गच्छन्नहं शैघ्र्येण तां पत्रमञ्जूषां त्वद्भगिनीहस्ते दत्त्वाऽविळम्बेन त्वां रक्षितुं विपणिमागतोऽभवम् । ततः परं च यदभवत्तत् त्वं जानास्येव ।"

रायस्येदं वचनं श्रुतवतो मम सा ग्रन्थिस्स्मृतिपथमारुहत्, यामहं खण्डगृहस्य भूगर्भान्निष्कास्य कस्यचिद्वृक्षस्याधो भूमध्ये निहितवानस्मि । परन्तु नाहं तदानीं निश्चेतुमशकम् 'राय कां पोट्टलिकामधिकृत्य कथयतीति । अथापीदं स्वज्ञायत–जयकाळ्या भगिन्यैभिरेव विशस्ता खण्डगृहस्य तस्य समीपे यस्य चर्चापूर्वं कुत्रचिदागता भूमौ निक्षिप्तेति । कदाचिज्जयकालीं

रहस्यं न जानाति । मनसि तु अस्फुरज्जयकाल्यै कथयामि–'तव भगिनी *नाद्यास्मिन् जगत्यस्ति, किन्तु तत्र वर्तते, यतः कोऽपि न पुनरावर्तते'* इति परन्तु देव्या राज्ञ्याः प्रतिषेधेन मया किमपि नोक्तम् ।

एतावति काले काचिदन्या कुप्यापि मद्यस्य शून्याऽभूत् । भैरवी-चक्रस्यास्य भैरवीस्थानीयाया जयकाल्याः प्रसादं रायप्रभृतयस्सर्वेऽपि महता प्रेम्णा पपुः । ततः किम् ! हसनम्, रोदनम्, उत्थानम्, पतनम्, इत्यादिकं मद्यपाने यदुचितं तत्सर्वं प्रावर्तत, यदवलोकनेन शिरो मम घूर्णितमिवाभवत् । किन्तु धन्या सा देवी ! राज्ञी ! या किलानिमिषाभ्यां लोचनाभ्यां सर्वमिदमवलोकयन्त्यासीत् ।

तत्र मद्यपाने विचित्रैव दशाऽऽसीत् । सर्वेऽपि मद्यस्य मादकतया गतचेतना इवादृश्यन्त । एवं स्थिते कश्चिद्युवा, यः किल रूपेणैव शुद्ध इवादृश्यत, तेनैव गवाक्षेण—येनावामन्तः पश्यावः, अस्मान् पुनः पुनः पश्यन्नवालोक्यत । इत्येवं देव्या राज्ञ्या अप्यैकाग्र्यं किञ्चिद्भग्नमभूत् । साऽपि किञ्चिदितस्ततो द्रष्टुमारभत ।

अन्ते पुनरन्यो हासशब्दोऽभवत् । रायो जयकाल्याः कण्ठे हस्तं निधाय नर्तितुमारभत । अन्येऽपि तथैवोत्पतितुं निपतितुं चारभन्त ।

एतावत्येव सहसटात्कारेण कपाटिकोद्घाटिताऽभूत् । स च युवा यः पूर्वमुक्तः, पुरत आवयोरदृश्यत । भयविस्मयाभ्यां तदानीं विचित्रैव मे दशाऽभवत् ।

तेन यूना न जानामि, मन्दं मन्दं देव्या राज्ञ्याः कर्णे किमप्युक्तम्, यदहं किञ्चिदपि ज्ञातुं नाशकम् । किन्तु देव्या राज्ञ्या मुखनिस्सृतान्येतान्यक्षराणि परं श्रुतानि—"आं विजय ! अयमेव समयः" इति । इदमुक्त्वा च न जानामि देव्या राज्ञ्या किं तस्य हस्ते दत्तम् । स च तद्गृहीत्वा झटित्यन्तः प्रविष्टः पुनस्स्वस्थाने समुपाविशत् ।

स युवा कियन्तंचित्कालं तूष्णीमवस्थाय; ततो मद्यभरितां काञ्चन कुप्यां हस्ते गृहीत्वा रायस्य पुरतो गत्वाऽतिष्ठत् । अथ दीपसमीपं गतः

कुप्यां सम्यक्चालयन्नवलोकयितुमारभत । सर्वेषां दृष्टिर्विस्मयन्महत्त्वा चातुर्यां तस्या कुप्यायां तद्‌दक्षिणचक्रिमपि तस्य हस्तेऽवर्तत । ततश्च तत्रस्थान्यन्येकमेकैकं चषकं मद्यस्यापाययत् । ततः किम् ? पश्यतोरेवावयोस्सर्व एव ते जगदिदं विस्मृत्याचेतना भूमावपतन् । स एव केवलमेककस्सचेतनोऽवर्तत येन सर्वेऽपि मद्यं पायिताः ।

अनन्तरं च स युवा नौ निर्गीर्ष्यावदत्–"सर्वमस्ति समुचितम्-आगच्छत विनाऽऽक्षेपम्" इति ।

श्रुत्वैवेदं देवी राज्ञी पुरतोऽक्रमत् । अहमपि तामन्वगच्छम् । प्राविशाव च तद्गृहम् ।

स युवाऽविलम्बयन् रायस्य शरीरेऽन्वेष्टुमारभत । देवी राज्ञ्यपि जयकाव्या अङ्गानि परीक्षितुमारभत । स युवाऽवादीत्–"तत्तु पत्रं न लभ्यते ! किमभूत् ? आसाय तु तद्रायस्य निकट एवाभूत् । अन्यत्र यत्र कुत्र वा निक्षिप्यागतः किम् ? भवती पश्यतु अप्यस्ति जयकाव्या निकटे ? सा हि प्रातरारम्य पत्रिकार्थं रायमनुसरन्त्यासीत्" इति ।

तथैवाभूदपि । यून. कथन सत्यमेवाभूत् । यदन्वेषणानन्तरं देवी राज्ञी जयकाव्याः कटेः कांचित्पत्रिकां निष्कास्याब्रवीत्—"पश्य, अपीयमेव स्यात्" । यूनापि सहर्षमुक्तम्—"आम्—आम्—इयमेव ।" देवी राज्ञी मामब्रवीत्–"दीपस्य समीप गत्वा पठेमाम्, पश्यामः किमत्र लिखितमिति" इति ।

तस्मिन् गृहे पश्चिमभागे प्रज्वलतः कस्यचिद्दीपस्यालोके तदपठं पत्रम् । तत्रैव लिखितमासीत्–

॥ श्रीः ॥

प्रिया रामचन्द्रप्रमुखराः !

किमद्यावधि भवन्तस्तत्कार्यं कर्तुं नाशकन् ! कश्चिदतिक्षुद्रो बालो मयादृशां बुद्धिमतामपि दृष्टिषु धूलिं प्रक्षेप्तुं शक्नोतीत्ययमंशः कदापि मया मनस्यपि नालोचितोऽभूत् । अस्तु, इदानीं तदीयप्राणापहारस्य

चास्ति विशेषत आवश्यकता। परन्तु तस्य कार्यस्य समासो यदुचितं प्रतिभाति तथा क्रियताम् । अत्र तु तस्य कारागृहे स्थापनमेवास्माकं प्रधानं कर्म । सा कुञ्चिकाऽद्यापि ममैव हस्तेऽस्ति । यानि पत्राण्यधिकृत्य भवद्भिर्लिखितं तानि नेदानीमहं प्रेषयितुं शक्नोमि, यतस्तानि कलकत्तास्थे गृहे तिष्ठन्ति, येषां सर्वं वृत्तान्तजातं मम विश्वासपात्रस्य पत्रवाहकस्य मुखाज्ज्ञायेत ।

शशिबालायाः पृथक्करणम्, अथ कियन्तिचिद्दिनानि मन्त्रिकटे स्थापनं वा मदभिप्रायस्य न विरुद्धम्, अस्य कारणं तु भवन्तो जानन्त्येव । किमधिकं लिख्यताम् इति—

भवतां सदैव—

स एव ।

पुनश्च

देवनारायणश्छन्नो वर्तते । निर्मलकुमार एव कृत्स्नस्य वस्तुजातस्य स्वामी वर्तते । शीघ्रमुत्तरं प्रेषयन्तु ।'

पत्रिकायां लेखकस्य नाम नासीत्, न वा दिनं लिखितमासीत् । मया तु हरिहरप्रभुणैव लिखितमिदं पत्रमित्यमन्यत ।

देवी राज्ञी मामब्रवीत्—"पत्रिकाया अस्या अर्थः कोऽपि अवगतो वा ?" । अहमवदम्—"नहि नहि, सर्वोऽपि नावगतः, केन लिखितं कस्मा इति न ज्ञायते । अयं रामचन्द्रप्रभुः कः ?"

देवी—"भवदीयो राय एव रामचन्द्रप्रभुः । लेखकस्तु तव प्रियः पिता, त्वदुपरि कीदृशमनर्थं कर्तुमिच्छन्ति, पश्यसि खलु ! तव पिता श्वशुरश्च त्वां मारयितुं नेच्छतः । । त्वदीयस्य पितुर्मदावश्यकता विशेषतोऽस्ति, ज्ञातं किल ?" इति ।

अहन्तु लज्जयाऽवनतकन्धरोऽभवम् । देवी राज्ञी तादृशमेव किञ्चित्पत्रं निजवस्त्राञ्चलान्निष्कास्य जयकाल्याः करे न्यधात् । कोऽस्याभिप्रायः! देवी राज्ञी जानाति ।

देवी राज्ञी युवानमब्रवीत्–"विजय ! रात्रिरधिकं गता, न वयमत्र चिरं स्थातुं शक्नुमः । त्वमप्यत्रैव कुत्रचित्कोणे एतानेवानुसरन्निभृतस्तिष्ठ । यदैते समुत्तिष्ठेयुस्तदा त्वमप्युत्तिष्ठ । यद्यदेते कुर्युस्तदेव त्वमपि कुरु" इति ।

विजयं बोधनीयं बोधयित्वा तत्पत्रं गृहीत्वा च देवी राज्ञी ततः प्रातिष्ठत । अहमपि तामन्वसरम् । कियद्दूरगमनानन्तरमावां कस्यचिद्वनस्य समीपं प्रापिव ।

कुतोऽपि गङ्गाधरस्समागत्य देवीं राज्ञीं प्राणमत् । देवी तमपृच्छत्–"गङ्गाधर ! यत्कार्यमुद्दिश्य वयमागतास्स्मः, ईश्वरस्य कृपया तत्पर्यपूर्यत । तव चतुरन्तयानं कुत्रास्ते ?"

गङ्गाधरः–"आन्दोलिका तस्य वृक्षस्याधः स्थापिताऽऽस्ते ।"

देवी–"तर्हि तत्र गच्छामः ।"

त्रयोऽपि वयं वेगेन गन्तुं प्रावर्तिष्महि । मध्येमार्गं चाहं देवीं राज्ञीमपृच्छम्–"अद्य वयं कुत्र गच्छाम." इति ।

देवी–"नाहमस्मि शक्नोमीदमधैव कथयितुम् । समये समुपस्थिते, सर्वं स्वयमेव स्पष्टीभविष्यति ।"

गङ्गाधरोऽग्रतः, देवी राज्ञी मध्यतः, अहं च तामनु पृष्ठतः गच्छामः । कियद्दूरगमनानन्तरं गङ्गाधरो निरुद्धगतिरभूत् । अवदच्च–"आन्दोलिका स्थानैव वर्तते । वाहकाः किमद्यैवाह्वयितव्याः" देवी राज्ञी तदुत्तरतयाऽकथयत्–"अथ किम्, अद्यैवानय, अद्यापि बहूनि कार्याण्यवशिष्यन्ते ।"

गङ्गाधरोऽन्धकारे निलीनोऽभवत् । पश्यतोरेवावयोश्चतुर्भिरुद्धमानेयाऽऽन्दोलिकया सह पुनरागच्छत् ।

देवी राज्ञ्यब्रवीत्–"यत्किञ्चिन्मयोक्तम्, तत्सर्वं स्मर्यते किल ।"

गङ्गाधरः–"अथ किम्, सर्वं स्मरामि ।"

देवी–"तर्हि किमावां गच्छाव ।"

गङ्गाधरः–"कामं गच्छताम् ।"

देवी राज्यहं चान्दोलिकायामुपाविशाव । वाहकाश्चान्दोलिकां स्कन्धे निधाय महता वेगेन निःशब्दपदमेकवो मन्तु प्रावर्तन्त ।

गच्छन्नेव चाहमचिन्तयम्-"कोऽयमपूर्वो भयङ्करो व्यापारः ! किमेद भीषण भैरवीचक्रम्" इति ।

इति संसारचक्रे द्वितीयभागे तृतीयं चक्रम् ।

---

## अथ चतुर्थं चक्रम् ।



### ( नौकारोहणम् । )

रात्रेरयं समयः । अन्धतमसेन कृत्स्ने भूमण्डले निजोऽधिकारस्थापितो वर्तते । जगत्पावनिन्या जाह्नव्यामुत्ताळास्तरङ्गा उत्पतन्ति । एतादृशे समये यत्र सर्वेऽपि प्राणिनो निजं निजं कष्टं विस्मृत्य निद्रादेव्या सन्नपन्ति सप्रेमभरम्, अहं देवी राज्ञी च कुत्रचिन्नौकायामारूढौ गच्छावः । नौकायामन्यामेक एव नाविकोऽस्ति । अन्धकारेण तु नाहमशकं ज्ञातुं नौका कुत्र यातीति ।

नौकाया अन्त फलकस्योपरि कश्चित्स्वच्छसुन्दरश्च विस्तर आस्तृतोऽस्ति, यत्र देवी राज्ञी निविष्टाऽभूत्, अहं च समीप एव किंचिद्दूरे शिर पार्श्वे सन्निविष्टोऽभवम । अहं मद्विषयकान् बहून् वृत्तान्तानपृच्छम्, देवी राज्ञी तु कान्यपि प्रश्नस्य सम्यगुत्तरं नादात्, परन्तु बहून्गुप्तानर्थान्मकाशयामास, यानहं तेषु तेषु समयेषु प्रकाशयिष्यामि ।

देवी राज्ञीमहमपृच्छम्-"किमद्यैव रात्राववां प्रतिनिवृत्तौ भविष्याव ?" इति ।

देवी-"इदमधुनाहं कथयितुं न शक्नोमि"

अहम्-"नौकारोहणसमये यत्कथयानीत्यवादीस्त्वं तत्कुतो न कथयसि"

देवी—"सर्वं कथयामि । धैर्यमवलम्बस्व । यदा त्वमष्टादश वर्षान् निजमातापित्रोस्सकाश आसीस्तदा किं कस्मिन्नपि विषये कदापि कोऽपि सन्देहो नासीत् ।"

अहम्—"नहि, कदापि नहि, कुतो वा मम सन्देहो भवतु ? कस्याप्यर्थस्य नासीन्न्यूनता, सुखेनायासीत्समयः । मातापितरौ तु मां दृष्टिविषय एवास्थापयताम् । प्रान्तवर्तिभिः पार्श्वगृहवर्तिभिरपि बालैस्सह क्रीडनमपि प्रतिषिद्धमासीत् । पाठशालायां तु कदाप्यहं प्रवेशित एव नाभूवम् । गृह एवागत्याध्यापकाः पाठयन्ति स्म । परन्त्विदमेवाश्चर्यमासीत्—यत्सोऽध्यापकोऽप्येकान्ते मया न सङ्गच्छते स्मेति ।

देवी—"तस्याध्यापकस्य गृहं कुत्रास्ते ? जानासि वा ?"

अहम्—"न कमप्यहमपृच्छम्, न कोऽप्यज्ञापयद्वा ।"

देवी—"तव गृहे किं कदापि ज्ञातयस्सम्बन्धिनः कोऽपि समागच्छन्तो नाभवन् ?"

अहम्—"कुतो नागच्छन्तोऽभवन्, किन्तु मम तैस्सह कोऽपि विशेषालापो न भवति स्म, यतो मम तातस्तेषां निकटे विशेषतोऽवस्थानेऽवकाशमेव न ददाति स्म ।

देवी—"अस्तु, तव तातेन किं तव पितामहादीनां नामानि वा, कुलनाम वा कदापि तुभ्यं नोक्तम्"

अहम्—"नहि नहि"

देवी—"हरिहरप्रसादनाम्ना किं पत्रिकास्समागच्छेयुः ?"

अहम्—"अथ किम्"

देवी—"किं त्वन्नाम्नापि यदा कदा वाऽपि पत्रिका समागच्छेत् ?"

अहम् (स्मरणमभिनीय) "अथ किम्, यदा कदा वापि मम नाम्न्यपि समावरणप्रातिभाव्यानि ( Registered ) पत्राण्यागच्छेयुः ।"

देवी राजुत्थायोपाविशत् । आश्लिष्यावदच्च—"कथमिदं त्वमज्ञासीः, कथय तावत् ।"

अहमप्युत्थित उपाविशम्, किञ्चिदालोच्यैवमवदं च —'किञ्चिन्न्यूनाधिकभावेन पञ्चवर्षा अतीतास्स्युः एकस्मिन् दिने तातो मम निजोपवेशनगृहस्य पार्श्वस्थेऽल्पीयसि गृहे समुपविष्टो न जानामि केनापि सह सवैमनस्य सल्लपन्नवर्तत । दैवाचाहमप्युपवेशनगृहमगच्छम्, यत्र स्थितेन तयोस्सल्लापस्सम्यक्श्रोतुं शक्यते । तयोस्सल्लापमध्ये निजं नाम श्रुत्वाऽहमप्यवधानेन कर्णावेकाग्रौ कृत्वा सल्लापं श्रोतुमारभे । तातो मम्मैवं कथमन्नासीत्, 'त्वं कुतो नाम मे भयं दर्शयसि ? मनसि मम यथा प्रतिभाति तथा कुर्याम् ? इदं समापणप्रातिभाव्य पत्र ब्रजेन्द्रस्य हस्तं कथञ्चिदपि न प्राप्स्यति । यथाऽद्यावधि हस्ताक्षराणि कृत्वाह पत्राणि गृह्णन्नासं तथैवाद्यापि गृहीष्यामि । व्यर्थमेवाधिकशब्दकथनेन किं वा फलम् ?' यदि त्वमिदमङ्गीकरिष्यसि कामं दास्यामि पञ्चपाणि रूप्याण्याधिकमपि तुभ्यम् । परन्तु पत्रमिदं ब्रजेन्द्रस्य हस्ते कदापि न दास्यामि " इति । ततश्च सकटात्कारं कवाटिकोद्घाटिताऽभूत् । अहमपि ततो व्यगळम् । पत्रिकाविषयमहमेतावदेव जानामि ", इति ।

देवी—"येन सह तव पितुरयं सल्लापोऽभवत्, किं त्वं जानासि, तम् ? "

अहम्—"नहि नहि"

देवी—'अस्तु, तव पिता पत्रिकादिकं कुत्र स्थापयति । अपि, जानासि तत्स्थानम् ?"

अहम्—"नहि, किमपि न ।"

देवी राज्ञी पुनरप्यास्तरणे सन्निविष्टाऽभवत् । अहं गवाक्षमुद्घाट्य, यावत्पश्यामि, तावत् 'बाग् बाजार' स्थान पृष्ठतो गतमज्ञासिषम् । तेन च निरचिनव नौकेयं कलकत्तानगरं प्रति गच्छतीति ।

देवी राज्ञी नाविकमवदत्—"गोविन्दलाल ! किञ्चिच्छैघ्र्येण नय नौकाम् । कस्समयोऽद्य स्यात् ?" इति ।

मन्ये पाठकैरपि ज्ञातम्, नाविकोऽयमस्माकं परमसुहृद्गोविन्दलाल एवेति ।

गोविन्दलालोऽब्रवीत्—"त्रिघण्टावादनस्यायं समयः" इति ।

देवी राज्ञी ससम्भ्रममवदत्—"तर्हि नो नौकयां यान नोचितम्, आ', किमियती रात्रिरतीता ? नौकामत्रैव कुत्रचिद्बधान, ममापि रूपं झटिति, परिवर्तय" इति ।

आज्ञा प्राप्यैव गोविन्दलालो नौकां तीरं नीत्वा कुत्रचिद्बद्ध्वा, पेटिकामुन्मोच्य मधुच्छिष्टवर्तिकामज्वालयत् । तस्यैवालोके स देवीं राज्ञीं बालकमूर्तिकामधारयत् ।

धान्यो गोविन्दलालः, श्लाघनीयं तदीयशिल्पचातुर्यम् ! पश्यत्येव मयि स षोडशवर्षदेशीयां युवतिं युवानमकरोत् ।

इतोऽहमपि देवीं राज्ञीं बालकनाम्नैव व्यवहरिष्यामि ।

बालकोऽब्रवीत्—"इतः एव वयं वैतनिकशकटमार्गेण यास्यामः । नौकां त्वं समुचिते स्थाने स्थापय । ततः कुत्र गन्तव्यम्, तत्तु त्वं जानास्येव खलु ?" इति ।

गोविन्दलालोऽवदत्—"अथ किम्, कुतो वा न जानामि !" इति ।

बालकोऽब्रवीत्—"यथेच्छं त्वं यत्र कुत्र वा तिष्ठ, किन्तु श्वः प्रातरष्टघण्टावादनसमये मया सङ्गस्व । नेदं विस्मर्तव्यम्" इति ।

गोविन्दलालस्सह नौकया प्रायात् ।

दैवाच्च रथ्यां प्राप्यैवाथामेकं वैतनिकं शकटमपश्यत् । कृत्स्नदिनगृहीतेन परिश्रान्तौ रुग्णौ चाश्वौ तिष्ठन्ताविव निद्रानिमीलितनयनावभूतां, धृतपस्थानाविव । शाकटिकोऽपि पेटिकोपर्युपविष्ट एव शकटोपरितनभागे शिरो निधाय निद्रातिस्म । नरशब्दाकर्णनेन मन्ये परिमृजस्त्यक्तनिद्र उन्मीलितनयनश्चाभवत् । प्रथमतस्तु स नैवैच्छद्बृत्या शकटं नेतुम्, निर्बन्धस्वरमाभिर्द्विगुणं त्रिगुणं च भृतिमपृच्छत् । आंचा तु द्विगुणत्वत्रिगुणत्वादिकमनालोचयन्तौ यथोक्तमग्रयकरवाव भृतिम्, यतो नौ त्वराऽऽसीकार्यस्यार्

स तावच्छाकटिकोऽमन्यत द्विगुणं त्रिगुणं भृतिकथनेनैते मां निर्बध्नीयु रिति, किन्तु तन्मनोरथेन न फलितम् । मदुक्तां द्विगुणा त्रिगुणा च भृते-मङ्गीकृत्यावां शकटस्यान्तरुपाविशाव । " यदि त्वमर्धघण्टायामेव जिगमिषितं स्थानं प्रापयेः, तदा पारितोषिकमपि तुभ्यं दास्यावः" इत्यवदाव च । शाकटिकस्त्वनेन वाक्येन तुष्टोऽभून्न वा नाहं शक्नोमि वक्तुम् । किन्तु सोऽत्रैणैकदा महत्याश्वो खलीने शिथिले अकरोत् । अश्वावपि वातेन साहस्यमिव कांक्षमाणौ धावितुमारभेताम् ।

इति संसारचक्रे द्वितीयभागे चतुर्थं चक्रम् ।

—००—

## अथ पञ्चमं चक्रम ॥



### ( पैतृकं गृहम् । )

पाठकाः ! कथयन्तु नाम कुत्राहमस्म्यद्येति ! अद्य वर्षद्वयनन्तरं वीरजादेव्या सह कस्याः गृहस्य गुप्तद्वारं निकषा तिष्ठामि, ब्रुवन्तु नाम ! यदि न शक्नुवन्ति भवन्तो वक्तुम्, कामं शृणुतास्य दुर्भगस्यैव वचनम् । संसारेऽस्मिन् वक्तुमपि कोऽपि मदीयो नाम नास्ति । तर्हि यूयमेवैकदा 'हा धिक् हा धिक्' इति कथयत !

कुत्राहमस्मि कथयामि वा ? सत्यं ब्रूत, कथयाम्येव वा ? तर्हि शृणुत–यस्मिन् दुर्ग इव तिष्ठन्नहमशनिमपि पतन्तीं नागणयम्, यत्र गृहे वर्तमानो महाराजानां गृहमपि नापश्यं सगौरवम्, यस्मिन् गृहे शयानोऽहमिन्द्रमिवात्मानं सुखिनमज्ञासिषम्, यच्च गृहमात्मीयं मन्यमान आसम्, तस्मिन्नेव पितुर्गृहेऽहमद्य सभय गच्छामि ।

"अस्मदीयगृहस्य पृष्ठभागेऽल्पीयसी काचन वीथिका वर्तते, यत्र किञ्चिदुत्तं द्वारमपि निर्मितमास्ते, यच्च सर्वदैव दृढतमेन ताळयन्त्रेण घट्टितकवाटिकं भवति, तत्र तिष्ठामि । एतावत्येव घटिकायन्त्रेण चतुर्घण्टावा-

वान कृतम्। देवी राज्ञी सोत्कण्ठमपृच्छत्—"इदमेव हि तद्गृहम्?" इति। अहं चाकथयम्—"अथ किम्" इति।

"गृहाणेमां कुञ्चिकाम्, झटित्येवोद्घाटय कवाटिकाम्" इत्युक्त्वा देवी राज्ञी कुञ्चिकामेकां मम हस्ते प्रादात्। यद्यप्यन्धकार आसीत्, अथापि तालयन्त्रे द्घाटने नास्माकं विशेषतः परिश्रमोऽभूत्। आवामन्तः प्रविश्य पुनः कवाटिकां यथापूर्वं पट्टिततालयन्त्रामकरवाव। यतस्सा कवाटिका तथाविधाऽऽसीद्यदान्तर्बहिरपि वा स्थितेनैकयैव कुञ्चिकया तालयन्त्रपट्टनं कर्तुं शक्यतेनोद्घाटनं च। ततश्च देवी राज्ञी दर्पणमयं वैद्युतदीपं कञ्चित्कक्ष-कक्षोटकाद्दूरीनिरकासयत्, य कस्यचित्कीलकस्य घट्टनेनोद्दीपितोऽभवत्। अस्यैव दीपस्यालोके आवामुपरि गन्तुं प्रावर्तिष्वहि।

गृहमिदं शून्यमासीत्। न कोऽपि तत्र समदृश्यत। देव्या राज्ञ्या मुखाद्गृहवासिनः सर्वेऽपि गृहद्वारं पिधायान्यत्र यत्र कुत्रचिद्गता वर्तन्त इत्यपि ज्ञातम्।

गृहस्यास्य कोऽपि भागो ममापरिचितो नासीत्, यतोऽत्रैव गृहेऽहमविच्छेदेनाष्टादश वर्षाण्यवसम्। देव्या राज्ञ्या आज्ञानुसारेण प्रथमतोऽहं मम पितुश्शयनागारस्य द्वारदेशमगच्छम्। द्वारं पिहितं पट्टिततालयन्त्रं चासीत्, अत एव तत्रास्माभिः कियन्तं कालं स्थेयमभूत्। एतावत्येव देवी राज्ञ्यवदत्—"किन्नामालोचयसीदानीम्? येन केनापि वोपायेन तालयन्त्रं भिन्धि, अन्यथा व्यर्थमेव स्यात्कृतं सर्वम्, [illegible] त्वेतद्बुद्ध्यास्यसि, यत कुतश्चिद्दण्डोपलमन्यद्वा लोहदण्डादिकं यत्किञ्चिदानय, गृहाणेमं दर्पणदीपमपि, कुर्वविलम्बेन कार्यम्, चतुर्घण्टाताडनमपि जातम्" इति।

देवी तत्रैवान्धकारेऽवस्थिताऽभूत्, अहं तु दर्पणदीपं गृहीत्वाऽधोऽवातरम्। अहं पूर्वमेव जानामि—गृहस्यास्य पृष्ठभागे किञ्चिदस्तीयो गृहमस्ति, यत्र नानाविधा इष्टकाः गण्डोपलाः, काष्ठखण्डाः, इत्यादिकमस्तीति। तदेव गृहं गत्वा उपयुक्तस्य लोहदण्डस्यान्वेषणमारभे। दैवाच्च पुरातनः कश्चित्कुद्दालो हस्तगतोऽभूत्। तमेव गृहीत्वा द्रुतमेवाहमुपर्यगच्छम्,

अपश्य च देवीं तथैव तिष्ठन्तीम् । दृष्ट्वैव मा तुष्टाऽब्रवीच—"काममनेनाऽस्मदीय कार्यं सम्पन्न भवेत्" इति ।

तेनैव कुद्दालेन ताळयन्त्र भित्त्वाऽन्त प्राविशावावाम् ।

अन्त प्रविष्टमेव मा देवी राज्ञयब्रवीत्—"पिता ते कुत्र कस्या वा मञ्जूषायामावश्यकानि पत्राणि रूप्यादिक वा स्थापयति, अपि जानासि त्वम् ?" इति । अहमवदम्—"वर्षद्वयेऽस्मिन् कुत्र निक्षिपति नहि जानामि, पूर्वं त्वस्यामेवायोमय्या मञ्जूषाया स्थापयन्नासीत् इति ।

ह्रस्वा, दीर्घा, पृथुळा, सूक्ष्मा, एकमुखी, द्विमुखी, इत्येवविधान कुञ्चिकाना गुच्छमेक निष्कास्य तस्या एवायोमय्या मञ्जूषाया निकट गत्वा देव्येवमकथयत्—"पश्याम तावत् या काचिदुद्घाटयति ताळयन्त्र न वेति" इति ।

एवमुक्त्वा च सा कुञ्चिकास्ताळयन्त्रमुखे क्रमेण निक्षिप्य भ्रामयितुमारभत् । दशद्वादशकुञ्चिकानिक्षेपानन्तरमेकया कुञ्चिकया ताळयन्त्रमुद्घाटितमभवत् ।

उद्घाटिते च कवाटेऽन्तर्बहूनि रूप्याणि दीनारान् खण्डपत्राणि चापश्याव । देव्यवदच—'दुष्टाना प्रवृत्तिस्सर्वथापि प्रतिहन्तव्या; यद्यपि मास्त्यस्माकमेभी रूप्यै किमपि फल साधनीयम् किन्तु तव पितुरेभिर्बहुबोधकारस्सभाव्यते । अतश्च रूप्याणीमान्यत्रैव कुत्रचिदज्ञाते स्थले गुप्त स्थापय, यथा कोऽपि न जनीयात् । कथय, कस्तेऽभिप्राय ?' इति ।

अहम्—"यस्तेऽभिप्राय ।

तस्यामयोमय्या ( Almeerah ) मुच्छ्रितमञ्जूषायामधोभागे द्वे आकर्षिण्यौ ( Drawers ) व स्ताताम् । एका मया अन्या च देव्या बलेनाकृष्टाऽभवत् । मदाकृष्टायामाकर्षिण्या बहूनि पत्राण्यन्यस्या च वस्त्रबद्धा काचित्त्रिकाप्रन्थिरभवत् । देवी राज्ञ्यब्रवीत्—"एषामवलोकनस्य नाय मवसरस्स्थान वा, सर्वमिद निजे प्रावरणे बधान । आगच्छ, पश्याव — किमस्त्यस्या मञ्जूषायामिति' इति ।

मञ्जूषाया उद्घाटनेऽधिकः परिश्रमोनाभूत् । द्वित्रकुञ्चिकाभ्रमणानन्तरमेवोद्घाटितामून्मञ्जूषा । अस्यां च नानाविधान्यायुधान्यासन् । तेषु सर्वेषु मध्ये द्वे परमगूढेतामायुधे ।

देव्यवदत्–"मन्ये इतः परं कोऽप्यावश्यक उपयुक्तः पदार्थो न लभ्येत, रात्रिरपि गतप्राया । उच्छ्रितमञ्जूषाया यानि लब्धानि वस्तूनि तेभ्य एवास्मदीयं कार्यं निष्पन्नं भवेद्बहुशः" इति ।

अहम्–"रूप्याणीमानि कुत्रगुप्तं स्थाप्यन्ताम् ? "

देवी–"तदेव खल्वहमप्यालोचयामि । सर्वाणीमानि रूप्याणीदानीं गर्ते स्थापयितुं नास्ति समयः । किम् ! तादृशं किमपि स्थानं त्वं न जानासि, यत्रैतानि गुप्ततया स्थापयितुं शक्यन्ते " ।

चिरकाले-चाहमवदम्–

"अस्ति, मम पठनगारेकिञ्चिताद्दशं स्थानम्, यत्र स्थापितं कोऽप्य न्विष्यापि न प्राप्नुयात् । "

"तर्हि तत्रैव स्थापय" इति नीरजाऽब्रवीत् । यद्वस्तु यत्र यत्र यथा यथा पूर्वं निक्षिप्तमासीत्तद्वस्तु तत्र तत्र तथैवनिक्षिप्य कवाटं पिधाय तालयन्त्रं घट्टयित्वा चावां पठनागारस्य समीपं प्राविव । तत्र च कवाटिकायां तालयन्त्रमदृष्ट्वा महानानन्दोऽभूत् ।

गृहेऽस्मिन् पर्यङ्कः कश्चिद्द्विचित्रः स्थापितोऽभूत्, तेनाच्छादितं च किञ्चित्स्थानमवर्तत, यत्र किञ्चिन्महद्वस्तु सुखेन स्थापयितुं शक्येत, यत्र च पर्यङ्कापसारणमन्तरा कस्यापि दृष्टिर्न पतेत् । तत्रैव स्थाने रूप्याणि नोटपत्राणि चास्थाप्यन्त ।

कार्यमस्मदीयं समाप्तमभूत् । प्रातःकालिकश्चेतिमा चादृश्यत नभसि । देवी राज्ञी सम्भ्रान्ताऽवदत्—"अन्धकार एवावाभ्यां बहिर्निर्गन्तव्यम्, येन मार्गेणागतौ, आगच्छ, तेनैव निर्गच्छावः" इति ।

उभावावां वेगेन तस्यैव गुप्तद्वारस्य निकटमभजाव । यथा पूर्वमुद्घाटितं घट्टितं च तालयन्त्रं तथैव पुनरुद्घाट्य बहिर्निर्गत्य पुनर्घट्ट-

यित्वा च रथ्यायामागतावेवावामस्मदभिमुखमेव पलाय्यागच्छन्तं कञ्चिदद्राक्ष्व । अहन्तु किञ्चिद्भीतोऽभवम्, देवी तु "नास्ति भयस्य किमपि स्थानम्, कश्चिदस्मदीय एव पुरुष इवायं दृश्यते, आगच्छतु समीपं तावत्' इत्यवदत् ।

यथा देव्योक्तं तथैवाभूव । गोविन्दलालो धावन्नुच्छ्वसंश्चामत्याब्रवीत्-"विपत् ! विपत् !! विपत् !!! नास्तीह सल्लपितुमवकाशः, अत्रैव भ्रमिकायां शकटस्तिष्ठति, आगच्छतम्, शकट एव सर्वं कथयामि, आगच्छतम्, द्रुतमागच्छतम्" इति ।

इति संसारचक्रे द्वितीयभागे पञ्चमं चक्रम् ।

—००—

## अथ षष्ठं चक्रम् ।



### ( सेवापत् । )

शैशिरमिदमुषः । हिमेन सर्वा अपि दिशस्समाच्छन्नास्सन्ति, परन्तु पूर्वस्यां दिशि नभसि किञ्चित्किञ्चित्स्फुरति रश्मिमांकुरः । सत्यमहं शक्नोमि प्रतिज्ञातुमन्धकारोऽद्यापि न जगत्परित्यजतीति । शीतेन शरीरं भवति कम्पितम् । चिन्तया तु चित्तं विशेषतश्चांचल्यं मनागपि । एतादृश एव समये वयं शकटमेकमन्धकारावृतमारुह्याम । पुरोभागस्थायामुपवेशिन्यां देवी राज्ञी पश्चात्स्थितायां चाहं गोविन्दलालश्चोपविष्टा अभवाम् । विनैवास्माकं कथनं शाकटिक एकतश्शकटं नयतिस्म । वेगतश्च गन्तुं प्रावर्तत शकटः । मध्ये मध्ये च गोविन्दलालश्शकटगवाक्षाच्छिरो बहिर्निष्कास्य किं कोऽप्यस्माननुसरति' इति पश्यन्नवर्तत । देवी राज्ञी तु मूकेवोपविष्टा महतिचिन्तासागरे निमग्नाऽभवत् । इत्थं सुदूरगमनानन्तरं देवी राज्यब्रवीत्-"गोविन्दलाल ! सुदूरमागतास्स्मो वयम्, यदि च दिनमेतत्सुखेन व्यतीतमभविष्यत्, सा च पत्रग्रन्थिरुपलब्धाऽभविष्यज्जानीहि सर्वं निर्वृ-

वम् । इयद्भ्यो दिवसेभ्योऽनन्तरं चातुरी मम प्रकटाऽभवत् । त्रयाणामप्यस्माकं शिरांसि एकस्यैव करवालस्य लक्ष्यम् । भाग्येन तु जयकाल्या भगिन्युपलब्धा, न चेत्तस्या ग्रन्थे रहस्यं कथं ज्ञातं भवेत्" इति । मयापि नाशक्यत तूष्णीमवस्थातुम्, अवदमेव, "गोविन्दलाल ! केयं ग्रन्थिः, का च सा जयकाल्या भगिनी" इति ।

गोविन्दलालस्तु किञ्चित्कुपित इवावदत्—"किमितीदं सर्वं ज्ञातुं प्रयस्यन्ति भवन्तः ! अद्यापि भवन्तो बाल्य एव वर्तन्ते बाला इव तूष्णीमेव तिष्ठन्तु" इति । एतावत्येव देवी राज्यब्रवीत्—"किमकथयः किमकथयः ! ग्रन्थिविषये किमकथयः ! कथय तावत् ! " अहमपि सस्मितमवदम्—"बालानां तूष्णीमवस्थानमेवोचितम्" । देव्यब्रवीत्—"नैवम् नैवम् किमित्येवं कथयसि ! मन्येऽहं त्वमस्मिन् विषये किमपि जानासीति" । अहमवदम् ' अथ किम्, किञ्चिज्जानामि, न केवलं जानामि, प्रभवामि किञ्चित्साहाय्यमप्याचरितुम् " गोविन्दलालश्चकित इवाब्रवीत्—"कथं नु नामेदम् ! कथन्नु नामेदम् ! " इति ।

देवी राज्ञी गम्भीरमवदत्—" ( गोविन्दलालं दृष्ट्वा ) गोविन्दलाल ! क्षणं तूष्णीं तिष्ठ ( मामवलोक्य ) साधु तर्हि, किं तस्मिन् खण्डगृह एव कोऽप्यर्थस्त्वया ज्ञातोऽभूत् ! "

अहम्—"अथ किम्, तत्रैव किमप्यभूत् "

देवी—"कथ मिव !"

अहम्—"नाहमद्य वक्तुं शक्नोमि, तत्रैव गच्छ, सर्वं पश्य नयनाभ्यामेव "

गोविन्दलालः—"तत्तु स्थानं बहुदूरे वर्तते । ( देवीं दृष्ट्वा ) तर्हि भवत्याः कोऽभिप्रायः ' किमद्यैव तत्र गन्तव्यम् !"

देवी राज्ञी किञ्चिदालोच्यावदत् —' अवश्यमद्यैव गन्तव्यम् । त्वं शकटादवरुह्य पश्य—'अस्मांस्तु कोऽपि नानुसरति ! ' कुन्तस्तु निकटेऽस्ति खलु ! "

"अथ किम्, कुन्तस्तु सर्वदैव मम निकटे वर्तते" इति कथयन् गोविन्दलालश्शकटादवातरत् । शाकटिकाय स्थानं कथयित्वा न जानामि कुत्र गत इति ।

यानि पत्राणि मम प्रावरणे बद्धान्यासन्, यानि वा मम पितुर्गृहादानीतानि, तानि सर्वाण्येतन्मध्य एव देव्या राज्याऽवलोकितान्यभवन्निितीदमधैव सूचयामि ।

पश्चिमयायिनि मार्गे शकटंसवेगं गन्तुं प्रावर्तत । अलङ्कुर्वति च नभोमध्यं सहस्रमानौ तदेव खण्डगृहं प्रापत्, यस्यैव निकटे कस्यचिद्वृक्षस्याधो भूगर्ते काचिच्चर्ममयी पोटलिका मया निहिताऽऽसीत् । प्राप्तमात्र एव तत्स्थानं शकटे अहं शकटादवातरम् । पोटलिकामानीयादां च देव्यै-राज्ञ्यै । देवी त्वानन्दगद्गदकण्ठा प्राह—"भगवानियद्भ्यो दिवसेभ्योऽनन्तरं मामुन्मीलय नयनेऽपश्यत् । हे जगदीश्वर ! पाहि माम् । यथा च नौका तीरं प्राप्यापिजले निमज्जेत् न तथा कुर्याः । ब्रजेन्द्रप्रभो ! पोटलिकामिमां ददता भवता यादृश उपकारोऽक्रियत मम न तस्य प्रत्युपकारं कर्तुं शक्नोम्यहम् । अबलाहम्, नेतः किञ्चिद्वक्तुमपि जानामि, केवलं परस्सहस्रान्प्रणामान्करोमि" इति ।

अहं त्ववदम्—"हा धिक् ! हा धिक् ! ! किमिदम् ? मादृशस्य नीचस्य चरणयोः किमिति भवती पतति ? अहमस्मि भवत्या दासानुदासः। अत्यन्तं क्षुद्रः, कीटादप्यधमोऽस्मि । एतादृशं मां किमिति प्रणमति भवती । का मे शक्तिः ? यया भवत्या उपकुर्याम् ? भवत्याः कृपया केवलं मे शुभं भवेत् । भवती–एतादृशस्य दीनस्य निस्वस्य पुरतः कुतश्शिरो नमयति ? दैवादियं पोटलिका मम हस्त गताऽभूत्, मया च भवत्यै समर्पिता; एतावतैव को वा महानुपकारः कृतस्स्यात् । इतोऽपि मा मां लज्जितं करोतु भवती" इति । इत्थं कथयत्येव मयि कण्ठो मे गद्गदतामभजत, नेत्रे च प्लाविते अभूतामश्रुभिः, मनश्च मे पुळकितमिवाभवत्, अतश्च किमपि ततो वक्तुं नाशकम् ।

देवी तु किमप्यनुक्त्वा पोटलिकायां दृष्टिं न्यधात् । प्रावर्तत च तदुद्घाटने । प्रवृत्तिमात्रेण किं वा भवतु ? सा किल तथा दृढं बद्धाऽऽसीत्, येन सा चिरं प्रयस्यापि ग्रन्थिमुन्मोचयितुं नाशकत् । किं तर्हीतो देव्याः कार्यं प्रतिरुद्धमेव विष्ठेत् । नहि नहि, इतिरेव तेनायुधेन यन्मम पितृगृहादानीतं चर्मावरणं छिन्नमभूत् । छिन्न एव चर्मण्यन्तर्गतं रहस्यं प्रकाशतामभजत । देवी राज्ञी त्वानन्देनोच्चैरुद्घोषितवत्यपि । ततश्चावधानेन पोटलिकागतान्पदार्थानवलोकितुमारभत । एतावत्येव महान् कोलाहलोऽश्रूयत, येन वनं तत्कृत्स्नमेव प्रतिध्वनितमभूत् । क्षणाच्च जयपालोऽप्युच्चरतोऽदृश्यत, यः पलायनायास्मन् चेष्टया ज्ञापयन्नासीत् ।

"अन्ततो रहस्यं प्रकटमभूदेव" इति कथयन्त्येव देवी राज्यन्तर्हिताऽभवत् ।

चतुर्दिक्षु च सम्यगुन्मील्य नयने पश्यतापि मया न कोऽप्यवालोक्यत । केवलमहमेक एव तत्रातिष्ठम् ।

किमपि हृदयं नावातरत्, देवी राज्ञी कुत्र गता स्यात् ? इत्यापालोचयत्येव मयि कतिपये बद्धायुधास्समागत्य पुरुषा बलान्मां गृहीत्वैकतोऽनयन् । हा हन्त ! सैव पुनरापत् ! !

इति ससारचक्रे द्वितीयभागे षष्ठं चक्रम् ।

— ०० —

## अथ सप्तमं चक्रम् ।

### ( द्वीपान्तरगमनम् । )

किमयं स्वप्नः, उत भूतावेशः नद्या इव कलकलध्वनिः श्रूयते ! अरित्राण्यपि चलन्ति सचपाटकारम् । नौकायाः कम्पनेन कृत्स्नं शरीरं कम्पते । हा धिक् ! हा धिक् !! कुत्राहमस्मि । नेत्रे त्वद्यापि नोन्मीलतः, तर्हि किमयं सत्यमेव स्वप्नः ? अथ मायामोहितोऽस्मि ? विभ्यता विभ्यता महता कष्टेन नयने समुन्मीलयता मया स एव कालान्तकतुल्यो मामेव

निरीक्षमाणो मम पुरत एवोपविष्टश्श्वशुरो मेऽवालोक्यत । दृष्टमात्र एव तस्मिन्प्राणा ममोदचलन् । कियतः कालादनन्तरमश्रुपूर्णनयनो बद्धाजलिरहं मन्दमपृच्छम्—"कथय मयि कृपया कुत्र मां नयसीति" इति ।

स तु नराधमो विकटहासं कृत्वाऽवदत्—"द्रक्ष्याम्यहमितः कस्त्वां रक्षतीति ! पुनः पुनर्मय्येव चातुर्यं प्रकटयसि ! किं न जानासि शिरस्ते मृत्युरारूढ इति" । अहं तु मन्दमवदम्—"अथ किम्, जानामि, यस्मिन्दिने श्रीमताऽहं जामातृपदमारोपितः तदैवाज्ञासिषं मृत्युस्समीप एव वर्तत इति । इतोऽप्यहं किमपि न कथयिष्यामि, यदि त्वम्—कुत्र मां नयसि कथयेरिदम्, भवेन्महती दया कृता !" इति ।

रायः—"कुत्राहं नयामि, किं त्वं न जानासि ! नयामि त्वामंत कस्य नगरम् ! किमवगतमिदानीम् ? कृतघ्न, वञ्चक, वैधवेय ! द्रक्ष्यामि कस्त्वामुन्मोचयतीति ः आगच्छ वत्स ! द्वीपान्तरमेव पर्यट ! " इति ।

किमेतत् ! किमहं द्वीपान्तरं प्रतिगच्छामि ? यद्येवमापदोऽस्या मोचनं दुष्करमेव ! हा धिक् ! हा धिक् ! ! देव्या राद्यास्सर्वं कृत्यं प्रकाशतामभजत्किम् ! सापि किमापद्ग्रस्ता ? हन्त ! पूर्णप्रायं कार्यं नष्टम्!। हा धिक् ! हा धिक् ! ! किमितोऽहं कुर्याम् ? भगवंस्त्वमेवाद्य पालयिता !

पुनर्यदा नेत्रेऽहमुदमीलयं तदा पुरतो रायं नापश्यम् । पुनश्चतुर्दिशमवलोकयता मयाऽज्ञायत, कुत्रचिदल्पीयस्यन्तर्गृहेऽहं वर्त इति । अन्तर्गृहे तस्मिन्नेकोऽपि गवाक्षो नाभूत् । द्वारमपि पिहितकवाटमभूत् । ततश्चावागच्छम "नौका वेगेन गच्छती" ति । अहमप्युपविष्टः, कदाचिद्भगवन्तं ध्यायन्, कदाचिच्चागमिष्यन्तीं विपदमालोचयन्नवर्तिषि । एतावतैवावागच्छम् 'रायः कवाटरन्ध्रेण मां निरीक्षत' इति । रायेण सह कश्चिदन्योऽप्यभूत्, यस्य किल मुखं महाभयङ्करमवर्तत । तावुभौ परस्परं सल्पन्तौ मां प्रति संकेतयन्तौ चावर्तिषाताम् । तयोर्मुखयोः कदाचिद्धासः कदाचित्क्रोधश्च प्राचीकशत् । नाशकमहं तौ ततोऽप्यवलोकयितुम्, निमीलितनयनो न्यविशम् ।

कुत्र गच्छामि, कुत्रेयं नौका निरुद्धगतिर्भवेत्, न जानाम्यहम् । कीदृशीयं नौका ? तदपि न जाने । अवहितचित्तेनोच्छ्रितकर्णेन च मया बहिः कोलाहलो महानश्रूयत । चडचडात्कारो मडमडायितंचाश्रूयत । अन्वमीयत च नौका तिर्यक् विभ्रमतीति । कियत्कालानन्तरं नौका प्रतिषिद्धगतिरभूत् । ततस्सहोधाभ्यां मनुष्याभ्यां रायो मदीयेऽन्तर्गृहे प्राविशत् । मम हस्तपादं दृढमबद्धयत, अहं तु किमपि नावदम् । रायस्योक्तिमनुसरन्तौ तौ मां गृहीत्वाऽचलताम् । किं तर्हि सत्यमेवाहं द्वीपान्तरं नीतोऽस्मि?

इति संसारचक्रे द्वितीयभागे सप्तमं चक्रम् ।

---

## अथ अष्टमं चक्रम् ।

### ( कानने—कल्पाणम् )

पाठकाः ! किं शक्नुवन्ति भवन्तः कथयितुम् 'कुत्राहमस्म्यद्ये' ति ? ममेदं क्षीणं शरीरं कुत्रान्धकूपे पतितमस्ति ? संसारचक्रस्य भ्रमणिकायां पतितोऽहमेषु दिवसेषु कुत्रास्मि ? ननु कथयत पश्यामः । दिवसेष्वेष्वहं पुनरपि मम श्वशुरस्य कारागृहे वर्ते । महती रक्षणव्यवस्था, न सम्भाव्यते पिपीलिकाया अपि मत्समीपोपसर्पणम् ।

हस्तपादं तु दृढं निबद्धमासीदेव खलु, नेत्रे अपि पट्टेन बद्धे अभूताम्, यदाहमत्र प्रापितोऽभूवम् । महता कष्टेन रात्रिर्व्यतीता । पानभोजनयोरपि कष्टैव व्यवस्था । प्रस्तायमस्य गृहस्य द्वारे मम हस्तादिबन्धनमुदमुच्यत । ततश्चास्मिन् गृहे वासाय निर्बद्धोऽहमभवम् । रात्रौ कश्चिदागत्य मामभोजयत्, येन सह मम कोऽपि सल्लापो नाभूत । यत प्रभृत्यात्रागतोऽस्मि ततः प्रभृत्येकैका घटिका एकैकं युगमनुकरोति । अस्तु, यथा कथञ्चिद्यापयामि दिवसम् । एतावत्येव समये कस्यचित्क्लासमानस्य रुदत इव च शब्दोऽश्रूयत । यदाहमत्रागतोऽस्मि तदाप्येतादृश एव

कश्चिच्छब्दः कर्णेऽपतत् । पुनरिदानीमपि स एव शब्दश्श्रुतः । मयावहितेनोच्छ्रितकर्णेनापि ततः किमपि नाश्रूयत । न चाज्ञायत कुतोऽय शब्दस्समायातीति । कतिपयक्षणानन्तरं पुनस्तादृश एव रोदनशब्दः कर्णमगाहत । सम्यक्परिशीलयता च पश्चिमतस्समागच्छन्निवार्यं शब्दोऽज्ञायत, यथा किल कश्चित्कथयतीव—"हे भगवन् ! इतोऽपि कियन्ति दिनानि" इति । मया तु निरचीयत—"स्यादयमप्यहमिव कश्चिद्दुर्भगः" इति ।

क्रमाच्च दिनमपि यातुमारभत, यो रात्रौ भोजनमानीतवान् स एवाद्यापि भोजनहस्तस्समागतः । मया बद्धाञ्जलिना सविनयं बहवो वृत्तान्ताः पृष्टाः, किन्तु सर्वेऽपि प्रश्ना व्यर्था एवाभवन् । तस्य भर्त्सनेनाहं यत्किञ्चिदभक्षयम् । अनन्तरं च स द्वारं पिदधन्निरगात् । क्षणाच्च समीपस्थायाः कस्याश्चित्कवाटिकाया इवोद्घाट्यमानायाश्शब्दोऽश्रूयत । अहं च पश्चिमपार्श्वस्थायां भित्तौ कर्णौ निक्षिप्य श्रोतुमारभे । तत्रैव कश्चिद्गद्गदकण्ठः महत्या घृणया सहाकथयत्—"रे दुष्टाः ! मा कियच्चिरं पीडयिष्यथ ! " इति । अन्येन सभर्त्सनमुक्तम्—"यावत्त्वमस्माकं वचनं नाङ्गीकरिष्यसि" इति । पुनस्स दुःखी रुदन्नवदत्—"हन्त, नेतः शक्यते सोढुम्, किमिति यूयमेकदैव प्राणान् गृहीत्वा कष्टादस्मान्नोन्मोचयथ ? " इति । ततः परन्तु कोऽपि शब्दो नाश्रूयत । द्वारं च सझणात्कारं पिहितकवाटमभूत् । ततश्च मम निश्चयोऽभूत्—"नूनं पार्श्वस्थे गृहे कोऽपि मन्दभाग्यो वृद्धोऽहमिव बन्दीकृतोऽस्ति" इति । परन्तु, कस्माद्बन्दीकृतः, कथं चास्ते, तत्कथमहं कथयामि ।

साधु,भवतु यथा तथा वेदम्,मम तु तस्य बन्दिनो दर्शनेच्छा महती समजायत । परन्तु को वोपायस्स्यात् । यदि देव्या राज्या दर्शनमद्य स्यात्तदा तु नेदमसाध्यं नाम किञ्चित् । बहुधा मम मनस्यस्फुरत्स्वयमेवैनमाह्वयेयमिति, परन्तु भयेन नैवं कर्तुमवसरोऽदीयत । इत्थमेव चिन्तयतो मे दुःखेनैकः सप्ताहो व्यत्येतिस्म । कापि नवीना घटना नाभूत् ।

एकदा तु मध्याह्ने पार्श्वगृहात्, यत्र सोऽन्यो बन्द्यासीत्, केनापि मन्देन स्वरेण, यस्तस्य दुर्बलताप्रकाशकोऽभूत्, अहमाहूतोऽभूवम् । मयापि झटिति प्रत्युत्तरमदीयत ।

ततः पुनरपि तेनापृच्छयत—"कोऽसि त्वमहमिव दुर्भगः ? कथय मनो मम विह्वलतामेति । अहो: कालात्कस्यापि साधोः पुरुषस्य वागेव कर्णपथं नावतरति" इति । अहं चावदम्—"मामपि कश्चिद्दुर्भगमेव जानीहि, कोऽहमस्मीति त्वहमेव न जानामि । को भवान्, कियद्भ्यो दिवसेभ्योऽत्र वसति ? " इति । तेनैवमुत्तरमदीयत —"कियन्ति दिनानीति कथ्यताम् । बहुभ्यो दिवसेभ्योऽत्रास्मि । किं त्वमधैवागतोऽसि ? " इति। अहमवदम्—"नहि, सप्ताहाद्वसामि " इति । पुनस्सोऽब्रवीत्—"कथं त्वमेषां दुष्टानां हस्तं गतोऽसि ?" इति । अकथयमहम्–वर्षद्वयादहमेतेषां हस्तं गतोऽस्मि । अतिमहत्कष्टमनुभूतम् । परन्तु कुत एते मां पीडयन्तीति न ज्ञातम्" इति । एतावत्येव सोऽवदत्—"अलम्, एतावतैवालमद्य । अनभिज्ञोऽसि त्वमेतेषां बन्धनाजालस्य । अहन्तु जानामि सर्वम्, यावदहं किमपि न वदामि तावत्त्वयापि तूष्णीमेव स्थेयम् " इति ।

इत्थमेव मम तस्य च मध्ये मध्ये सल्लापोऽभवन्नासीत् । मया को भवानिति पृष्टश्च स वृद्धो रुयात्, न तु किमपि कथयेत् । उभावपि परस्परमपरिचितौ, उभावपि च परस्परमेकत्र सङ्गन्तुमिच्छन्तावास्व, अथापि किं वा भवतु ? भित्तिः खलु मध्ये वर्तते काचित् ।

समयोऽयं मध्याह्नस्य । एकाकोऽहं भित्तिमेवावलोकयामि, यतोऽद्य प्रातरारभ्य तेन पार्श्वगृहवर्तिना बन्दिना सह नासीत्कोऽपि सल्लापः । अहं तु प्रथमं किमपि प्रष्टुमयोग्योऽस्म्येव हि, यतोऽहं तेन तथा करणात्प्रतिषिद्धः। अद्य यावद्भोजनमपि नागतम्, अतश्च विशेषतोऽहं विकृतचित्तो भवामि । एतावत्येव समये सझणात्कारं कवाटिकोद्घाटिताऽभवत् । भोजनं च समागतम् । यः प्रतिदिनं भोजनमानयति स एवाद्याप्यानयत् । अतएव कस्याप्यर्थस्य प्रश्नोऽरण्यरोदनतुल्य इति किमप्यनुक्त्वैवाहं भोजनायोपाविशम् ।

यावदहमन्नग्रहणाय हस्तं प्रसारयामि तावदन्नस्याधस्ताल्लिखितं पत्रखण्ड-मेकमपश्यम् । पुरुषस्य तस्य दृष्टिं वञ्चयन्नहं तत्पत्रखण्डं झटित्यादाय-गोपयम् । शीघ्रमेव पञ्चपान् कवळान् भुक्त्वा हस्तपादमुखमक्षाळयम् । सोऽपि पुरुषो यथापूर्वं कवाटिकया द्वारं पिदधानो निरगात् ।

पत्रं द्रष्टवत एव मे महान् सन्देहोऽभूत्—"केयमाश्चर्यमयी घटना! अन्नस्याधस्ताद्गुप्तं निक्षिप्य केन पत्रिका प्रहिता ! ' इति । अल्पशस्समा-यातां सौरकिरणानामालोके पत्रं तदहमपठम् । तत्रैवं लिखितमवर्तत—

"महता प्रयत्नेन कष्टेन तव वृत्तान्तोऽधिगतः । स्मर परमात्मनम्, स एवाद्यापि त्वां रक्षिष्यति ! न च भेतव्यम्, शीघ्रमेवाहं त्वया सङ्ग-मिष्ये ।

सैव त्वदीया धीरजा । "

आनन्देन महताऽहमुच्छूनतामापन्नः कृतूविाभवम् । देवि राज्ञि ! धन्यासि, धन्यस्ते मदीयत्वाभिमानः ! दुर्गमेऽस्मिन् स्थानेऽपि त्वया दया प्रकाश्यते । मदीयस्य दुःखसागरस्य त्वमेव नाविकोऽसि । आगच्छ झटिति दर्शनं देहि, त्वय्येव विश्वासः । त्वयैव निमित्तेनाहमस्मि सुखी । त्वच्चिन्ति-तेनैव च मे कामनेऽपि कल्याणम् ।

इति संसारचक्रे द्वितीयभागे अष्टमं चक्रम् ।

—००—

## अथ नवमं चक्रम् ।

( भयङ्करी मूर्तिः । )

त्रयो मासा व्यत्यायन्, देवी राज्ञी तु नागमत् । प्रातरारभ्यासायम्, सायमारभ्याप्रातश्च देव्या राज्ञ्या आगमनं प्रतीक्षे, परन्तु तस्या वार्तापि न श्रूयते । स च पार्श्वगृहवर्ती सहाय आहूतोऽपि नोत्तरं ददाति । जानामि त्वहं निश्चितमेव स पार्श्वगृह एव वर्तत इति, यतस्सायं प्रातश्च भोजनवे-ळायां कवाटिकोद्घाटनशब्दः श्रूयतेऽद्यापि ।

अथ तु विचित्रैव रीतिर्दृश्यते । प्रातरारभ्य पार्श्वस्थापवरकस्य कवाटिका तदातदोद्घाटिता भवति, यत्र स मम सहायभूतो परो बन्दी भूत् । जनानां च विशेषतस्समागच्छतां गच्छतां च पदशब्दः, परस्परं सल्लपतां च फुसफुसात्कारस्सर्वमेव गृहमिदं शब्दापयति । नियतस्समयो-ऽतीतः, तथाप्यद्यावधि भोजनं नागतम् । न जानाम्यस्य सर्वस्य किं कार-णमिति ।

कतिपयक्षणानन्तरं सर्वत्र निश्शब्दताऽभवत् । शान्तेरिव राज्य-मदृश्यत । द्वारं चैकान्ततः पिहितमभवत्, अचिन्तितमेव मदावासभूतस्या-पवरकस्य कवाटिकोद्घाटिताऽभवत् । भोजनहस्तश्च कश्चिददृश्यतायन् । इतः पूर्वं प्रतिदिनं य आगच्छन्नवर्तत, नायं सः । अयं तु कश्चिदन्य एव । अन्धकारेण प्रथमतस्तं प्रत्यभिज्ञातुं नाशकम्, समीपमागतं तु 'गोविन्द-लालोऽयमिति प्रत्यभ्यजासिषम् । आनन्देनामन्देन भरितान्तरश्च "किं गोविन्दलाल ! इयद्भ्यो दिनेभ्योऽनन्तरमयं दुर्भगः स्मृतिमारूढः" इत्युच्चै-रवदमहम् ।

गोविन्दलालस्त्वविलम्बितमेवावदत्—"तूष्णीं तिष्ठत, मोच्चैरुद्-घोषयत, झटिति भोजनं समापयत, ततःपरमालापः क्रियेत" इति । अहं तु—"भोजनं पश्चाद्भवतु, प्रथमं तु देवी राज्ञी कुत्र कथं वा तिष्ठति, कथ-य" इत्यवदम् । गोविन्दलालोऽब्रवीत्—"साध्व्येव वर्तते, न शक्योऽस्माभिरत्र चिरं विलम्बितुम्, झटिति भुज्यतां यावदभिलषितम् ।" इति ।

अन्ततो गोविन्दलालस्यैव वचनमनुसर्तव्यमभवत् । भुक्तं मया यत्किञ्चित् । ततो गोविन्दलालः—"अद्य रात्रौ निशीथे रूपान्तरमाश्रिता देवी राज्ञी भवतां निकटमागमिष्यति, यदि प्रयत्नेन, अस्मिन्नेव दिने भवन्तो मोचिता भवेयुः । रात्रौ योऽयमहमस्तत्रागच्छेयं तेन सहायतादिकं किमप्यावश्यकम् । यथा नाविर्भवति तथा रक्षणीयं ध्यानमस्तु । मा नाम इतः पूर्णमाय इत्य चाञ्चल्येन विनाशयन्तु" इति कथयन्नेव द्वारं पिधायागात् ।

देव्या राज्ञ्या आगमनवृत्तान्तं श्रुतवतो मे सर्वाणि दुःखानि दूरं पलायाम्बभूवुः । इयमेवोत्कण्ठा समजायत—'कदा पुनरहं देव्या राज्ञ्या मुखचन्द्रमसं दृष्ट्वा चित्तचकोरमाप्याययेयम्' इति । एकैका घटिका युगमन्वकरोत् न तिष्ठतो नोपविशतो वा मे निर्वृतिरभवत् । कथं कथञ्चिद्दिनमत्यगात् । सायन्तनश्च समयस्समुपागात् ।

अस्ताऽचलशिखरचुम्बिनि च भगवति गभस्तिमालिनि मदीयेऽपवरकेऽन्धतमसेन निजमप्रतिहतं शासनमस्थाप्यत । क्रमशो रात्रिरत्येतुमुपाक्रामत् । नियते काले समागतमन्नं च किञ्चिदप्यविकुर्वाणोऽभ्यवाहरम् । अथ पुनरपि देव्या राज्ञ्या आगमनं प्रतीक्षमाणोऽतिष्ठम् । लोचने मे द्वाराभिमुखे अभवताम् । अन्तर्हृदय एव देव्या रूपसौन्दर्यादिचिन्तनं प्रावर्तत । हठात्कवाटिकोद्घाटिताऽभवत् । देवी राज्ञी च बालकभूमिकाधारिणी पुरतो समागत्यातिष्ठत् । आनन्दतुन्दिलश्चाहं कृत्याकृत्यविमूढ उत्प्लुत्य देवीं कण्ठे गृहीतुं प्रावृतम् । सा तु द्वित्राणि पदान्यपसृता मामेव पश्यन्त्यतिष्ठत् । अहमपि लज्जितस्तत्रैव पदात्पदमविचलन्नतिष्ठम् । कियच्चिरं स्थित्वा च देवी राज्ञ्यब्रवीत्—"कथय, कथमसि ?" इति ।

"यथाहमस्मि तथा किं त्वं न पश्यसि ? केवलं तवैव दर्शनाशयाद्ययावदहं जीवामि, न चेत्तदैवाहं मृतोऽभविष्यम् ।"

इति मम वचनं श्रुत्वा देवी राज्ञी मन्दस्मिताञ्चितमुखी बभूव । अवदच्चैवम्—"साधु, उपन्यासस्ते विरमतु, मामेवानुसरन्निश्शब्दमागच्छ" इति । अहमपि तथैव तामनु प्राचलम् । पश्चिमदिक्स्थितेऽपवरके यन्ममापवरकस्य पार्श्व एवासीत्प्राविशावावाम् ।

तत्र गतेन च यन्मया दृष्टं तेन हृदयमेकदैव विदीर्णमिवाभवत् । देव्या राज्ञ्या निजकञ्चुककोष्ठकान्निष्कास्य प्रज्वालितस्य मायादीपस्यालोकेऽहं मरणपर्यङ्के शयानं उत्तरशिरसं षष्टिवर्षवयस्कं कञ्चन वृद्धमपश्यम् । सर्वतश्च तस्य तान्येव वस्तूनि पतितान्यासन्यानि प्रायो निर्धनानां रोगिणां पार्श्वेष्ववलोक्यन्ते । देवी राज्ञी मां तस्य शिरस्स्थाने स्थापयित्वा तस्य

कर्णेऽवादीदुच्चैस्स्वरेणैवम्—"उन्मीलयत लोचने ! पश्यत पुरतो भवत कस्तिष्ठतीति" इति ।

इत्थमुक्तोऽपि सोऽचेतन एवातिष्ठत् । अहं तुपृच्छम् "किमहमेभिरेव सह तस्मादन्तर्गृहात्सञ्चप्यासम् ? देवि राज्ञि ! क एते ?" इति । देवी त्वत्रवीत्—"क एत इति तु त एव वक्ष्यन्ति, नितरामशक्ता एते वर्तन्ते, तिष्ठ, यावदहमेतेषा मुखे कोष्णं दुग्धं दास्यामि" इति । देवी राज्ञी महतावधानेन द्वित्राः कणिका दुग्धस्य पर्यङ्कस्याधस्तादादाय तस्य मुखेऽदात् । तेन तस्य वृद्धस्य चेतनेव समजायत । नेत्रे समुन्मील्य मन्दमवदत्—"कस्कोत्र" इति ।

देवी राज्ञी किञ्चिदुच्चैस्स्वरेण प्राह—"अहमस्मि । कथयत, कथमस्ति शरीरस्य स्थितिः" इति ।

रोगी— ( किञ्चिद्विरूतवदन ) "कीदृशी स्थितिरिति कथयेयम् ! ऊर्ध्वमुच्छ्वसिमि ।"

देवी—"य भवन्तो द्रष्टुमच्छन्, सोऽस्ति, तिष्ठति ।"

रोगी—कुत्र ? मम समीपमानय"

देव्या राज्ञ्या आज्ञयाहं तस्य रोगिणः पार्श्वे समुपाविशम् । सविनयमवदं च—"किमद्य किञ्चिदुत्स्थमिव शरीरमनुभवन्ति ?" इति ।

अनेन मम वचनेन रोगिणस्तस्य मुखमण्डले किञ्चिदिव हासोऽदृश्यत । मन्दम्मन्दमवदच्च सः—"निकटमागच्छ, श्रोत्रयोस्समीपे वदनमानय । विशेषतो वक्तुं नास्ति मे शक्तिः । कथय वत्स, किन्नामासि?" इति ।

अहमवदम्—"गजेन्द्रभूषणवन्द्योपाध्यायो नामाहम् ।"

रोगी—"पितुस्ते किं नाम ?"

अहम्—"हरिहरवन्द्योपाध्यायाभिधानास्ते ।"

रोगी—"देव्या राज्ञ्या मुखाच्छ्रुतं मया विचित्रं ते जीवनचरित्रमिति । तन्ममापि किञ्चिद्रुथय नाम"

ततोऽहमात्मनो वृत्तान्तं कथयितुमारभे । यथा यथाऽहमात्मवृत्तान्तमवर्णयं तथा तथा तस्य विविधो मुखवर्णोऽजायत । सावधानेन चेतसा स मम वृत्तान्तानशृणोत् ।

कतिपयक्षणांस्तूष्णीमवस्थाय ततोऽतिमन्देन स्वरेण रोगी माह "हा धिक् ! हा धिक् !! महदिदं कष्टम् । नास्तीतो विलम्बः, मम मुखसमीपे कर्णं स्थापय !" इति । क्रमशस्ततोऽपि मन्दोऽभूत्स्वरः । अन्ततश्चैकान्ततो विरतोऽभवच्छब्दः ।

क्षणमप्यविलम्बयन्नहं द्वित्राःकम्बिका दुग्धस्यादां तन्मुखे । तेन स पुनरपि वक्तुमारभत । अकथयच्चैवम्—"अस्योपधानस्याधस्तादस्ति काचित्कुञ्चिका, तां त्वं गृहाण । गृहस्यास्य पश्चिमभागे कोणे भूमौ काचिदल्पीयसी मञ्जूषा निहिता वर्तते, तां निष्कास्यानया कुञ्चिकया तस्यास्तालयन्त्रमुद्घाटनीयम् । तस्यां यदस्ति सर्वं तत्तवैव । सावधानं कार्यं कुरु ! हा राम ! प्राणा गच्छन्ति–क्ष–म–स्व–मां–हा कष्टम्–भगवः...." क्रमादृव्यलीयत शब्दः । पश्यत्येव मयि सोऽसारमिमं संसारं परित्यज्य दीर्घयात्रां प्रातिष्ठत । घटनामिमां दृष्ट्वा नाहं संभ्रान्त इवाभवम् । किंकर्तव्यविमूढश्च कतिपयक्षणानतिष्ठम् । कियतः कालादनन्तरमुपधानस्याधस्ताद्धस्तं प्रसारयता च मया कुञ्चिकाऽलभ्यत । आनन्दमयविषादैस्तदा विचित्रा दशा मे समभूत् ।

कुञ्चिकां गृहीत्वा पश्चिमतः कोणमगच्छम् । कुद्दालेन तत्रैव पतितलब्धेन भूमिमखनम् । जानुदघ्न खन्यमानायामेव भूमौ काचिदयोमयी मञ्जूषाऽलभ्यत । कुञ्चिकयोद्घाटिते तालयन्त्रे तत्र पत्रग्रन्थिरेका स्वर्णसम्पुटमेकं चादृश्यत । तदिदं वस्तुद्वयं गृहीत्वा मञ्जूषा च यथापूर्वं तालयन्त्रघट्टितां कृत्वा तत्रैव भूगर्ते निधाय मृत्तिकयाऽपूरय गर्तम्, समं चाकरवम् ।

सर्वमिदं कार्यजातं निर्वर्त्य द्वाराभिमुखं गतश्चाहं देवीं राज्ञीं नाप-श्यम् । न जानामि च सा कदा कथमन्तर्हितेति । किमद्य करोमि ? कुत्र गच्छेयम् ? इत्याद्यालोचयत्येव मयि काचन भयानकमूर्तिरदृश्यत ।

इति संसारचक्रे द्वितीयभागे नवमं चक्रम् ॥

—००—

## अथ दशमं चक्रम् ।

(कुत्राद्य गच्छेयम् ?)

पाठकाः ! केयं भयानकमूर्तिः ? किं प्रत्यभिजानन्ति भवन्तः ? स्मरत एव तां विदीर्यत इव मे हृदयम् । मास्म नाम भवन्तोऽपि श्रुत्वा बिभ्युः । यद्यस्ति धैर्यं शृणुत । सैवेयं मङ्गलानाम्नी जरठा, या किल निजे-नाकारेण धूमावतीं देवीमपि द्वेपयति । यस्याश्च निकटेऽहं दशमासविचिह्नि-तत्कारागृहान्निर्गतो वनलतावेषप्रतिच्छन्नः कियन्तश्चिरकालमतिष्ठम् । सा च मम श्वशुरस्य प्रिया जननी ।

इयं किल जरठा मां दृष्ट्वैव निकटे हसन्ती निगलनेच्छयेव मुखं व्यादाय धावत् । अस्या भयानकेन हासेन कृत्स्नं तद्गृहं विचलितमिव ।

मम तु चेतनैव व्यलुप्यत । भयेन तत्रैव प्रस्तरमयी मूर्तिरिव न चलन्नतिष्ठम् । सा च धूर्ताऽऽगत्य मां विकर्षन्ती निनाय । पार्श्वेऽपि तस्याः कुम्भकर्णस्येव बलमवर्तत ।

मङ्गलाजरठा मामित्थं विकर्षन्ती किञ्चिदन्धतमसावृते जीर्णे गृहे-ऽनयत् । सम्भाषणमवदच्च "किमरे धूर्त ! त्वं भैरवनाथकुलिनस्सुतोऽसि ! किं तव नाम यतन्तेति । ममैव निकटे त्वमियच्चलं करोषि ? ममैव सन्नि-धाविय धृष्टता ! त्वादृशानां बहूनामहमाखेटयितास्मि । त्वं ममैव दृष्टे-र्भूतेः प्रवेष्टुमागतोऽसि ! पश्याद्य कस्त्वां रक्षतीति अद्यैव दर्शयामि ते फलमस्य" इति ।

एतावदुक्त्वा च सा मां वेगेनापातयत् । सर्वाङ्गेषु महदभ्याहतोऽभवम्, महती च पीडा सर्वाङ्गीणा समभवत् । क्रुद्धोऽहं यावदुत्तिष्ठामि तावदेव तया पृष्ठेऽभिहतो न्यपतं भूमौ । ततःक्रोधेनान्धोऽहमुत्थाय सावधानो नासिकायां मुष्टिना प्राहरन्ताम् । तेन च प्रहारेण सा सम्भ्रान्तेव न्यपतद्भूमौ । एतावत्येव समये कुत्रचित्कोणे मन्दं प्रज्वलन् दीपोऽपि निर्वाणमभजत् । ममापि पलायनस्य समुचितस्समयो लभ्यत ।

सातु जरठा पतितेव रोदितुमाक्रन्दितुमप्यारभत । बहिरपि महान् कोलाहलस्समजायत । अहं च क्षणमपि तत्राविलम्बमानस्ततः प्रातिष्ठे । महदन्धं तमः, नच जानामि मार्गम्, सर्वतश्चेष्टकानां शिलानां च खण्डैरास्तृता भूमिः, ततश्चैकैकस्य पदस्य निधानं महाकष्टसाध्यमभवत् । बहुषु स्थलेषु पाषाणखण्डैः स्खलत्पदो न्यपतं च ।

इत्थमेव निपतन्नुत्पतन् धावन्नुच्छ्वसंश्च गुप्तद्वारसमीपं प्रापम् । किञ्चिच्छान्तमिव तदा मे मनः । अवहितेन चेतसा उच्छ्रितेन च कर्णेन जरठायाः केनचित्सहलपन्त्यास्तस्मै निजं वृत्तान्तं कथयन्त्या इव च शब्दोऽश्रूयत । ततश्च 'नेयं जरठैकाकिनी, समागता इवास्यास्सहचराः, अतश्च द्रुतमितः पलायनमेव समुचितम्' इति निरचिनवम् । ततश्च 'कुत्र गच्छेयम् ? सर्वतोऽपि हि परिभ्रमन्ति पश्यतोहराः' इत्याद्यालोचयितुमारभे ।

अन्ततश्च 'यतो मे पादौ प्रसरिष्यतस्ततो गमिष्यामि, सर्वतोऽपि परमपुरुष एव पालयिता' इति निश्चित्य पश्चिमाभिमुखं गन्तुं प्रावर्तिषि । वेगेन धावन्नपि मध्ये-मध्ये परिवृत्तमुखः 'किं कोऽपि मामनुसरति ?' इति पश्यन्नेवागाम् । पर्णानामपि वातेन चलतां मर्मरमाकर्ण्य भीतोऽहमभवम् ।

इत्थं पलायनपरोऽहं महदेव परिश्रान्तोऽभवम् । यदा चैकमपि पदं निधातुं नाभवं समर्थस्तदानिच्छन्नपि पार्श्ववर्तिनः कस्यचिद्वटस्याध उपाविशम् ।

न जानामि घण्टाद्वयं यावत्पलाय्य कियद्दूरमागतोऽहमिति । तत्रोपविष्ट एव च प्रवहता शीतशीतेन पवनेन नातिदूर एव जलाशयस्य

कस्यचिद्द्रुमे अन्वमिनवम् । उत्थितश्चाहं यत एव समायातोऽस्मि मारुत-स्तदभिमुखमेव प्रावर्तिषि गन्तुम् । अनतिदूरगत एव चापश्यं किञ्चिन्महत्-सरः । प्रक्षालितहस्तपादमुखश्च द्वित्रानञ्जलीनपिबं स्वच्छस्वादुशीतस्य वारिणः । किञ्चिदुपशान्तश्रमश्च तेनाभवम् ।

ततः पुनरप्येकतोऽहं गन्तुमारभे । अतीतानि बहूनि वनानि, बह्व्य-स्थल्यः । परमेकोऽपि पुरुषो मया न दृष्टः । क्रमाच्च नष्टा रात्रिरपि । ऐन्द्रीमुखे च रक्तिम्णा पदं न्यधीयत । अथ यावद्रात्रौ सुखेन तावद्दूर-मागतोऽहम् । समुपस्थिते च दिने प्रतिपदं शत्रुभिराक्रान्ते भूमण्डले कुत्र गच्छेयम् ? कथयत कुत्र गच्छेयम् ?

॥ इति संसारचक्रे द्वितीयभागे दशमं चक्रम् ॥

## ॥ अथैकादशं चक्रम् ॥

### ( आरण्यकसूकरः । )

दिनत्रयं यावद्वनाद्वनं पर्यटन्नवर्तिषि । विस्मृत्यापि नगरं ग्रामं वा गन्तुमिच्छामपि नाकरवम् । क्षुधातुरश्च वन्यैः फलमूलैश्चोदरमपूरयम् । तृषार्तश्च प्रस्रवणानां लघु शीतं वार्यपिबम् । अस्तङ्गते च भगवति सवितरि, यस्य कस्यापि तरोरधस्ताच्छयनमकल्पयम् । उदिते च सहस्रांशौ तत उत्थाय पुनर्गन्तुं प्रावर्तिषि । दक्षिणतो वामतश्च किञ्चिदप्यपरिभ्रमन् ऋजुः पश्चिमाभिमुखमेव पलायमान आसम् ।

चतुर्थे च दिवसे यथापूर्वमेव वेगेन गच्छन्नहं स्वच्छस्वादुपानीय-भरितं महदेकं सरोऽपश्यम् । स्नात्वा च तत्र जन्मान्तरगत इव सर्वमप्या-त्मनो दुःखजातं व्यस्मरम् । शरीरं च सर्वथा शुभ्रमभवत् । चेतश्च सर्व-तोऽप्युपशान्तं सोत्साहमभवत् । इदन्तु विस्मृतमिदानीं कथयामि—नन शा-रीर एकमेव मलिनं वञ्चनार्तं । तेन च मानवशरीरं परित्यक्तवान् ।

वङ्गदेशेषु ज्येष्ठमासे फलानामाधिक्यं प्रसिद्धतरम् । अतश्च तत्रैव सरसश्चतुर्षु तीरेषु फलभरानतशिरसो बहून्वृक्षानहमपश्यम् । तेषामेव फलैः क्षुदुपशमनमकरवम् । पाठकाः ! अद्याहमास्मि नितरां प्रसन्नमनाः, यतश्शरीरं मे शीतस्सुगन्धवहो गन्धवाह आप्याययति स्पर्शेन, अनन्यपरतन्त्रश्चास्मि, न कापि चिन्ता, न वा किमपि भयं मनसि मे परिवर्तते । एतादृशं सुखं मे पितुरपि गृहे नासीदेव ।

सरसोऽस्य तीरे मनो मे तथा प्रसन्नम्, यथेत उत्थातुमपि नेच्छामि । कस्मा अपि सुखं प्रदर्शयितुं नास्मि क्लेशतोऽपीच्छामि । परं वनाद्वनमेवं कियच्चिरं नाम परिभ्रमामि ? ग्रामो नगरं वा कुत्रास्ते ? कियद्दूरे वर्तते ? तदपि न जानामि । इत्थं नाम किमप्यकुर्वाणः कियच्चिरं स्थास्यामि ? यदि चात्रापि शत्रवो मेऽन्वेषमाणा आगमिष्यंस्तदा किं वा ऽ भविष्यत् ? इत्यादिचिन्ताकुलश्च ततोऽप्युदतिष्ठम् । पश्चिमाभिमुखमेव प्रातिष्ठे च । कटि प्रसारितकरेण च वृद्धेन दत्त स्वर्णसम्पुटं यथास्थानमुपालभ्यत ।

वनमार्गं परित्यज्य मार्गान्तरेण गन्तुमारभे । अत्यल्पदूरगतस्य च मे नातिदूर एव नील इव कश्चित्पर्वतोऽदृश्यत , यः किलास्तङ्गच्छतो भगवत स्सहस्ररश्मे रक्तवर्णैर्मयूखैस्सम्पृक्तोऽपूर्वामद्भुतां शोभामवहत् । दृष्टमात्र एव तस्मिन्नद्रौ मनसो मे महानानन्दस्समजनि, यतो मे बाल्यादेव पर्वतेषु परिभ्रमणमभ्यस्तमासीत् । अचले चात्र यः कोऽपि तपस्वी महापुरुषो नूनं लप्स्येतेति विचार्य पर्वताभिमुखमेव प्राचलम् ।

गच्छतो मे मध्येपथमेव व्यतीयाय दिवसः, सन्ध्या च समुपस्थिता, पर्वतस्तु दूर एवा दृश्यत । यथा यथाहममतोऽमतो गच्छामि, तथा तथा गिरिरप्ययं पृष्ठतः पृष्ठतोपसर्पतीव । अन्धकारं मार्गस्य दुर्गमतां चागणयन्नहं गच्छाम्येव । एतावत्येव समये महान् कश्चिद्वनसूकरो मम पार्श्वमाश्रित्यागच्छत् । भगवता महती कृपा कृता, यदस्याहं दृष्टिपथं न गतः । दृष्टिविषयतान्तु गतस्य मे नामापि न श्रूयेत । भयेन तु ततोमतो गन्तुम-

निरुक्तस्तत्रैव कस्यचित्तरोरधस्तादतिष्ठम् । क्षणाच्च कश्चिद्भयानकरशब्दश्श्रोत्रपदवीमगमत् । ततश्च पूर्वदृष्टसदृशमेव कञ्चिदन्यं भयङ्करं घुरघुरायमाणं मदाभिमुखमेवायान्तं वन्यं वराहमपश्यम् ।

दर्शनेनैवास्य मे चेतस्सम्भ्रान्तमभवत् । अवशिष्टञ्च धैर्यं पलायनपरं बभूव । मम तु निकटे नास्ति किमप्यायुधम् । आस्ति चेदहं कामं प्रतिकुर्यात् । अन्यं कमप्यात्मनो रक्षणोपायमपश्यन् झटिति तस्यैव तरोस्सवोंचां शाखामारूढोऽतिष्ठम् ।

हा धिक्—मे भागधेयम् ! भूमण्डलेऽत्र यावन्तः प्राणिनस्सन्ति किं ते सर्वेऽपि मे शत्रवः, आरूढमात्र एव वृक्षम्मयि, स वराहोऽपि वृक्षमूलमागत्य दंष्ट्राभ्यां वृक्षं प्रहर्तुमारभत । कदाचिच्च परितो वृक्षं सवेगं भ्रमन्महदौरत्यातिक्रमकरोत् । भयेन चाहं कम्पितसर्वावयवोऽभवम् । वृक्षोपरि दृढमवस्थातुमपि नाशकम् । पतनभयाच्च झटित्यन्तरीयेण शाखया सह शरीरमवध्नाम् । अन्येन किञ्चिदुपशान्तपतनभयोऽतिष्ठम् ।

यथा यथा रात्रिरभिववृधे तथा तथा सूकरस्य गर्जनमपि वर्धमानमभूत् । कियतः कालादनन्तरञ्च सोऽपि परिश्रान्तो वृक्षमूल एव न्यविशत्। अवसिता च कथंकथञ्चित्कालरात्रिः । औपस्त्यश्चेतिमा च नभसि समदृश्यत । पक्षिणां चुहचुहात्कारोऽप्यश्रूयत । प्रातस्त्येन मन्दमन्दवाहिना शीतेन सुगन्धिना वातेन ममापि श्रमः किञ्चिदुपशान्तोऽभूत् ।

यदा च भगवान् सहस्ररश्मिरात्मनो मण्डलं सम्यगदर्शयद्भक्तानां तदा स सूकरोऽप्युत्थाय पश्चिमाभिमुखमगच्छत् ।

भयेन गतप्राणतुल्ये शरीरे मे ततः प्राणस्य सञ्चार इवाजायत । ततः परमात्मानं धन्यवादैस्समभावयम् । मनसि तु मे तदापि सूकरस्य तस्य पुनरागमनभयं कृतपदमेवावर्तत । वनसूकराणां बद्धगोष्ठीणां वनेषु विचरणं

श्रुतपूर्वं मया । ततश्च—" किमयं सूकरोऽन्येषां सूकराणामाह्वानाय गतः स्यात्, यद्येवं प्राणरक्षणं कथं क्रियताम् ? " इत्यादि चिन्तयंश्च क्षणं पुनरपि मूर्छितप्रायोऽतिष्ठम् । अन्ततश्च ' यद्भावि न तदन्यथा ' इति वद्धधैर्यः क्षणमप्यविळम्बमान उन्मोचितबन्धनोऽवतीर्य वृक्षाग्रात्तमेव नीलमचलमनुसरन्प्रातिष्ठे । ।

पुनःपुनः परिवृत्तकन्धरश्च " किं नु खलु सूकरो मामनुयाति " इति पश्यन् द्रुतपदमगच्छम् । गच्छत एव मे केनचिद्दण्डोपलेन प्रहतपदस्य दक्षिणोङ्गुष्ठो विदळितोऽभवत् । प्रावर्तत च धारया रक्तं प्रवोढुम् । मूर्छितश्चाहं तत्रैव न्यपतम् । ततः किमु वा संवृत्तम्, नाहं किमपि जानामि ।

॥ इति द्वितीयभागे एकादशं चक्रम् ॥



## ॥ अथ द्वादशं चक्रम् ॥

### ( जगतो जननी । )

०—[+]—०

अतिसुखमयी निद्रेव । मनोहारिणी शान्तेरिव मूर्तिः । आनन्दमय्या जनन्या उत्सङ्गे स्वपिमीव । उत्तालतरलतरङ्गविक्षेप्त्रा महता सागरेण शान्तभाव इवालम्बित. । महाप्रळयस्यानन्तरं नवीनया सृष्ट्येव मुग्धा मूर्तिर्धृता । मयैव वा पापमयं स्थूलशरीरं परित्यज्य सूक्ष्मदेहो धृत इव । कुत्रा'हमस्मि—स्वर्गेऽथ—भूमण्डले ? सचेतनोऽहमचेतनो वा ? स्वप्नोऽयं माया वा ? मन्दमन्दमुन्मीलिते मया लोचने, अपश्यं च सत्यमेव जनन्या उत्सङ्गे विवर्तमानमात्मानम् ।

यदाहं सचेतनोऽभवम्, उदमीलयं च लोचने, तदात्मानं सत्यमेव कस्याश्चन दयामय्यास्तपस्विन्याः, या किल काषायवसनधारिणी यस्याश्च मूर्तिस्तप्तस्वर्णसवर्णा चाभवत् उत्सङ्गेऽपश्यम्। महता प्रेम्णा सा ममैव मुखं निरीक्षमाणाऽवर्तत । दृष्टमात्रायामेव तस्यां पुळकितमिव मे मनोऽभवत् । प्रायते चाहमुत्थानाय, परं तया प्रतिषिद्धस्तथैवावार्तिषि ।

अहो! केयं करुणाया इवापरा मूर्तिः ! केन वाहमस्या उत्सङ्गे निहितोऽभवम् ? कस्य वा सुकृतस्य परिपाकेनाहमत्रागतोऽस्मि ? सर्वमिदम् अचिन्तितवतो मे गद्गदतामभजत स्वरः। नयने चानन्दजलप्लाविते अभवताम्। कथंकथञ्चिच्चापृच्छन्ताम्—"मातः का नाम त्वम् ? दीनो हीनश्चायमनाथः कथं तवोत्सङ्गमनुप्राप्तः ? मातः किमित्येतावती दया मयि कृता ?" इति।

तपस्विन्या तया, या किल किञ्चिदधिकत्रिंशद्वर्षदेशीया समभाव्यत, प्रत्युत्तरमदीयत—"कथं त्वमत्रागत इत्येतत् ज्ञातुं किमित्येतावदुत्सुकोऽसि ? का नामावश्यकता तज्ज्ञानस्य ? सर्वं समये स्वयमेव व्यक्तीभविष्यति। किञ्चित्कालं शान्तस्तूष्णीं तिष्ठ।" इति। अहन्त्ववदम्—मातः! कथमहं शान्तस्तूष्णीं तिष्ठेयम् ? नूनं न जानासि त्वं मे जीवनवृत्तान्तम्। अतएव च शान्तस्तिष्ठेति कथयसि। तवोत्सङ्गे शयनेन यादृशं सुखमनुभवामि तादृशं जन्मनोऽद्यावधि मे कदापि नासीत्। तव निकटमुपगतवत एव मे महती शान्तिस्सम्पन्ना। अथापि मातः कथय, बध्नाम्यञ्जलिम्, पतामि चरणयोः, कथमहमनुप्राप्तस्ते निकटम्।" इति।

ततो वक्तुमहं नाशकम्। झटित्युदतिष्ठम्। यद्यपि तदानीं नासीन्मे शरीरेऽल्पस्वल्पमपि बलम्, अथापि उत्साहेन केवलमुत्थितोऽभवम्। उत्थितश्च तस्याश्चरणयोरपतम्, अगृह्णा च पादौ, सा तु झटित्येव मामुत्थाप्योरसावालम्बत। अवदच्च—"वत्स ! तूष्णीं तिष्ठ, किमितीयद्रोदिषि ! नितरामसि त्वं हीनबलः, मर्याच्छिरोवेदना ते सप्तभ्यो दिवसेभ्योऽनन्तरं किलाद्य ते चेतना जाता! दुर्भाग्येनैव किल केवलं तव प्राणा ध्रियन्ते। तूष्णी भव वत्स, मारुदः।" इति।

किमिदं मया श्रुतम् ? किमहमेकं सप्ताहमचेतनोऽतिष्ठम् ! अत्रान्तर एव कुतोऽहं न मृतः। हा धिक्, कीदृशाः कठिना मे प्राणाः ? न जानामि विधात्रा कियन्ममायुस्सङ्कल्पितम्।

स्थातुमशक्तश्चाहं घूर्णितशिरास्तपस्विन्या उत्सङ्गे पुनरपतम् । तपस्विनी च सा ताळवृन्तेन वीजयितुमारभत । कियतः कालादनन्तरं च यथा पुरमभून्मेऽवस्था ।

किञ्चित्स्वस्थशरीरश्चाहं तूष्णीमतिष्ठन् वक्तुमारभे—" सम्यगहं स्मरामि—वनसूकरभयात्पलायमानोऽहं गन्डोपलस्खलितचरणो भिन्नपादाङ्गुष्ठोऽपतम् । मूर्छितश्चाभवम् । कुत्राहमपतं तत्तु न जानामि । तदनन्तरं च किं संवृत्तं तदपि न ज्ञायते । मातः ! कथय कृपया कथन्ते मयि निपतिता दृष्टिः । काममुत्कण्ठितोऽस्मि श्रोतुम् " इति ।

तपस्विनी त्वब्रवीत् —" यदि ते महानेव निर्बन्धस्तर्हि शृणु कथयामि । स्थानमिदं नीलगञ्जनामकम् । समीप एवास्य कश्चिदस्ति नीलो नाम गिरिः । अहन्तु नितरामेव दौभाग्यशालिनी तपस्विनी काचित् । अस्तु वृत्तान्तं मे पश्चात्कथयिष्यामि । कुटीरेऽत्र वसन्त्याः प्रायो विंशति वत्सरा अत्यगुः । नास्ति कोऽपि मे सहायभूतः । एकाकिन्येवाहमत्र प्रतिवसामि । नातिदूर एवास्ति कश्चिद्ग्रामः । तत्रत्याश्च काश्चन महिळा यदाकदाचिदत्रागच्छेयुः अहमपि यदाकदाचि द्गच्छामि तं ग्रामम् । अद्याष्टौ दिवसा अतीताः-किञ्चन कार्यमुद्दिश्य तमेव ग्रामं गताभवम् । अहं प्रायः प्रधानमार्गं परित्यज्य वनमार्गेणैव गच्छाम्यागच्छामि च । तस्मिन् दिने प्रातर्निजं कुटीरं प्रतिनिवर्तमानाया मे मध्येमार्गं निपतिते कस्मिंश्चिन्मूर्छिते बालकेऽपतद्दृष्टिः । समीपमुपसर्पितवत्या च मया त्वमेवोपलब्धः । नासिकायां निहितहस्तया च मया निश्वासश्चलन्निवावागम्यत । परन्तु चेतना मात्रयापि नाभूत् । पादाङ्गुष्ठात्तु रक्तं धारया प्रवहतिस्म । झटित्येव मया कुतश्चिदानीताया मूलिकाया लेपेन रक्तनिस्सरणं निरुद्धमभवत् । बहुभिरप्युपायैरनुष्ठितैश्चेतना परं नाजायत । कस्मिन्नप्यनुपलब्धे मनुष्ये महता परिश्रमेण कथंकथञ्चिदहमेकाकिन्येव त्वामिदानीतवती ।

दुग्धं विना किमपि त्वां पाययितुं नाशकम् । द्वितीयस्मिन् दिने महता वेगेन तव ज्वरस्समभूत् । अशनपानादिकमपि परित्यज्य त्वामुपचरन्त्यामपि मयि ज्वरो दिने दिनेऽधिकतामेवाभजत । वायुवेगेन त्वं मध्ये मध्ये प्रलापोऽपि । सप्तभ्यो दिनेभ्योऽनन्तरं भगवतः कृपयाद्य मुक्तोऽसि किञ्चित् । सर्वमपि कष्टं गतप्रायमेव । वत्स! तपस्विनी नामाहमस्मि । संसारमोहस्य परित्यक्तस्य मया महान् कालः । परन्तु न जानामि त्वत्त्वां पश्यन्त्या एव मे मनः परवशमिव भवतीति । अद्य मे मनः क्षणमपि भगवदर्चनवन्दनस्तोत्रादिषु न प्रवर्तते । न जानामि कुतः पुनरपि चेतस्संसाराभिमुखी भवतीति । वत्स ! अयमेव हि तव वृत्तान्तः। तवापि मुखादहं किमपि श्रोतुमिच्छामि, परं नाद्य, किन्तु द्वित्रदिनेभ्योऽनन्तरम् । यदा त्वं सबलो भविष्यसि तदा कथयिष्यसि । नास्ति किमपि भयमिदानीम् । नास्ति लेशतोऽपि ज्वरः । त्वदर्थं किमपि पक्तु याम्यहमिदानीम् । यावदहमागच्छामि तावत् त्वमत्रैव शेष्व । अद्यापि त्वमसि दुर्बलः। अतश्च मा प्रयतस्वोत्थातुम्। ” इति । एतावदुक्त्वा च सा कुटीरात्तस्माद्बहिर्निरगात् ।

तपस्विन्या अस्मिन् कुटीरे विनात्यावश्यकान्पदार्थान्किमपि नासीत्। व्याघ्रचर्ममयमेकमासनमवर्तत यत्राहं शये । शिरःपार्श्वे ताम्रमयः कश्चित्कमण्डलुः, भित्तिलग्नश्च कश्चिद्दण्डः, आसीत् । पटलाधारदारुलम्बिनि च कस्मिंश्चिद्वेणुदण्डे द्वित्राणि काषायवस्त्राण्यवर्तन्त । एवमेवात्युपयुक्ता अन्येऽपि कतिचनासन् पदार्थाः । कुटीरन्तु शुद्धं मनोहरं चावर्तत ।

शयान एवाहमित्थं मनस्यकलयम्—“ पश्य, परमात्मापि कीदृशो दयालुः । कुत्राहमासम् , कुत्र चायागतः । यदा यदा यस्यां कस्याञ्चिदापदि पताम्यहं तदा तदा स एव भगवानविलम्बेन ततस्ततो रक्षति । देव्याश्रयास्साहाय्येन यदा दशमासंचिद्दिताकारागृहादहमुन्मुक्तो मनस्ताविदेवम्

मङ्गळानाम्न्या जरठाया गृहे प्रतिच्छन्न आसम् ; ततोऽपि पुनर्न जानामि कस्या देवताया दययान्धकार एव नौकारूढः पलायामास । अचिन्तितमेव नौकाया मज्जनम् । महाकुल्यायास्तीरे मम शवतुल्यतया तरङ्गैः प्रक्षिप्तस्यावस्थानं च विचित्रमेव । प्राणास्तु तदानीमेव गतप्राया आसन् । भाग्येन तु देवनारायणमुखोपाध्यायस्य दृष्टिर्मयि न्यपतत्, येन गच्छन्त एव मे प्राणास्स्थिरा अभवन् । अहो! देवनारायणमुखोपाध्यायस्य गृहे कीदृशं सुखमासीत् । क्रमेण सर्वेऽपि वृत्तान्ताः स्मृतिपथमवतरन्ति । कुत्रास्ते देवनारायणमुखोपाध्यायः ? कुत्र च स निर्मलकुमारः । कुत्र च सा देवी राज्ञी!" इति।

देव्यां राज्ञ्यां स्मृतमात्रायामेवान्यस्य सर्वस्यापि स्मरणमन्तर्हितमभवत् । नेत्रे चाश्रुपूर्णे अभवताम् । देव्या राज्ञ्या मनोहरा मूर्तिर्नेत्रयोः पुरतोऽभवत् ।

एतावत्येव समये तपस्विन्यागत्याब्रवीत्—" वत्स ! उत्तिष्ठ, मम हस्तमवलम्ब्य मन्दम्मन्दं बहिरागच्छ, हस्तपादमुखं प्रक्षाल्य यावदिच्छं कियत्किंचिदभ्यवहर ' इति ।

अहमपि ' तथे ' ति तस्या हस्तमवलम्ब्य बहिर्गत्वा देहल्यामुपाविशम् । अहो अन्यादृशं रामणीयकमस्य स्थानस्य। दृष्टमात्रमेवेदं मोहयति मानसम् । कुटीरस्य पुरस्तात्स्वच्छसुन्दरं किञ्चिदस्ति चत्वरमलिन्दः, यत्र मालतीकुन्दमल्लिकादयः कुसुमलताश्शोभन्ते परितः । पुष्पाणां मनोमोहनेन गन्धेन कृत्स्नमेव कुटीरं सुष्ठु वासितं भवति । एतादृशं रमणीयं स्थानं त्वद्य यावन्न कदाचिद्दृष्टं मया । शीतेन सुगन्धेन वातपोतेनाङ्गस्पृशा प्रफुल्लमिवाभवन्मनः ।

पादहस्तमुखं प्रक्षाल्यार्द्रेण वस्त्रेण कृत्स्नमेव शरीरममार्जयम् । क्षुदपि तदानीं विशेषतः प्रज्वलितस्यभूत् । पूर्वोक्तकन्दकेन सह नवमां रोटिकां भुक्त्वा

कोष्णं दुग्धं च पीत्वा सोत्साहोऽभवम्। सुप्ते मयि तपस्विनी कुटीरस्य बहिरलिन्दे शयनमकल्पयत्। तत्रैवाहं न्यविशम्। एताव-त्सु दिनेषु व्यतीतेषु वृद्धरोगिणा दत्तानि वस्तून्यवलोकयितुमवसरो लब्धः।

इदन्तु कथयितुमहं व्यस्मरम्। इदानीमत्र ज्ञापयामि—यदाहमचेतनो मूर्छितोऽभवं तदा तपस्विन्या स्वर्णकरण्डकं पत्रग्रन्थिश्च मरकटेनिष्कास्य कुटीरस्य कुत्रचित्कोष्ठके निहिते अभूताम्। यत इयं विरक्ता काचित्तपस्विनी, तत एवैदं वस्तुद्वयं मयालभ्यत, यस्य कस्यचिदन्यस्य चेद्धस्तगतमभविष्यत् दुर्लभमेवा भविष्यत्। कुटीराद्बहिरागच्छंश्चाहमिदमपि समैक्षालयम्।

गतायां तपस्विन्यां निविष्ट एवाहं प्रथमतः पत्रग्रन्थिमेवोदमोचयम्। अपश्यं च तत्र किञ्चिद्दानपत्रम्। आः! इदन्तु देव्या रात्र्या हस्तलिखितमेव। महतानन्देन कौतूहलेन च सह तदहमपठम्। अनेनैव सह किञ्चित्पुरातनं पत्रमपि तत्रासीत्। अक्षराणि तु सर्वाण्यविकलान्यासन्, मध्यास्तु वर्णा सूक्ष्मामोऽभवत् तदप्यहमपठम्। तत्रैवं लिखितमासीत्—

" नीलाचलस्य यत्र कुत्रचिद्गुहायां महाराजस्य नरेन्द्रनारायणस्य ' गुप्तधनं ' रत्नगृहं वा वर्तते। अस्यैव वंशभवो योऽपि कोऽपि वान्विष्येदं रत्नगृहमुपलभेत स एवास्य स्वामीभविष्यति। "

तत्र वर्षमासादिकं किमपि नासील्लिखितम्। पूर्वोक्तांश्छब्दान्विना न कोऽप्यन्यश्शब्दस्तत्रासीत्। पठित्वा चाहं दिङ्मोहमिवागच्छम्। किमपि हृदयं नावातरत्। को नाम स वृद्धो रोग्यासीत्? येनेदं मह्यं दत्तम्। किं स कोऽपि पत्रलिखितस्य नरेन्द्रनारायणस्य वंशजेष्वेव स्यात्। न चेदिदं पत्रं तस्य हस्तं कथमुपागतम्? यदि च तर्हि स एतावतो दिवसान् किमिति कारागृहेऽतिष्ठत्। मन्ये अस्यैव वृत्तान्तस्य परिज्ञानाय राजस्तं बन्दीचकार, इयच्च कष्टमदात्। महदिदं कष्टं यदर्जितस्य धनस्य स्वामी

नाम भूत्वा स आत्मान दुर्भगमकथयत् । आस्तामिदम्, किमिति नाम स मह्य निज दानपत्रमदात् । इद च देव्या राज्यैव लिखित नूनम् । तर्कयामि—तस्मिन् कथयति देवी राज्यलिखदिति । तस्य दानपत्रस्य यत्तेनदत्तम्, यच्च पूर्वं मया पठितम्, यच्च देव्या राज्या लिखितम्, अयमेव साराशः—

" मत्तस्सप्तमस्य पूर्वपुरुषस्य कालादिद रत्नगृह नीलाचलस्य कुत्रचित् गुहाया छन्न वर्तते । मम पिता, पितामह , प्रपितामह', तत पूर्वे चेद रत्नगृह द्रष्टु नापारयन् । अहमप्यस्मिन् कार्ये नाभव सफलमनोरथ। अतएव महाराजस्य नरेन्द्रनारायणस्य दानशासनं तुभ्यमपर्यामि, त्वमेवास्य कार्यस्यार्ह इति मन्येऽहम् । यदि तव भाग्येन रत्नगृहमुपलब्ध स्यात्त्वया, त्वमेवास्य स्वामी भविष्यसि । ततश्च तव पुनर्योग्यत्य० । यदि कश्चिदाशङ्केत—सत्सु बहुषु कुतस्त्वमेवास्यार्ह इति मया निश्चित इति, वीरजा देवी देवी राज्ञी समाधास्यते । सैव म प्रधानतमा साक्षिणी । किमधिकेन ।

बन्द्योपाध्यायः—

श्रीनारायणदेवशर्मा " ।

" पुनश्च—

" यदि त्वयापि रत्नगृहमिद नोपलभ्यते तदा यस्मै कस्मै विद्योग्याय दानपत्रमिद देहि । यदाह सम्यक्सचेतनस्सुस्थचित्त आस तदा दानपत्रमिद मया व्यलिख्यत । "

पत्रयोरनयो पठनेन महान् हर्षस्समजायत । आनन्दसागरे निमग्न इवाहमभवम् ।

सौवर्णसम्पुटस्योद्घाटनाय बहु प्रायते । नाशक पर तदुद्घाटयितुम् । अनिच्छन्नपि तदा सम्पुट पत्र च कुत्रचिच्छन्नमस्थापयम् ।

तपस्विनी सा, यामहमिदानी मातरित्येव सम्बोधयामि, स्नानपूजादिक निर्वर्त्य कुत्रचिद्याग्रपात्रे फलमूलादिक दस्तेन धारयन्ती समागत्य मम पुरस्तादुपाविशत् ।

अत्रदं च तामहम्—" मातस्त्वमसि धन्या ! धन्यश्च त आत्मीयत्वाभिमानः । न केवलं ममैव माता त्वमसि, अपि तु जगत् एव माता त्वमसि ? " इति ।

॥ इति संसारचक्रे द्वितीयभागे द्वादशं चक्रम् ॥

—•—

## ॥ अथ त्रयोदशं चक्रम् ॥

### ( अन्वेषणम् )

०—[+]—०

पञ्चदश दिवसान्यतीतानि । मम दुर्बलता निश्शेषतो व्यनश्यत् । यथापूर्वमहं सबलो दृढगात्रश्चास्मि । तपस्विन्या अपि कार्यं यथापूर्वं सम्यक्प्रचलति । प्रातष्षड्घण्टावादनकालप्रभृति दशघण्टावादनपर्यन्तश्च काले मदर्थभोज्यनिर्माणादिना याति तस्याः । ततः पारायणपूजादिकं करोति । अनन्तरं भोजनादिकं करोति । प्रायो मध्याह्नात्परं द्वितीयघण्टावादनपर्यन्तकाल एव सर्वमिदं कृत्यजातं परिसमाप्नोति । तार्तीयीकघण्टावादनकाले पुनर्मां कन्दमूलादिना तर्पयति ।

बस्सायङ्कालादारभ्यार्धरात्रपर्यन्तं मदीयं जीवनचरितं मात्रा सावधानया श्रुतम् । श्रवणकाले तस्या विचित्रैव दशावर्तत । कदाचिदसा शृण्वन्त्येव मन्दमुग्धेवाहसत, कदाचिच्च पर्यश्रुलोचनाभवत्, कदाचिच्चानिमिषाभ्यां लोचनाभ्यां मामेवापश्यत्, कदाचिच्चोष्णदीर्घनिश्वासैरधरोष्ठमशोषयत् ।

उदश्रुलोचनया मात्रा मदीयस्सर्वोऽपि वृत्तान्त ऐकैकदयेन श्रुतः । मयापि सर्वोऽप्यात्मनो वृत्तान्तोऽविकलः कथितः, केवलं वृद्धेन रोगिणा सह संलापः, स्वर्णसम्पुटादिप्राप्तिश्च न कथिते । सर्वमप्यात्मनो वृत्तान्तं मया सा श्राविता, तया त्वद्य यावत्तस्या वृत्तान्तः कोऽपि नोक्तः । ' कथयिष्यामि ' ' कथयिष्यामि ' इत्येवायमपि दिवसो यापितः । तपस्विन्या

मातुर्वदनमण्डलमेव हृदयगतां महतीं चिन्तां व्यनक्ति। तदीयाङ्गमार्दवं च नूनमियं कस्यचिन्महाराजस्य पट्टमहिषीति पिशुनयति।

तपस्विन्या मातुस्तिस्रः कुट्यस्सन्ति। यत्राहं तिष्ठामि सैवान्याभ्यां महती। इतरयोरेका पूजागृहमित्यन्या महानसमिति च व्यपदिश्यते। पूजागृहं सदैव पिहितद्वारं वर्तते। एषु पञ्चदशसु दिवसेषु कदापि मया पूजागृहं विवृतद्वारं न दृष्टम्। पिधायैव कवाटं पूजामपि करोति सा। पूजागृहद्वारपिधानविषये तस्या महती सावधानता। कदाचिदस्मिन् विषये सा मया पृष्टा कथान्तरप्रस्तावेन वार्तामिमामन्तरधापयत्।

अपराह्णस्यायं समयः। प्रायस्तृतीयघण्टावादनमपि जातं स्यात् मां फलमूलादिकं भोजयित्वा मातैव पूजागृहं गता। ममापि तस्य स्वर्णसम्पुटस्योद्घाटनायावसरो लब्धः। समीप एव किञ्चिदयोमयमायुधं पतितं लब्धम्। तस्य साहाय्येन महता परिश्रमेण च स्वर्णसम्पुटमुदघाटयम्। वस्तुद्वयमेव ततो मयाऽलभ्यत। तत्रैका सुवर्णमयी हीरकजटित मनोहारिणी मुद्रिका। अन्या च काचित्सुवर्णमयी कुञ्चिका। आभ्यां वस्तुभ्यां को वाभिप्रायः प्रकटीभवेत्, किमपि न ममान्तरमविशत्। 'तिष्ठतु सर्वमिदम्, एकदा पर्वतं तावदिमं पर्यटामि, तत्र पत्रे लिखितमस्ति—'नीलाचल' इति, अस्य पर्वतस्य च श्रूयते नाम नीलाद्रिरिति। तर्हि किमस्मिन्नेवाद्रौ कुत्रचिद्गुहायां तद्रत्नगृहमस्ति!" सर्वमिदं मनसि विचार्य मातुरज्ञात एव नीलाद्रिं प्रति प्रातिष्ठे। अर्धघण्टाकाले पर्वतस्याधः प्राप्तम्। पर्वतोपर्यारोहणाय वक्रवक्रा काचित्पद्या परमवर्तत। तयैवाहमुपर्यारोढुमारंभे।

अहो! कियं मनोहारिणी शोभा स्थानस्य! भगवान् मयूखमाली क्रमेणास्ताचलमुपसरति। सौवर्णैस्तस्य किरणजालैः कृत्स्नमरण्यं सुवर्णमयमिवाज्यत। निर्जनेऽत्र महत्यद्रावहमेकाकी सन् इतस्ततश्चरामि। प्रचण्डतमैः प्रभाकरस्योस्रैः प्रतापितास्सर्वेऽपि वृक्षा लता गुल्माश्च म्लानता-

सम्पन्नाः किञ्चिदुपशान्ते रविकराणां कौर्ये सायन्तनेन शीतेन समीरणेन स्पृष्टाः पुनर्जीवनमिव प्राप्ता महतीं शोभामपुपुषन् । अहमप्येतादृशे स्थाने तिष्ठन् पश्यंश्च शोभामेतामिमां महान्तमानन्दमन्वभवम् । पुरत एव च स्वच्छस्वादुपानीयवाहि प्रस्रवणं किमप्यासीत्, यस्य शोभा न मया शक्यते वर्णयितुम् ।

अयमेव नीलाचलः । अत्रैव कुत्रचिन्महाराजस्य नरेन्द्रनारायणस्य महती सम्पत्तिरस्ति । परन्तु कुत्रास्ते, न जानामि । यदि समीचीनमभिज्ञानं तत्स्थानज्ञानाय लिखितमेव स्यात्, तर्ह्ययावधि किं सा शिष्येतापि ? सप्त सप्त पूरुषा अतीताः, केनापि तत्प्रमाणं न लब्धम्; का कथा मम दुर्भगस्य तपस्विनः ? कार्येऽस्मिन् हस्तप्रक्षेपो मादृशस्य मूर्खतामन्तरा किं वा प्रकाशयेत् ।

किं तर्हि कार्येऽस्मिन्मया न प्रवर्तितव्यम् ? कुतो न ? अवश्यमेव प्रवर्तिष्ये । को वा जानाति कस्य कीदृशं भागधेयमिति । प्रसिद्धं हीदम्-"स्त्रीणां चरित्रं पुरुषस्य भाग्यं.....देवो न जानाति कुतो मनुष्यः" इति । आशा हि नाम बलवती सर्वस्य । आशयैव हि सर्वमिदं जगद्ध्रियते । एवं स्थिते निराशः किमिति भवानि । स्यात्कदाचिन्मयैव भगीरथेन भाव्यमिति भगवतस्सङ्कल्पः ।

यावदस्तमनं सूर्यस्य यथाशक्ति पर्वतस्य सर्वेषु स्थानेषु सम्यगन्वेषयम् । यदा च सर्वत एवान्धतमसावृता अभवन् दिशः, तदा कुटीर न्यवृतम् । माता मामेव प्रतीक्षमाणा वर्तत । दृष्ट्वैव मां साब्रवीत्-"वत्स अद्य यावत्कुत्र गतोऽभवः ? किं नीलाचलं गतोऽभवः ?" इति । मया तु समुचितमुत्तरं समयोचितमदीयत । सायन्तनाय कर्मणे पूजागृहं सा प्राविशत् । अहमपि देहल्यामुपविष्टो नानाविधाभिश्चिन्ताभिस्समाविष्टोऽतिष्ठम् ।

इति संसारचक्रे द्वितीयभागे त्रयोदशं चक्रम् ।

---

## ॥ अथ चतुर्दशं चक्रम् ॥



### ( महती विपत् । )

इत्थमेव प्रातस्सायं मध्याह्ने वा यदा यदावसरो लभ्यते, तदा तदा नीलाचलं तं गत्वा सर्वाणि शिखराणि सर्वा गुहाश्च सम्यगवलोकयन्नासम् । ' कुत्राहं गच्छामि ? किं वा तत्राहं करोमि, इत्येतमर्थं कदापि तपस्विन्यै मात्रे नावेदयम् । सा तु यदाहं पर्वतात्प्रतिनिवर्ते तदा ' त्वं अमुकं देशं गतः किले ' ति स्फुटं वदेत् । अनुक्तमेवेयं कथं जानातीति तु महान्मे विस्मयः ।

दिवसेष्वेषु मातुस्स्वभावः पूर्वापेक्षयान्यादृशो दृश्यते । यत एवाहं नीलाचलं गन्तुमारभे तत एवेमां चिन्ताग्रस्ता सन्देहशीला च तर्कयामि । यदेयं पूजागृहं प्रविशति तदेव खल्वहं बहिर्गच्छामि, एवं स्थिते कथमियं जानाति ' अमुकं देशमहं गत ' इति ।

पर्वतात्प्रतिनिवृत्तमागतं मामियं सकौतुकं सविस्मयं च किञ्चिदपर्वार्य पश्यति । अहं त्वजानान इव किमपि तिष्ठाम्यविकृतः ।

अद्य यावदस्या जीवनवृत्तान्तश्रवणस्यावसर एव न लब्धः, यतो न मे कार्यान्तराय विरामः--न चास्यास्समीप उपविशाम्यपि । दिने दिने क्रमश इयं चिन्तया खिन्ना विवर्णा च परिदृश्यते ।

इत्थमेव व्यतीत एको मासः पश्यतो मे, न च रत्नगृहस्य कोऽपि वृत्तान्तो ज्ञातः । अन्वेषणे तु तस्य मया यावच्छक्ति प्रयत्नः कृतः ।

एकदा तु मध्याह्ने भुक्तपीतोऽहमलिन्दे सन्निविष्ट आसम् । मन्ये सुप्तोऽपि । माता च देवपूजायै पूजागृहं प्रविष्टासीत् । अचिन्तितमेव कर्णपथं गतेन केनचिन्मनोहरेण गीतेन प्रबुद्धोऽभवम् । उन्मील्य नयनेपश्यंश्च कमपि नालभे । उत्थाय तत इतः परिभ्रमन्नपि न कमपि । पूजागृहमपि यथापूर्वं पिहितकवाटमन्तर्दत्तार्गलं च । कवाटिकायां किमपि रन्ध्रमपि नासीत्, येनान्तर्गतं द्रष्टुं शक्नुयाम् ।

गीतेन त्वनेन मे मानसं व्याकुलमभवत्। यदा कथञ्चिदपि मनसस्स्वास्थ्यं न समभावयम्, तदा गिरौ पर्यटनमेव समुचितं निरचिनवम्। तेषु दिवसेषु गिरिपर्यटने महदेव कौतुकं मे समभवत्। यदा यदावसरो लभ्येत तदा गिरिपर्यटनमेवेच्छम्। येन गीतेनाहमभुत्सि—तदिदं गीतम्—

॥ द्विपदी ॥

कतिचिदहानि न सङ्गतमिति नाकलयस्व रुषस्फुरितम्।
मतिमन्मधुरं कृतपदमनिशं मनसि मम त्वच्चरितम्॥
नियतं दूरे तिष्ठतु गात्रं निकटे चेतोऽविरतम्।
प्रयताः प्राणास्त्वदधीना मे प्रियतम न किमपि दुरितम्॥

स्वर्णसम्पुटं हस्ते गृहीत्वाहं पर्वतं प्रति प्रास्थिषि। अत्रागतस्य मे मासत्रयं व्यतीतम्, एतन्मध्य एव मया गिरेस्सर्वाणि स्थानान्यवलोकितप्रायाणि। किमित्यवलोकितप्रायाणीत्येव कथयामि, द्विस्त्रिरेकैकं स्थानं मयावलोकितम्। केवलं दक्षिणतः पर्वतस्यैकं शिखरमेव नावलोकितम्, तच्छिखरपर्यन्तं गमनं किञ्चिदसाध्यमिव। भयानकं च तत्स्थानम्। अनवलोकितपूर्वस्य तस्य स्थानस्यावलोकने महती समुत्कण्ठा मे समुदभूत्। तत एव गन्तुमहं निरचिनवमपि।

निश्चयमात्रेण किं वा भवतु? तत्स्थानगमनाय न कोऽपि मार्गो न वा काऽपि पद्याऽवर्तत। मम तु तत्स्थानगमनमत्यन्तमावश्यकम्, तर्हि किमत्र कर्तव्यम्? अन्ततो महता साहसेन स्मरन्मनसि भगवन्तं वृक्षाणां मूलानि शिलाखण्डांश्चावलम्ब्योपर्यारोढुमारभे। किं कथयामि तस्य मार्गस्य दुर्गमताम्। यदि किञ्चिदप्यनवधानं दृष्टिविभ्रमो वा स्यात्तर्ह्यमिन्यामेवात्मानं पश्येयम्।

अस्तु, यथाकथञ्चित्सतन्तुच्छिद्यन् कण्टकैश्शरीरं विदारयन्नुच्चैर्निश्वसंश्च तदेव शिखरं प्रापम्, यद्बहुभिर्वृक्षैर्गुल्मैश्च समाच्छन्नं दूरात्पश्यतां दृष्टिपथमेव नोपगच्छति।

हा धिक्! कीदृशमिदं भयङ्करं स्थानम्। केयं सर्वतोऽपि निश्शब्दता! न मनुष्यो न चान्यः कोऽपि पशुर्दृश्यते। अत्युच्चतमा देवदारु-

सालादयो वृक्षाः केवलं दृश्यन्ते । भगवान् सहस्रकिरणोऽपि क्रमेण संहरन् करान्सहस्रमपि पश्चिमत उपसर्पति । क्रमेण घनीभावाद्वृक्षाणामन्धकारोऽपि निजमधिकारमशून्यं चिकीर्षुरसन्नयाति सर्वतो व्यापनाय । मार्गोऽपि न परिज्ञायते ! हा हन्त ! किमहमितः करोमि ! कुत्र गच्छामि ! दुश्शक इतो निर्गमः ! व्यर्थमत्रागतोऽस्म्यहम् । आः कष्टम् ! नूनमद्य गमिष्यन्ति मे प्राणा निरर्थकमेव । स्वयमेवं स्वशिरसि धूलिमपातयम् ! इत्यादि चिन्तयन्नहमेकतोऽतिष्ठम् । भयेन गतप्राया इवाभवन्मे प्राणाः ! हृदयं कम्पितुमारभत । पश्यत एव मे सर्वतोऽन्धकारावृता अभवन् दिशः ! हस्तोऽपि मे नादृश्यत !

अनारमाधीनोऽहं कुत्रचिन्महति गण्डोपलेऽधोलम्बितपाद उपाविशम्। उत्क्षिप्तनयनश्च घनघटाच्छन्नमपश्यं नभः । अतर्कयं च क्षणाद्वात्यामागमिष्यन्तीम् महतीं च वृष्टिं भविष्यन्तीम्। कथं प्राणानहं रक्षेयमिति चिन्तयंश्च भीतभीतोऽभवम् ।

अनन्तरेष्वेव पञ्चषेष्वपि क्षणेषु महान् झञ्झानिलस्समूलमुत्पाटयन्निव वृक्षान् भिन्दन्निव नभश्शब्देन समाययौ । सूक्ष्मसूक्ष्माश्च शर्कराखण्डा वात्यया प्रेरिता नयनयोरपतन् । करकवृष्ट्येव ताड्यमानं शरीरं क्षौद्रपटललतामिवावलम्बितुमारभत । अनिच्छन्नपि न्यमीलयं नेत्रे । वात्ययोन्मूलितः कश्चन वृक्षो दशहस्तदूरे सशब्दं न्यपतत । तेन महता शब्देनोद्भ्रान्त इवाहमभवम् । विदीर्णे इव च श्रोत्रे । किञ्चिदुपशाम्यत्येव वात्याया वेगे हस्तिशुण्डादण्डानुकारिणीभिर्धाराभिर्वृष्टिः पतितुमारभत । घोरमगर्जन् घना । पर्यस्फुरंस्तत इतो विद्युल्लता । जीवनाशाया च परित्यक्तोऽहमभवम् । नातिदूर एवापतदशनिः, इदमेव भागधेयम्—यन्मे शिरसि नापतत् । अथवा दौर्भाग्यमेव मे । अशनिपाते हि सति क्षणादुन्मुक्तो भवेयं सर्वैरपि दुःखैः। प्रभया च दुर्निरीक्षया शनैर्निमीलिते मे लोचने । मूर्छामिवाहमापन्नस्सचीत्कारं न्यपतं भूमौ ।

इति संसारचक्रे द्वितीयभागे चतुर्दशं चक्रम् ।

---

## ॥ अथ पञ्चदशं चक्रम् ॥

### ( रहस्यप्रकाशः। )



पुनरपि तेनैवातिमनोहरेण गीतेन येन पूर्वेद्युर्मध्याह्ने व्यपगतनिद्रोऽहं प्रभवम्, प्रबुद्धोऽभवम्। विष्फारितलोचनश्चाहं कुत्रचित्सुन्दरतमे परिष्कृते रत्नस्तम्भशतसमलंकृतेऽन्तर्गृहे सुग्धमनोरमे मृदुलतमे शयने शयानमात्मानमपश्यम्। शिरश्च सुखस्पर्शे कुत्रचित्पट्टोपधाने निविष्टमवर्तत। तत्र चान्तर्गृहे समुचितेषु स्थानेषु भित्तिलम्बानि नानाविधानि मनोहराणि चित्राणि, विचित्ररचनानि चातिपृथुलानि दर्पणानि, एकशाखान् द्विशाखांस्त्रिशाखान् पञ्चशाखांश्च दर्शनीयान् भित्तिदर्पणदीपान् ( Wall Lamps ) पटलाधारदारुषु पट्टवितानादधोलम्बमानाश्चानन्तशाखान् दर्पणमयान् लम्बमानदीपान् ( Hanging Lamps ) शुद्धस्फटिककुट्टिमे यथोचितं भित्तिपार्श्वेषु निहितानि पट्टमयकुथापरिष्कृतानि चतुष्पदानि पट्पदान्यष्टपदानि च सुखोपवेशिनी सुखशायिन्यादीनि, मध्ये चैकपदं वर्तुलं पट्टयमाच्छन्नानावर्णैर्दर्पणमयैर्नवसुगन्धिपुष्पालङ्कृतैः पुष्पनिधानैश्शोभमानैः परितश्च बह्वीभिस्सकुथाभिस्महस्तोपधानाभिरतिमूल्याभिस्सुखोपवेशिनीभिः परिवृतं पीठं चापश्यम्।

सर्वमिदमवलोकयन्नहम्— 'किमहं जागर्मि? अथ स्वपिमि? किमस्मिन्निन् लोके? अथ मुनिन्?' इत्यादि नानाविधसंशयाकुलमनाः क्षणं विनिद्रामिव दशामगतिष्ठम्। अचिन्तयं च— "कुत्र सद्र्यानके पर्वतशिखरेऽशनिपातेन मूर्छनम्? कुत्र चेदं सुसैकताने मणिमये गृहे शय्यायां शयनम्! किमिदं माया? आहोस्विदिन्द्रजालं कस्यापि! अथ ममैव मनसो मोहः!" इति। सन्देहापाकरणाय च नयने निमीलयन् किमप्यपश्यम्। अन्योन्यीन्यंश्च पुनरुन्मील्यैव दृश्यान्यपश्यम्। तेन

च सत्यमिदं सर्वमिति निश्चित्य शयन एवोत्थायोपाविशम् । अवधानेन च परितस्सर्वाण्यवलोकयितुमारभे । उपधानपार्श्वे च नयने प्रसारयन्यदपश्यम्, तदत्यद्भुतं किमप्यासीत् । तन्मे मानसमपाहरत् । अहो ! किं सैवेयम्— या संसारसागरस्य नौकेव, या च प्राणारामस्य नन्दनवनस्य पारिजात इव ! किं सैवेयम् , या मम सर्वस्वभूता , पूजनीयतमा देवी ? आम् आम् , सैवेयं देवी राज्ञी ।

यदा च मनस्ययं भावस्समुदभूत्तदा किलामन्देनानन्देन भरितोऽहं रोमाञ्चितगात्रस्तस्या मनोहराया मूर्तेश्चरणयोर्निपतितुमचकम् । सा तु कृतस्मिता द्वित्राणि पदान्यपसृत्यातिष्ठत् । ततस्सविस्मयस्सकौतुकमपृच्छमहम् — " देवि राज्ञि ! कथमहमत्र ? कस्य पुण्यस्य बलेन स्वर्गतुल्यमिदं स्थानमहमनुप्राप्तः ? केन वा सुकृतेन पुनस्ते दर्शनमभवत् ? बध्नाम्यञ्जलिम् , पतामि ते चरणयोः , प्रकाशय रहस्यम् , मास्म निमज्जयस्संशयसागरे प्लवमानं माम् , शपामि शिरसा मे । " इति । देवी राज्ञी त्वब्रवीत् – " किमित्येतावान् सम्भ्रमः ? तूष्णीं तिष्ठत, स्थिरो भवत , उपविशत , अद्यैव सर्वं रहस्यजातं प्रकाशतामेष्यति । " इति ।

काश्चित्क्षणांस्तूष्णीं स्थित्वा देवी राज्ञी सस्मितं पुनरवदत्– " एतावतः कालस्यानन्तरं सर्वापि तवापद्व्यनश्यत् । दुःखमयानि दिनानि सर्वाणि व्यत्ययुः । इत एकमेकं निजं वृत्तान्तं मया कथ्यमानं शृणु । तिष्ठतु तावदिदम्, यदाशनिपातेन पर्वते शिखरे त्वं मूर्छितोभवस्तदा किं किं वस्तु त्वन्निकटे आसीत् ? स्मरसि कच्चित् ? कथय, पश्यामि । " इति ।

श्रुतवत एव मे स्वर्णसंपुटं स्मृतिपथमागात् । कटौ करं प्रसारयता च संपुटं नालभ्यत । मनो मे शून्यप्रायमभवत् । संभ्रान्तश्चाहं देव्या राज्ञ्या एव वदनमपश्यम् । देवी राज्ञी तु सहासमवदत् – " किमित्येवं विचलितो भवसि ? गृहाणेदं संपुटं भवदीयम् । इदमेव खलु तद्भानरकम् ? " इति ।

" आम् , इयमेव " इति कथयन्नहं संपुटमगृह्णाम् । देवी राज्ञी तपृच्छदेवम्— " तपस्विन्या मातुः पूजागृहमपि कदाचित्त्वया दृष्टम् " इति ।

अहं चाब्रुवम्— " कदापि न, न तथा कदाचिदपि वा दर्शितम्, न वा मम तद्दर्शनस्य कोऽप्यवसरो लब्धः । कथं नामावसरो लभ्येत ? सर्वदा रात्रिन्दिवं तद्गृहं पिहितद्वारमेवावर्तत । देवि राज्ञि ! सर्वमिदं रहस्यं झटिति प्रकाशय । स्मराम्यहम् — तदा पर्वतशिखरे मूर्छितो निपतित आसम् । कथं तावत्तव निपतिता मयि दृष्टिः ! "

देवी राज्ञी समन्दहासमवदत् — " साधु , शृणु , कथयामि, तव मातुस्तपस्विन्याः पूजागृहाद्गिमं पर्वतं यावदस्ति काचित्सुरङ्गा । येनाभिप्रायेण त्वमिदं पर्वतमन्वेष्टु गच्छन्नासीस्सापि तेनैवाभिप्रायेण सुरङ्गामार्गेणागच्छन्त्यासीत् । "

अधीरः एवाहमवदम्— " किं सर्वेनैव कारणेन पार्वतं सर्वं वृत्तान्तं कथयन्त्यासीत् ? पर्वते यत्र यदाहं गच्छामि, सर्वमिदं तत एव सा जानन्त्यासीत , मां च सर्वं वृत्तान्तं कथयित्वा विस्मापयन्त्यवर्तत ? किमकथयः ? येनाभिप्रायेणाहं पर्वतं गच्छन्नासं तेनैव सापि गच्छन्त्यासीदिति वा ? किमस्य तात्पर्यम् ? झटिति कथय का नाम सा ? देवि झटिति कथय । का नाम सा ? न वेदहं भवान्युन्मत्तः । " इति ।

देवी— " का सा-कथयामि वा , सत्यं वद , कथयाम्येव वा , साधु तर्हि . शृणु , मनो दृढमवस्थापय , मास्म नाम सम्भ्रमः ! शृणु— सैव ते जननी , या त्वामवहद्दश मासान् गर्भे , सैव- इयं ते माता।

अहम्— " ऐ ! एं !! किमकथयः ! सैव मे माता । सैव वा मे प्रसवित्री जननी । कुत्र सा । माता मे कुत्रास्ते । देवि राज्ञि ! किं सत्यमेव सा मे माता ? "

ततोऽधिकं किमपि वक्तुं नाशकम् , कण्ठं रुरोध बाष्पोद्गमः । नयने पोद्भुगी अभवताम् , नैकोऽपि शब्दो गळान्ने निस्ससार ।

कियतः कालादनन्तरं देवी राज्ञी पुनरेवं वक्तुमारभत– " सत्यम्, सैव ते माता, मन्येऽद्यावगच्छसि– यथा सा तव पर्वतभ्रमणवृत्तान्तमजानादिति । अस्तु, इतः परं शृणु । ह्यो मध्याह्ने यदा त्वं देहल्या सुप्तोऽभवस्तदाहं पूजागृहे त्वामेवाधिकृत्य मात्रा ते सल्लपन्त्यवर्तिषि । सल्लापमध्य एव त्वन्निकटे स्वर्णसंपुटमेकं वर्तमानं सदा त्वया रक्ष्यमाणं चावगत्य महान्मे विस्मयोऽजनि । अज्ञासिष च तव शिरःपार्श्वे उपधानस्याध एव तस्य स्थितिम्, झटित्येव गत्वा तव शिरःपार्श्वे उपधानस्याधस्ताद्धस्तं प्रसार्य स्वर्णसंपुटं गृहीतवती । उद्घाट्य दृष्टवत्याश्च मे सर्वेऽपि सन्देहा व्यनश्यन् । पुनश्चोपधानस्याधस्तादेव तन्न्यधाम् । ततश्च तव कर्णयोस्समीप एव किंचिद्गीतं गायन्ती क्षणं विलिम्ब्य ततोपासरम् ।

यदाहं गायन्त्यासं तदैव माता ते सुरङ्गामार्गेण पर्वतमगमत् । छन्नगात्रा चाहं त्वामपि शयनादुत्थाय तत्रैव गच्छन्तमपश्यम् । अहमपि सुरङ्गामार्गेण तव मातुस्समीपमगाम् । कुत्र त्वं गतोऽसीति तु नावाभ्यामज्ञायत । एतावत्स्येव समये वृष्टिरप्यागमत् । अशनिपातश्चाभवत् । त्वामधिकृत्यावां चिन्ताकुले अभवाव । किञ्चिदुच्च पर्वतशिखरमारुह्य चतुर्दिशं पश्यन्त्यावावां कस्यापि रोदनशब्दमशृणुव । तेन च विशेषतश्चिन्ता समभवत् ।

एतावत्स्येव दक्षिणतो दृष्टिर्निपतिता अशनिपातेनोच्चतमं पर्वतशिखरं विशीर्णमपश्यत् । तत एव बभ्रवान्पदान्क्रममाणाहं कञ्चन शवमपश्यम् । दृष्टवत्या एव मे व्यशीर्यतेव शिरः । किञ्चिदग्रतः प्रसृतवत्याश्च व्यदीर्यतेवोरः । सर्वा दिशोऽन्धतमसावृता अदृश्यन्त । उरस्ताडयन्त्यहं तत्रैवोपाविशम् । कियन्तञ्चित्कालमहमप्यचेतनैवासम् । यदाहं सचेतनाभवं तदा तव मातरमपि साक्रन्दं तत्रैवागच्छन्तीमपश्यम् । तदा त्वे वृष्टिर्निश्शेषत उपशान्तावर्तत । निशाकरस्याप्युदितस्य घटिकैका । समागतायास्ते

मातर्युभे सम्मिळिते त्वामत्रानयाव । अग्निना ते शरीरं शमयितुमारेभे । इत्थ रात्रिं त्वमभवो विचेतन । प्रातस्तेऽभवच्चेतना । आमाद्दुग्धमानीय कोष्ण कृत्वा त्व पायितोऽभव ।

अधासि त्वं सुस्त. । माकुरु चिन्ता कस्यापि। इदमेव ते रत्नगृहम्, यस्यैव हृते त्वयैतान श्रमोऽङ्गीकर्तव्योऽभवत् । इव किल कस्या अपि गुहा या पार्श्वे गिरिं भित्त्वा निर्मितमास्ते । निर्मातृभिश्चतुरैयथात्र वात प्रकाश-श्चागच्छेत्तथा निर्मितमिव गृहम् , अत्र बहून्यपवरकान्यङ्गानि च बहु मूल्यैर्वस्तुभिरल्ङ्कृतानि सन्ति। कोट्यधिकरूप्यमित द्रव्यमत्र निहितमस्ति। समयान्तरे तत्सर्वं ते दर्शयिष्यामि । उपर्यारोहणाय बहवो मार्गास्सन्ति , येच यावच्छन्ना आसन् । प्रधानमार्गस्तु स एव यस्तुरङ्गाया अन्तिमभा-गेऽस्ति । यतो यामे गन्तु ते माता शक्ताभवत् । तयैव कृपिकया, या तेऽस्मिन् स्वर्णसपुटेऽभवत् , कवाटिकामुद्घाट्यावामत्र प्रविष्टे स्व ।

यस्य कृते त्वयैतद्दु.खमनुभूतम् , येनैव निमित्तेन तव जन्मदस्स-र्वेऽपि महतीमापदमन्वभवन् , तदेवेद नष्ट धन अद्य तव हस्तगतमभवत् । एतावत कालस्यानन्तर तवापि वृत्तान्त प्रकाशता प्राप्नुत । नासि त्वमद्य स तपस्वी भिक्षुको वा तव द्वारेण केवल रायस्तूलमिव वात्ययाथ विनाश मवयत । सर्वेऽपि तत्पानुगामिनस्ते चरणयोर्लुठयुः । इतस्त्वया न कुत्रापि परिभ्रमणीय भविष्यति । सौवर्णे सिहासने त्वमुपवेक्ष्यसि । नात्र स दीनो हीनो भवेन्द्रभूषण । अपि तु महाराजाधिराजेन्द्रनारायणात्मजस्य महाराजस्य श्रीश्रीनारायणभूपबहादुरस्य कुमारोऽसि । इतःप्रभृति श्रीमान् भूपेन्द्रनारायणरायभूपबहादुरो नामासि। अयमेव ते गुप्तो वृत्तान्त ।" इति ।

॥ इति रहस्यप्रकाशके द्वितीयभागे पञ्चदश तरङ्ग् ॥

---

## ॥ अथ षोडशं चक्रम् ॥

### ( आत्मकथा। )

०—[+]—०

मत्यद्भुतस्य तस्य मणिमयस्य गृहस्य सर्वानपि भागान्सम्यगवलोक्य देव्या राज्ञ्या सह कुटीं प्रत्यहं प्रातिष्ठे। देवीराज्ञी यथा यथाद्भुतान् रहस्य वृत्तान्तान् प्राचीकशत्तथा तथा विस्मयः कौतूहलं च मेऽभिवर्धमानमभवत्। अचिन्तितमेव कश्चिदागत्य प्रणम्यातिष्ठत्किञ्चिद्विवक्षुरिव।

देवीराज्ञी तमचलोकयामब्रवीत्—"कः! विजयो को वृत्तान्तः?" इति। विजयोऽपि सविनयं प्रत्युदैरयत्—"समीचीन एव सर्वो वृत्तान्तः, कुटी मनुष्यैरस्ति पूर्णा। तपस्विनी माता भवत एव प्रतीक्षते।" इति।

ततः क्षणमप्यविलम्ब्य झटित्याश्रममेवावामगच्छाव। द्वार एव मातरमहमपश्यम्। दृष्टमात्रमेव स मां स्नेहेनाकृष्योत्सङ्गेऽकरोत्। शिरस्युपा घ्रायैवमवदच्च—"आगच्छ वत्सागच्छ, त्वम्मे प्रमुदितन्मनमसि! दर्शनेन ते शीतं बभूव हृदयम्। नूनं स एव त्वं मे प्रियतमः पुत्रोऽसि, यं वर्षत्रयवयस्कं परित्यज्यागताहम्। वत्स त्वया विना कृताया मे रुदन्त्या परितपन्त्या एव विंशतिवर्षा अतीताः। आगच्छ तात, आगच्छ, अन्तर्गत्वा पश्य, के के तत्र सन्तीति।" इति। इत्थं वदन्त्या एव तस्या नयनाभ्यां प्रावर्तत धारयाश्रु प्रवोढुम्। अहमपि नाशकं किमपि वक्तुम्। उत्सङ्गादवतीर्याम्रतो गच्छन्त्यास्तस्याः पृष्ठतो गन्तुं प्रावर्तिषि। परिवृत्तकन्धरश्च न देवीं राज्ञीं न वा विजयं तत्रापश्यम्। न जानामि कथं कदा तावन्तर्हिताविति। द्वारान्तः पादं निदधतैव मया कश्चिद्दृष्टः, यस्य दर्शनमात्रेण दिङ्मोहमिवाहं प्रत्यपद्ये। आः! स एवायं वृद्धः, यमहं कारागृहेऽद्राक्षम्। येन च मे पत्रग्रन्थिस्स्वर्णसम्पुटश्चादायिषाताम्। एष खलु मया तत्र मृतो दृष्टः। कथमयं जीवस्त्रागतः? को वा वृत्तान्तः? किमपि हृदयं नावतरति। इत्यादिचिन्तयन्नहं तमेव वृद्धमभिमुखः पश्यन्नतिष्ठम्।

एतावत्येव मातापि मे कुत्रचिदगात्। वृद्धो मां हस्तसङ्केतेनात्मनो निकटमाहूवयत्। अहमपि धैर्यमवष्टभ्य तन्निकटमगाम्। स च प्रेम्णा महता मे हस्तावलम्ब्यावदत्— "अपि मत्यभिजानासि ? माम्, स एवाहं तव स्निग्धो वृद्धः। किमिति मां दृष्ट्वा त्वं तूष्णीं तिष्ठसि ? भविभेः किम् ?" इति। अहन्तु वदनमनुद्घाटयंस्तमेवालोकयंश्चावर्तिषि। वृद्धः पुनरब्रवीत्— "सत्यमिदं भयस्यैव स्थानम्। यः कोऽपि कदाचिन्मृतो दृष्टः, स एव चेत्पुन: कुत्रचिज्जीवन्दृश्येत, नूनं तत्र भयं भवेत्, किन्तु— वत्स नाहं तदा सत्यं मृतोऽभूवम्, केनचित्तीक्ष्णेन विषेणोपयुक्तेन मृत इवाचेतनः परमभूवम्। यदि तदा तथा नाभविष्यत्तर्हि ततो बहिर्गमनं दुरशकमभविष्यत्। तत्रैव कारागृहे मर्तव्यमभविष्यत्। वत्स! किमद्यावगतं सर्वम् ?" इति।

सर्वमिदं श्रुतवतो मे महान्विस्मयोऽजनि, अकलयं च मनसि- 'चातुरीय सर्वा देव्या राज्ञ्या एव। कुत एतावती शक्तिरन्यस्य कस्यापि' इति। इदमेव विचिन्तयन्नुपाविशं तस्य पार्श्व एव।

वृद्धोऽवदत्— "सर्वमिदं कस्य कार्यम्, अपि जानासि ? देव्या राज्ञ्या दयामय्या एवेदं सर्वं कृत्यजातम्। अस्तु, ततःपरं शृणु। कि मे नामधेयं तत्तु त्वमस्मात्पत्रादवगतमेव स्यात् ? कोऽहमस्मीति मन्ये जानासि नाद्य यावत्। न कापि हानिः, उत्तरत्र स्पष्टीभविष्यति। प्रथमत स्तस्मात्संयमिनीसदृशात्कारागृहाद्बहिरागमनवृत्तान्तमेव तावच्छृणु। यदा कारागृहात्तस्मान्निर्गमनस्य कोऽप्यन्य उपायो नालभ्यत, तदा देव्या राज्ञ्या कश्चिदन्य एवोपायोऽवलम्बितः। तस्या निकटे किञ्चिद्विषमस्ति, येन पीतेन मनुजो दिनत्रयं शववदचेतनस्तिष्ठेत्; औषधं च किञ्चिदस्ति, येनोपयुक्तेन तत्क्षणात्स पुनस्सुस्थो भवेत्। देव्या राज्ञ्या दानपत्रस्य लेखनानन्तरं तदेव विषमहं पायितोऽभवम्। अतएव पुरतस्ते मृतश्च।

तदात्वे तुभ्यमहं यदकथये तद्देवीराज्ञ्यपि न जानाति, किमुतान्ये तुभ्यं सर्वं तत्कथयित्वा विचेतनोऽहमभूवम्, त्वं च यथा मदुक्तं सर्वं कार्यं निर्वर्त्य ततः पलायथाः। ततस्तस्मात्स्थानाद्यथाहं निष्क्रान्तस्तत्कथयामि शृणु। यदहं वदिष्यामि तद्देव्या राज्ञ्या मुखान्मया श्रुतमित्यवधेहि।

यदाहं विचेतनोऽथवा मृतोऽभवम्, तदा पश्यतोहराणां हर्दीवेग यन्ती मां बहिरकरोत्, न्यधाच्च तदानीमेव मृतस्य कस्यचिन्मत्तुल्यदैर्घ्यस्य शवं मत्स्थाने, समावृणोच्च वस्त्रेण शवन्तमापादचूडम्। प्राकाशयच्च ततो मां रोगेण चिरादनुभूयमानेन मृतम्। श्रुत्वा चेमं वृत्तान्तं पश्यतोहरास्स-मागत्य शवन्तं कुत्रचिद्द्रोण्यां निधाय वस्त्रावृतमेव कस्यचिद्दूरगुहायां कुत्र चिदपातयन्। यत्राहमपवरकेऽभवं तस्मिन्सूच्यन्वेषं सम्यगवलोकितोऽपि नैवालभन्त यत्किञ्चिदपि। निराशाश्च यथागतमगच्छन्। इयमेव मे कथा। अथेदानीं त्वं त्वदीयामेव कथां शृणु। इत्युक्त्वा गोविन्दलालमाह्वयत्।

आहूतमात्र एव च गोविन्दलालो यश्शृंखलाबद्धपादेन निगळित हस्तेन रायेण सहागत्य पुरतोऽतिष्ठत्। रायं दृष्टवतो मे नाभवत्सीमानन्दस्य विस्मयस्य च जातस्य मनसि। वृद्धो हस्तेन रायं निर्दिश्य मामवदत्। " अपि प्रत्यभिजानासि। व्रजेन्द्रभूषण। क एते महान्त इति। " इति। अहन्तु घृणया महत्या राय द्रष्टुमपि नाशकम्। दृष्टमात्र एव तस्मिन् रुकम्मे शरीरे समुद्चलदिव। अवद चैवमहम्– " अलमलम्," इतोऽपि भवन्त एतमधिकृत्य किमपि मास्म पृच्छत। नाहमेनं नीचं नराधमं प्रत्यभि जानामि, अनेनैव नृशंसेन निमित्तभूतेन मया यद्यादृशं यादृशं कष्टमनु भूतं मन्ये भवद्भिश्श्रुतमेव स्यात्। एतादृशास्तु नृशंसा राक्षसानामपि कुलेषु नूनं नोत्पद्येरन्। न यमयं दुष्टो गृहीत. ; कथयत। " इति।

वृद्धस्तु चैहंसन्मामवदत्— " हहहह! व्रजेन्द्रभूषण! त्वया त्वेको चरणेन बद्धवदशब्दा उक्ता। एनमेवाधिकृत्यैतावत्कथयस्त्वं जानामि किंवत्कथयिष्यसि तमधिकृत्य, यमद्यादृशवर्षा न्वेतेति समवोधय। वत्स! सत्यमुक्तं त्वया राक्षसानामपि कुलेषु नैतादृशा उत्पद्येरन्निति। आस्ताम्, अपि दिदृक्षसेऽन्यमपि महात्मानम्? " इति।

एतावदुक्त्वा वृद्धो विजयमाजुहाव। अवदच्च रायम्– " रायाः! किमिति तिष्ठन्ति भवन्त, उपविशन्तु महता किल परिश्रमेण चिराल्लब्धं भवता दर्शनम्' इति। श्रुत्वा चैनद्रायोऽवनतशिरास्तत्रैवोपाविशत्।

एतावत्येव मम पूज्य पिता, यस्य किल हस्तपाद निगाळैन-मवर्तत, येन चाऽस्मद्गवर्यान्पुत्रवल्लालितः पालितश्च, विजयेन सह समदृश्यत। वृद्धस्तु तन्दृष्ट्वैवाब्रवीत्— " आगच्छत, आगच्छत हरिहरभवः, किमितीयद्विभ्यति भवन्त, भवादृशो हि महात्मान कुतोऽपि न बिभ्यति " इति। गोविन्दलाल चाब्रवीत्— " गोविन्दलाल किमिति विलम्ब्यते ' येऽत्रागन्तव्य सर्वास्तानानय। अद्यैव सर्वं रहस्य प्रकाशतामित्तु। " इति।

श्रुत्वा चैतद्गोविन्दलालो निष्क्रान्त। क्षणाच्च रायस्यानुचरैर्लोह शृङ्खलानिगळितहस्तपादे पुन प्राविशत्। गङ्गाधर एतेषा रक्षणे न्ययुज्यत। एतावत्येव पूजागृहाद्यायान्त्यौ देवीराज्ञी तापस्विनी माता च समदृश्येताम्। आगत्य च ते अस्माकं पुरतो नातिदूरे कुशासनयोरुपाविशताम्।

वृद्धश्चतुर्दिश सम्यङ्निरीक्ष्य गम्भीरमवदत्— " समयेऽस्मिन् सर्वेऽपि सन्त्युपस्थिता अत्र, तपस्विन्या अस्या आश्रमे सर्वथामेत्र महात्मना मेकदैव सम्मेळन कृपाळोर्भगवतो दीनेषु दयाया एव कार्य नान्यत्। सर्वानिदं सप्रार्थन पृच्छामि— यदहं वक्ष्यामि सर्वंमामुत्तरं समीचीन दास्यन्ति न वेति। ' इति।

ततः कियच्चिर तत्र निश्शब्दतावर्तत । कोऽपि किमपि नावदत् । तदा पुनस्स वृद्धोऽब्रवीत् — " हरिहरप्रभवः ! किमिति किमपि नोक्तं भवद्भिः ? रायाः भवद्भिरपि किमपि नाज्ञापितम् ? किं कारणम् ? गम्भीरभावोऽयं कदा धृतो भवद्भिः ? कथयत, मदीयानां प्रश्नानां भवन्त उत्तराणि दास्यन्ति न वा " इति ।

साञ्जलिबन्धं हरिहरोऽवदत्– " महाराजाः ! किमिति मां लज्जितं कुर्वन्ति, क्षाम्यन्तु, कृपाळवो हि भवन्तः, दरिद्रेष्वस्मासु कृपां कुर्वन्तु " इति ।

वृद्धस्सहासमवदत्–" सत्यमहं कृपालुरस्मि, किन्त्वेतादृशी कृपा न केवलं ममैव, कस्यापि न सम्भाव्यते ? हरिहर ! देवता अपीयन्न सहिष्यन्ते । अस्तु, तिष्ठत्विदं सर्वमद्य, पश्चाद्द्रक्ष्यामः । प्रथमं सर्वैरेवास्माभिर्निजो निजो वृत्तान्तो वर्णनीयः । अहमेव तावदादौ कथयामि " इति।

॥ इति संसारचक्रे द्वितीयभागे षोडशं चक्रम् ॥

---

## ॥ अथ सप्तदशं चक्रम् ॥

### ( वृद्धस्य—कथा । )

ततो वृद्ध इत्थं वक्तुमारेभे— " आसीन्मे वासः कलकत्तानगरस्य कुत्रचिद्भागे । अहमस्मि महाराजस्य नरेन्द्रनारायणस्य वंशे तस्मात्सप्तम पूरुषः । महाराजो नरेन्द्रनारायणो नवाबस्य मीर्जाफराख्यस्य समयेऽभूत् । आदावयं पञ्चसहस्रसैन्याधिपत्ये नवाबेन नियमितोऽपि क्रमेणाभिवर्धमानश्चातुर्येण योग्यतया चामात्यपदवीमलभत । तदानीं तस्य महत्प्रभिन्नं यशः मदद्वारेव चासीत । नवाबोऽप्येनमात्मनो दक्षिण हस्तममन्यत । तस्यां अप्यस्मिन्महती कृपाभवत् ।

किन्तु कालो नैकरूपो भवति । अधरोत्तरभावस्सर्वत्र भवत्येव । तत्क्रियत एव कालादनन्तरमस्मिन्नपि शनैश्चरस्य दृष्टिर्न्यपतत् । कमलाकान्तगङ्गोपाध्यायो नाम कश्चित्साधु पुरुषोऽस्य मित्रमवर्तत । एक कमला कान्त विनान्ये सर्वेऽपि नवाबस्य भृत्यवर्गा नरेन्द्रनारायणमभिद्रुह्य नवाबस्य कर्णेजपन् । महान्प्रभाव कर्णेजपवचनानामिति न मया वक्तव्यम् । तत्र वाबस्य मीरजाफरस्यापि मनस्तेषा वचनजालेपतत् । क्रमेणान्यादृशीं वृत्ति मयालम्बत नरेन्द्रनारायणे ।

सर्वमिदमनुचिन्त्य मीरजाफरस्य विपरीताचरणाद्बिभ्यन्महाराजो नरेन्द्रनारायण कमलाकान्तेन सम्मन्त्र्य निजमपार धन नीलाचलस्य कुत्र चिद्गुहाया गुप्तमन्तरधापयत् । तत उभावपि तौ निज निजमधिकार परित्यज्य कलकत्तानगरमागतो सत्याविलम्बिनौ वाणिज्यमारभेताम् । प्रतिदिन तयोर्वाणिज्यमत्युन्नती बभूव । अल्पतर एव च काले तौ महाधनिनौ समपद्येताम् । तदानीमेव नरेन्द्रनारायणेन महाराजपदव्यपि प्राप्ता । महता सुखेन शिष्टमायुः क्षपयितुमारभत ।

कतिपयेष्वेव वत्सरेषु पर लोकमगाव । अन्तिमे काले चात्मनः पुत्र श्रीकृष्णनारायणमेव दानपत्रमुखेन कृत्स्नस्य धनस्य स्वामिनमकरोत् । पक्षाघातेन च तस्य प्राणवियोगो जात । कृष्णनारायणस्तु कलकत्तास्थितस्य धनस्यैव केवल स्वामित्वमभजत । नीलाचलस्थित तेन नालभ्यत । बहु प्रयत्नतापि तेन नीलाचलस्थितस्य रत्नगृहस्य किमप्यभिज्ञान नोपलब्धम्— यतो दानशासने केवलमियदेव लिखितमासीत् , यथा— " नीलाचलस्य कुत्रचिद्गुहाया महाराजस्य नरेन्द्रनारायणस्य गुप्तधन रत्नगृहे वा स्थापितमस्ति । एतद्वश्यो यो वा कोऽपि धनमिदमन्विष्योपलभेत स एवास्य स्वामी भविष्यति " इति ।

कमलाकान्तस्य कथा शृणुत— तेऽपि मित्रस्य वियोगमसहमाना कतिपयेष्वेवाहस्सु पर लोकमगु । नरेन्द्रभूपण धगुरपुत्रेण यत्र गता वन्दीकृतोऽभूत् , तदेव कमलाकान्तस्य गृहम् । गृहमिद कमलाकान्तस्य

वशजा एवानुभवन्तिस्म परम्परया । अस्माकमत्यन्तहिता देवी वीरजा-सुन्दर्यपराभिधाना तयैव वंशं भूषयति । अस्याः पिता भैरवचन्द्रगङ्गोली नामा । पितास्या एनां बाल्ये वनलतानाम्नाह्वयतिस्म ।

तिस्र एता भगिन्यस्सहोदर्यः । इयमेव सर्वकनिष्ठा । ज्येष्ठा तरुलता रायस्य कपटचक्रे पतिता कुत्र गतेति न ज्ञायते । जनास्तु तामातें सारेण मृतां कथयन्ति । मध्यमा भगिन्यस्याश्शशिबालानाम्नी नितरामेव सुन्दर्यवर्तत । अस्यास्तस्याश्च सर्वेऽवयवाः प्राय एकरूपा दर्शकानां प्रत्यभिज्ञाने महत्कष्टमापादयन् । तस्या अपि कौमारहरणाय बहु प्रयतितमेतेन । अनभ्युपगच्छन्ती चैतदभिप्रायन्तां तस्मिन्नेव कारागृहे, यत्र व्रजेन्द्रोऽपि कियन्तं कालमवात्सीत्, न्यरुणत्सुचिरम् । अन्ततस्ता रायस्य निर्बन्धमसहमाना रायेण सह मिथुनीभूय स्थातुमारभत । तस्या अपि मृताया अद्य मासत्रयम् ।

यत्कालिकं वृत्तान्तमिदानीमहं वर्णयामि, तस्मिन्काले वीरजा सुन्दरी किञ्चिन्न्यूनाधिकद्वादशवर्षवयस्कासीत्, बाल्ये वर्तमाना रायेण सम्यग्रक्ष्यमाणा नेयं बाह्यान्वृत्तान्तान्किमप्यधिगन्तुं नाशकत् । तथापीयं बाल्यादेव कुशाग्रबुद्धिरवर्तत । गोविन्दगलस्योपदेशेनेयं पुरुषवेषं धारयन्ती बहिर्विचरितुमारभत । निजं कार्यमप्यवेक्षितुं प्रावर्तत ।

अयमेव धूर्ताग्रेसरो गर्याऽस्य.: प्रधानः कार्यकरः । अस्य च विश्वनाथराय इति नाम । भैरवचन्द्रोऽन्तिमावस्थायां निजां सर्वां सम्पदं कन्यात्रयं चैतदधीनं कृत्वाम्रियत । मृतमात्र एव तस्मिन् कृतघ्नोऽयं स्वानि नरस्सर्वमुपकारं विस्मृत्य पौगण्डावस्थायां वर्तमानाया अस्या देव्या राज्यस्यशत्रुरभवत् । सहसं पश्यतोहरान् सम्मेळ्य तेषां स्वामी च स्वयमभवत् ।

इत्थमस्मिन्नस्याश्शत्रूनां प्रतिपन्ने भैरवचन्द्रस्य भृत्येषु कृतज्ञाश्चत्वारो गोविन्दलालो गङ्गाधरो जयपालो विजयश्च नामभिरुपरि रायस्य पक्षपात मभिनयन्तोऽन्तर्गुप्तमस्या देव्याराज्यस्साहाय्यकमाचरितुमारभन्त । एतं-पामेव चातुर्येण साहसेन च देवीराज्ञी नगेन्द्रभूषणश्चाक यावज्जीवनः ।

दानीमेवैते देवीं राज्ञी वस्तुतो राज्ञीं कर्तुं शक्ता अपि सर्वस्य शासनपत्रादिकस्य उपनिकटे स्थितस्य ग्रहणायेयन्तं कालं व्यलम्बन्त । तिष्ठत्विदम् । अग्रतरश्शृणुत ।

देवग्रामवासिनो देवनारायणमुखोपाध्यायस्य स्वाली ताराकाली नाम्नी काचित्कुलटा केनाप्युपायेन रायनिकटे स्थितं सर्वं पत्रजातं निजहस्तगतमकरोत् । तच्चाचिन्तितमेव व्रजेन्द्रस्य हस्तगतमभवत् । व्रजेन्द्रस्य हस्ताद्देवीराज्ञी तदेतत्पत्रजातमुपलभ्य रायप्रभृतीन्बन्धकरोत् । इयतः कालादनन्तरं देव्याराज्ञ्या अयं वृत्तान्तः प्रकटतामयासीत् । सत्यमद्य देवीराज्ञी महाराज्ञी संवृत्ता ।

अथेदानीं व्रजेन्द्रमधिकरोमि । श्रीकृष्णनारायणादनन्तरं यावन्तो महाराजा अभवंस्तैस्सर्वैरपि रत्नगृहमन्वेषमाणैस्सफलता नान्वभूयत । अन्ततो मम तातपादेन वैकुण्ठवासिना महाराजेन नरनारायणभूपबहदुरेण नीलाचलः परमन्विष्यतोपलब्धः । रत्नगृहस्य कुञ्चिका–हरीकजटितमेकमङ्गुलीयकं च लब्धम् । रत्नगृहन्तु तेनापि नोपलब्धम् ।

यदाहं, चत्वारिंशद्वर्षदेशीयोऽभवम् , तदा तातपादस्य मे संसारेऽस्मिन्नतितरां वैराग्यमजायत । एकदा च तातो मे मामेकान्ते नीत्वा दानपत्रमिदं स्वर्णसम्पुटं च मह्यमदात् । मां च सिंहासने संस्थाप्य पत्न्या सह वनं प्रातिष्ठत ।

दुरात्मायं हरिहरनन्दी तदासीत् ममामात्यः । अयमपि रत्नगृहसम्बन्धि सर्वमिदं वृत्तान्तजातं जानातिस्म । अस्यैव कुमंत्रेण निजमेकं वत्सलं पुत्रं व्रजेन्द्रभूषणं वर्षत्रयमात्रवयस्कम् , सर्वं च राज्यमेतस्मात्कृत्वा रत्नगृहान्वेषणाय निजपत्न्या सह गृहात्प्रस्थितोऽभूवम् ।

गङ्गायां नौकामार्गेण गच्छतामस्माकमेकं सप्ताहं निरुपद्रवं व्यतीतम् । अचिन्तितमेव कस्मिंश्चन दिवसे सायं घनघनघटाच्छन्नमभून्नभः । वृष्टिश्च धारया निपतितुमारभत । नौकानीरैः संमज्ज्य तटे नौकाया वयन्यवरुणाम । नौकायामुपविष्टेष्वेवास्मासु जृम्भिकामुत्सृजत्सु तस्यामेव रात्रौ कियत्येव दूरे नाविकैः कश्चिन्महापोतो दृष्टः , यो महता वेगेनास्मदभिमुखमेव प्रयासीत् ।

नाविकाश्चोच्चैरेवमुदघोषयन् – " महाराज ! सावधानो भवतु, न जानीमः कोऽयमुपद्रवस्समायातीति " इति। यद्यपि तदानीं नासीन्न्यूनता भृत्यानाम्, तथापि, न जानामि, केन वा कारणेन प्रकाशान्तं दृष्ट्वैव एव मे हृदयं कंपितुमारभत।

प्रथमतो रात्रिः, तदुपरि देशान्तरम्, ततोऽपि स्त्री सहास्ते, एतादृश्यामवस्थायां मम हृदयमकम्पतेति किमत्राश्चर्यम् ? स च प्रकाशः पश्यत एव मे समीपमुपावर्तत।

प्रकाशे च तस्मिन् बहुभिरस्त्रधारिभिः पूर्णा काचिन्नौकादृश्यत। समीपमागतायामेव तस्यां पञ्चषाश्शब्दा नालीकयन्त्रस्याभवन्, अस्मदीयनौकास्थाश्च पञ्चषा धीवरा आहता गङ्गायां न्यपतन्। ततोऽस्मदीयैरपि भृत्यैर्नालीकयन्त्रैर्गुळिका अमुच्यन्त। तत उभयपक्षस्थैरपि मुच्यमाना गुळिका आकाशं क्षणं निरवकाशमिवाकुर्वन्। छिन्धि, छिन्धि, भिन्धि भिन्धि, गृहाण गृहाण, बधान बधान, इत्यादयश्च शब्दास्सर्वतोऽश्रूयन्त।

एवमस्मिन्प्रवर्तमाने तुमुले संघर्षे पत्नी मे सन्त्रस्ता मूर्छिता मदीय एवोत्सङ्गे न्यपतत्। किं करोमि ? अनिच्छन्नप्यहन्तामादाय नौकायां अन्तश्छन्नोऽतिष्ठम्। उपरि च महद्युद्धं प्रावर्तत। अन्ततस्सर्वेऽप्यस्मदीया भृत्या अम्रियन्त। पश्यतोहराश्च ते कमपि सम्मुखमायान्तमपश्यन्तो मामिवान्वेष्टुमारभन्त।

परमात्मन्येव विमुखे संवृत्ते कथमहमात्मानं सञ्छादयामि ? अन्विष्यं श्यामेन राय प्रथमतो सम्मुखमागतः। तदानीमपि पत्नी मे मूर्छितैवासीत्। राय दृष्ट्वैव एव मे महान्क्रोधस्समजायत, सर्वाण्यङ्गान्यग्निकणा इव प्रावर्तन्त। राय मुखे नासिकायां वज्रसन्निभेन मुष्टिना प्राहरम्। अभिहतमात्र एव स भूमौ न्यपतत्, पुनश्चोत्थितश्च मां दण्डेन शिरसि प्राहरत्, तेनाहं मूर्छितो धरण्यां न्यपतम्।

यदाहं लोचने उदमीलयं तदात्मानं कुत्रचिदन्धकारावृतेऽपवरके बन्दीकृतमपश्यम् । आत्मनो दशामालोक्य बहुहमरुदम् । प्राणप्रियां विचिन्तयश्च नितरामेव दुःखितोऽभवम् । एतावत्येव मम पुरतस्समागत्यार्य राय इत्थमवदत् — " नीलाचलस्याभिज्ञानं न चेत्त्वं मह्य कथयिष्यसि अनमिव त्वां मारयिष्यामि " इति । श्रुत्वा चाहमिदं मूक इवातिष्ठम् । रत्नगृहस्याभिज्ञानावगमायायं मा बहुव निरबध्नात्, अथापि न मयास्मै किमप्युक्तम् । दैवाचास्य दृष्टिर्मत्कटिस्थयोर्दानपत्रस्वर्णसम्पुटयोर्नापतत् । कदाचिच्चास्य दृष्टिं वञ्चयता मया दानपत्रं स्वर्णसम्पुटं च तस्यैव कारागृहस्यैकतः कोणे न्यधीयत भूमौ गुप्तम् ।

दुष्टस्यास्य कारागृहे मया विंशतिवर्षा यापिताः । इयद्दिवसानन्तरं मया युष्मन्मुखानि दृष्टानि । अयमेव मे वृत्तान्तः । इतः परं तपस्विनी देवीयं यदिच्छति तत्कथयतु । " इति ।

॥ इति संसारचक्रे द्वितीयभागे सप्तदशं चक्रम् ॥

## ॥ अथाष्टदशं चक्रम् ॥

### ( तपस्विन्याः कथा )

अथ तपस्विनी गाथात्मनः कथामित्थमवर्णयत् —

" पश्यतोहरैर्नौकायामागत्य यादृशोऽनर्थः कृतस्स तु महाराजस्य मुखाद्भवद्भिश्श्रुतः । ततो यदनुभूतं कष्टं मया तत्सर्वं वर्णयामि, शृणुत ।

यदाहं सचेतनाभवम्, तदात्मनः पुरतस्तिष्ठन्तं रायं महाराजं च भूमौ पतितं मूर्छितं रक्तप्लावितशरीरमपश्यम् । आर्यपुत्रस्य तं दशां दृष्ट्वा दष्टमत्या एव मे हृदयं व्यदीर्यत । ततस्साक्रन्दमहं रोदितुमारभे । रुदन्तीमेव मां वज्रहस्तेन गृहीत्वासौ रायो यावदुपमर्दति, तावदात्मनः पातिव्रत्यं रक्षन्ती रायादपि तस्य पापीयसो बीभत्समाना किञ्चिदप्यविचार्य क्षणमप्यविलम्बमाना पूरे गङ्गाया आत्मानमपातयम् ।

मां गृहीतुकामा द्वित्रा मामनु गङ्गायामपतन् । वाह्य देवाभ्यस्तप्लव नाहं महत्यन्धकारे तत्र तेभ्य आत्मानं रक्षन्ती प्लवमाना च दैवाचेष दृष्टिपु नापतम् । शनैश्च गत्वाहं नौकायाः पृष्ठतो यत्किञ्चिदवलम्ब्यावर्तिषि । ते च गृहीतदीपास्ततस्ततो इतोऽन्विष्य मामलभमाना जले निमग्नां मृतां च निश्चित्य गताशङ्का नौकामुन्मुक्तबन्धनामकार्षुः । गच्छन्तीं च नावमन्वहमपि लम्बित गात्रा प्रावर्तिषि गन्तुम् ।

कृत्स्नां रात्रिमेवमेव नौका गच्छन्त्यवर्तत, अहमपि तामनु । प्राभतिकश्चेतिमाश्चितायां च पाकशासनदिशायां नौका सा कुत्रचित्तीरे संलग्नाभवत् । तदात्वे चाहं नितरामेव परिश्रान्ता किंकर्तव्यताविमूढा चाभवम् । कथंकथंचिदवष्टब्धधैर्या च भगवन्तमनुस्मरन्ती तेषां च पश्यतो हराणां दृष्टीर्वञ्चयन्ती मन्दम्मन्दं तीरमारुह्य वृक्षवृन्देष्वन्तर्हिताभवम् । सर्वतोऽपि भगवतो गभस्तिमालिनो बालारुणैः किरणैः प्रकाशतामुपगतेऽपि वने असूर्यम्पश्यं तत्स्थानमन्धकारावृतमेवाभूत् घनतया वृक्षाणाम् । चिरमवस्थाने कदाचित्ते मां पश्येयुरिति भयेन ततोऽप्युदचलम् । निरोपतो जला र्द्रस्य वसनस्य भारेण चिरं वारिण्यवस्थित्या जडीभूतैश्चाङ्गैरेकैकं पदमपि कष्टेनागच्छम् ।

भयेन तु द्रुतगतिरहं पुनः पुनः परिवृत्तकन्धरा तानेव पश्यन्ती तृणेऽपि विचलति तानेवागतानुद्भावयन्ती सुदूरमपाक्रमम् । दीर्घं च पन्थानमतिक्रम्यासहनाच्च श्रमस्य कुत्रचित्तरुमूले समुपाविशम् । श्रमेण शिथिल गात्रा च चिरमुपवेशनासमर्था न्यविशम् । निविष्टमात्रायामेव निद्रयाभिभूता भवम् कियन्तं कालमस्वपमिति नेदानीं निश्चित्य वक्तु प्रभवामि । विगत निद्रा च चक्षुरुन्मीलयन्ती पार्श्वे समुपविष्टामग्निना जडीभूतं मे गात्रमुष्णयन्तीं च काञ्चित्स्त्रियमपश्यम् । भयेन च "कुत्राहमस्मि" इत्युच्चैराक्रन्दन्तीं माम् · सा " माभैषीर्माभैषीः , त्वदीया कष्टामिमां दशां निरीक्ष्य

करुणया त्वामहमुपचरानि, अस्ति मे समीप एव कुटीरम्, निनीषामि च त्वामहं तत्र, अपि शक्नोषि गन्तुम्" इति मधुरमब्रवीत्। अहन्तु– "गच्छावो मातर्गच्छावः, कुत्र तावत्तावकं गृहम्? अहमस्मि महत्यां विपदि पतिता, रक्ष मातर्माम्, पश्चात्तु वृत्तान्तं मे कथयिष्यामि, काममहमस्मि समर्था त्वामनुगन्तुम्" इति प्रत्यब्रवम्। श्रुत्वा च मामकीनं वचस्सा समुत्थिता सह मया प्रापत्निजं गृहम्।

इद कस्यचित् कृषीवलस्य समृद्धस्य समीचीनं गृहम्। द्वावेव परं वसतोऽत्र गृहे– एकः कृषीवलः, अन्या च तस्य पत्नी। अनयोर्द्वे कन्ये परं स्तः। उभे अपि कन्ये एव गृहीतपाणी। यस्मिन् दिने तत्राहमगच्छम्, तस्मिन् दिने तयोरेकापि तत्र नाभवत्। उभे अपि श्वशुरगृहान् गते अभूताम्। तौ दम्पती मां महतोपचारेण निजे गृहे समवासयताम्। सुखेन तत्र कतिपयान् दिवसानयापयम्।

अतिक्रामत्सु दिनेष्वेवमेकदा कृषीवलस्य तस्य ज्येष्ठा कन्या हेमवतीनाम्नी श्वशुरगृहात्प्रतिनिवृत्तागमत्। सा च सुन्दरसर्वावयवा दर्शनीयतमा सुशीला। विवाहोऽपि तस्यास्तादृशाभने सम्पन्ने कुलेऽभवत्। अचिरात्तस्या मम च मैत्री समजायत। हेमवती मयि निर्व्याजममायं नितरां स्निह्यति, अहमपि तस्यां स्निह्यामि कामम्।

कृषीवलेन चार्यपुत्रस्यान्वेषेण बहु प्रायति, परं तस्य कोऽपि वृत्तान्तो नावागम्यत। अस्तु — यर्हि तर्हि तत्रैव कृषीवलगृहे कालं यापयन्त्यवर्तिषि।

मध्याह्नात्परं यदाहं हेमवती चैकत्रोपविशावस्तदा हेमवती पतिगृहवृत्तान्तं कथयेत्। अहमपि प्रेम्णा शृणुयाम्। एकदा तस्याः कथयन्त्या एव मुखादिदमश्रौषम्– "मच्छ्वशुरग्रामस्य नीलमज्ञस्य निकट एव नीलो नाम कश्चिदस्ति पर्वतः, तत्रैव पर्वते कस्यापि राज्ञो गुप्तं धनं यत्र कुत्रचिन्निहितमस्ति– इति जनाः कथयन्ति" इति।

श्रुत्वाचेदं वचनं तस्या महान्मे समजन्यानन्दः। तस्य नीलाद्रेर्दिदृक्षा च महती समुद्भून्मनसि। हृदयगतमिममभिप्रायं बहिरप्रकाशयन्ती हेमवत्या श्वशुरगृहप्रस्थानसमयं प्रतीक्षमाणातिष्ठम्। हेमवतीं विनाहं मां विना हेमवती च क्षणमपि स्थातुं न शक्नुवः।

एतावत्येव हेमवत्याश्वशुरगृहात्तस्याश्वशुरो नितरां रुग्ण इति पत्रिका समागता। हेमवती च श्वशुरगृहं गन्तुं समनह्यत्। मां परित्यज्य गन्तुमशक्नुवाना च मामपि सहगमनायान्वरुन्ध। अहमपि सम्यक्समवसरं समुपस्थितमवगच्छन्ती तया सह गन्तुं सन्नद्धाभवम्। न च कोऽपि मां प्रत्यषेधत्।

शोभने समये हेमवत्या सह प्रस्थिताहन्तस्याश्वशुरगृहं प्राप्य सुखेन कालं यापयन्त्यवर्तिषि। नीलाचलदिदृक्षा तु दिनेदिनेऽभिवर्धमानैवाभवत्। हेमवत्या मन्त्रयित्वा सहैकेन भृतकजीविनावामुभावपि नीलाचलमगच्छाव।

नीलगंगग्रामान्नीलाचलः क्रोशत्रयदूरेऽवर्तत। घण्टाद्वयपरिमित एव काले नीलाचलं प्राविष। स तु सहागतो भृतकजीवी साधु सर्वानपि पार्वतान्प्रदेशानेकैकमदर्शयत्। दर्शयन्नेव स यदा दक्षिणभागस्थमत्युन्नतं शिखरं प्रापत्तदैवं प्राह— "देशोऽयं महाभयङ्करः, अस्यैव शिखरस्य समीपे कुत्रचिदस्ति काचिद्गुहा, यस्यां कस्यापि राज्ञो महद्धनमस्ति निहितम्, अथ यावद्बहवस्तदन्वेषणायागताः, परमेकोऽपि सफलमनोरथो नाऽभवत्।" इति।

श्रुत्वा चेदं मम महानाश्चर्यसमजनि। कियद्दूरं गत्वा च स पुनरवदत्— "आगच्छतम्— अन्यदेकमद्भुतं प्रदर्शयामि, पश्यत कोऽयं भयानको गर्तः!" इति। श्रुत्वा चेद सत्यमेव कंचिच्छुष्कैस्तृणपर्णादिभिरापूर्णं गर्तमपश्यम्। भूमिस्तु तत्र समैवाभूत्। दृष्ट्वा च तं गर्तं 'नूनमिदं कस्या अपि गुहाया मुखम्' इत्यतर्कयम्। निजमभिप्रायं मनस्येवान्तरधारयम्। सर्वं च स्थानमवलोक्य सूर्यास्तमयात्पूर्वमेव गृहान् वयं प्रतिनिवृत्ता अभूम।

तस्यां रात्रौ क्षणमपि निद्रा नागता। नीलपर्वतस्य दक्षिणशिखरस्य सुरङ्गायाश्च स्मरणं पुनःपुनरभूत्। क्रमेणात्यक्रामत्सप्ताहं परं प्रयोजनपर्यवसायिनी कापि घटना न समभवत्। हेमवत्याश्श्वशुरे नीरोगे सुस्थे च सम्पन्ने पुनस्तस्याः पितृगृहगमनचर्चा समुदभवत्। किमहमत्रैव तिष्ठेयम्, अथानया सहास्याः पितृगृहं गच्छेयम्, इति मनसि विचारस्समभवत्। सुबहुविचारानन्तरं च नीलगङ्ग एवावस्थानं युक्तं निरचिनवम्।

तत्र कार्ये विघ्नाभावाय कश्चिदुपायोऽपि मे मनसि समस्फुरत्। एकदा तमेव भृतकजीविनमेककम्, येन सह पूर्वमगच्छम्, सहादाय तमेव नीलाद्रिमगच्छम्। तृणपर्णपूर्णं तं गर्तम्, यमहं कस्याश्चित्सुरङ्गाया मुखमतर्कयम्पूर्वम्, पुनस्सम्यगवधानेन चिरमवलोक्य तत्रैव कस्यचित्कुटीरस्य निर्माणं कर्तुमैच्छम्। निजमभिप्रायं तस्मै भृतकजीविने समावेद्य कुटीरनिर्माणाय तमाज्ञापयम्।

ततः परस्मिन्नेव दिवसे कुटीरनिर्माणमारभ्यत। सुरङ्गाया मुख एका, अन्यत्र च द्वे, इत्याहत्य तिस्रः कुट्यो निरमीयन्त सांगणाः। कार्येऽस्मिन् हेमवत्याः पित्रा बह्वाचरितं साहाय्यम्। सुरङ्गापि कियद्दूरं तेन निष्कासिततृणपर्णा शुद्धा च कारिताभवत्। सुरङ्गायाश्शोधनसमये कोऽप्यन्यो विघ्नस्तु नाजायत, परं द्वित्रदिनपर्यन्तं सर्पाणामुपद्रवो विशेषतो वर्तत। तत्र देशे वर्तमानानां कोलनामकजातिभवानां साहाय्येन सोऽप्युपद्रवो नष्टोऽभवत्। ते खलु सर्पभक्षका न केवलं सर्पेभ्यो न बिभ्यति, परं तुष्यन्त्यपि तान् दृष्ट्वा। एते सुरङ्गां सुदूरं शुद्धामकार्षुः। यदा तेभ्यश्श्रुतं नेतःपरमत्र सर्पा अन्ये वा दुष्टा जन्तवस्सन्तीति, तदा शोधनकार्यं समापितं मया।

हेमवती हेमवत्याश्श्वशुरो वा नात्र कार्ये मात्रयापि बाधामदात्, प्रत्युत सर्वदा सर्वथा सर्वस्मिन्नपि कार्ये मम तौ साहाय्यकमेवाचरताम्। ताभ्यामेव रक्ष्यमाणोऽहं सुखेन तत्रावसम्। सुरङ्गामुखस्था कुटी मया पूजागृहमक्रियत। बहिस्सन्देहात्तस्य कस्यापि वस्तुनोऽभावान्न कोऽपि समदिक्षत्।

ततस्स्वयमेवाह सुरङ्गाशोधने प्रावृतम्। द्वित्रेषु मासेषु कृत्स्नापि सुरङ्गा मया शोधिताभवत्। सुरङ्गाया तत्र तत्र स्थित वृक्षगुल्मादिकमपि मयैव छिन्नमभवत्। सुरङ्गा तु सर्वत्रान्धतमसावृताभूत्। प्रकाशस्तु नाम मन्त्रेणापि तत्र नासीत्। बहवो दण्डदीपा मया निर्मिता, तेषामेव प्रकाशे गतागत मया क्रियमाणमवर्तत।

सुरङ्गाया अन्तिम भाग प्राप्तया मया अयोमय्या कवाटिकया पिहित मयोमय द्वार दृष्टम्। कुञ्चिकाया अभावात्तालयन्त्रमुद्घाटयितुमशक्नुवन्ती दुर्बलतया कवाटभेदनेऽप्यसमर्था इयन्त परिश्रममात्मनो व्यर्थम्मन्वाना कुटीर प्रति निवृत्ताभवम्। किं करोमि, कथमुद्घाटयामि तालयन्त्रम्, इत्येव चिन्तयन्ती चिर कालमयापयम्। परमदयालुर्भगवान् यदा कदापि वा मनोरथ मे पूरयेदेव नूनमित्याशा पर हृदये परिवर्तमानाभवत्।

मन्ये सार्धो मासोऽतीतस्स्यात्— एकदा इयमेव देवी राज्ञी बालकरूपमतिच्छन्ना मम पार्श्वमागात्। अनया निजे कृत्स्नेऽपि वृत्तान्ते वर्णिते महानेव ममानन्दस्समजनि। सापि कुञ्चिका, यस्याः कृते मयार्धमायुः कष्टेन यापितम्, अस्या एव मयालभ्यत। कुञ्चिकाया लाभेन कियानानन्दो मे समभूदिति नानेन वदनेन ह वर्णयितु शक्नोमि। कुञ्चिका ता गृहीत्वा यष्टिदीपहस्ताऽहं सुरङ्गा प्राविशम्। बहो कालात्पूर्वं सङ्घटिततया तालयन्त्रमुद्घाटयितु तदात्वे नाशकम्। चिर प्रयस्यन्त्या च मया बहुदिनानन्तर तालयन्त्रमुद्घाटितमभूत्।

उद्घाटितेऽपि तालयन्त्रे विवृतकवाटेऽपि द्वारे मनोरथो मे न सफलोऽभवत्। यतस्तदनन्तरं द्वितालयन्त्र पिहितकवाटमन्यद् द्वारमासीत्। तदेव च द्वार श्रीमता रत्नगृहस्य द्वारम्। 'कुतोऽस्य तालयन्त्रस्य कुञ्चिकामुपलभेय' इति महती चिन्ता समवर्तत। इयति परिश्रमेऽङ्गीकृतेऽपि मनोरथेन न फलितम्। हृदङ्कुरिताऽऽशा हृदय एव व्यलीयत। निराशा नाम भूत्वा पुनः कुटीर प्रतिनिवृत्ताभवम्। देवी राज्यप्यगात्। अतिचक्रमुर्दिवसाः क्रमेण। इदमत्र वक्तव्य विस्मृत मया— सुरङ्गा सा पर्वतस्यान्तरन्तरेव सुदूर निर्मितासीत्— तेन पर्वतगमनागमनयोर्महदेवानुकूल्यमजायत।

मासो मास एको व्यतीतस्स्यात्, एकदाहं हेमवत्याश्श्वशुरगृहात्प्रति निवर्तमानाचिन्तितमेव मार्गे पतितं चेतनमेकं कुमारमपश्यम्। समीप ग्रामवर्तिवत्या च मयायमेव नगेन्द्रो लब्धः। एकाकिन्यहमेवैन कथञ्चिदाश्रि दत्रानयम्। सप्तदिवसानन्तरं सचेतनोऽयमभवत्। यदास्यैव मुखादस्य वृत्तान्तो मया श्रुतस्तदा सन्देह इव समजायत। मनस्यचिन्तयं च– " ममापि वत्सो मे राक्षमाना हस्ते निहितः, कृपया भगवतो यदि सोऽद्या वधि जीवति नूनमेतत्तुल्य एव स्यात्।" इति।

शशाङ्कनिभमस्य वदनं पश्यन्त्या मे दिनेदिनेऽस्मिन्प्रीतिरभ्यवर्धत। यदाय नगेन्द्रो नीलाद्री पर्यटन्दृष्टस्तदा मे सन्देहोऽधिकोऽभवत्। नगेन्द्र नीलाचले किं करोतीति ज्ञातुकामाहं सुरङ्गया पर्वतं गत्वाऽस्य सर्वं कार्य जातं निरीक्षमाणावर्तिषि। अयं तु प्रतिदिनं नीलाचलं गत्वा यत्किञ्चि– दन्विष्येत्। एकस्य तु वृत्तान्तस्य मया विस्मृतं प्रथमतः कथनम्, तमि- दानीं कथयामि–यदा प्रथमदिने मूर्छितमेनमाश्रममनयम्, तदास्य निकटे स्वर्णसम्पुटो मया दृष्ट, वस्त्रखण्डानि च कानिचित्पत्राणि। स्वर्णसम्पुटस्य पत्राणां च प्रयोजनं किमपि नाज्ञायत मया, यत इदं सर्वं पूर्वं महाराजस्य निकटे कदापि मया न दृष्टम्।

इत्थमावापुत्रयोरावयोरत्र कालं यापयन्त्यो. पुनर्देव्या राज्ञया दर्शनं मलीयत। अनयागतया नगेन्द्रस्य सर्वानपि वृत्तान्तान् श्रावितहम्। यदा चाहं नगेन्द्रमेव निजं प्रियं पुत्रमवागच्छं तदाले जातस्यानन्दस्य तु नास्त्यवधिः। पूजागृहमन्तदर्त्तार्गळकपाटं कृत्वा पर्वतं सुरङ्ग्याहमगमम्। अत्रान्तर एव देवी राज्ञ्यपि मया समगमत्। एतावत्येव झञ्झानिलेन सह महती वृष्टिरारब्ध वर्षितुम्। अशनिपातश्चाभवत्। नगेन्द्रं पर्वतशिखरं गतमनुचिन्त्यावां नितरां चिन्ताकुले अभवाव। तत इतस्ततमन्वेषितुं च प्रा- वर्तिष्वहि। कदाचिदाश्रमे प्रतिनिवृत्तस्स्यादिति सम्भावनया तत्रावेक्षितुं देवीं राज्ञीं तत्रैवावस्थाप्याहमाश्रमं प्रत्यागच्छम्।

प्रविशन्त्यैव मया बहुभिर्जनैः पूर्ण आश्रमोऽवलोकितः । क इमे तपस्विन्या अकिञ्चनाया ममाश्रममागताः ? किं वा चिकीर्षन्तीति विचिन्त यन्त्यामेव मयि हेमवत्याश्श्वशुरेण तेषां सर्वोऽपि वृत्तान्तो वर्णित । श्रुत्वा च तेषां वृत्तान्तमार्यपुत्रस्य चरणयोस्सङ्गेनाश्रुबिन्दुभिरिशरो मया निहितम्। अनुभूताश्च सर्वे क्लेशा एकदैव व्यस्मर्यन्त ।

तत्रापि व्रजेन्द्रमपश्यन्त्यहं पर्वतशिखरं प्रति न्यवृतम् । विचिन्वन्ती च यत्र व्रजेन्द्रो मूर्छितः पतितोऽभवत्तत्रागच्छम् । देवीं राज्ञी च तत्रैव कत्रात्यन्तव्याकुला जान्वोश्शिरो निधाय रुदन्तीमपश्यम् ।

प्रथमतोऽहमपि व्रजेन्द्रस्यावस्थामवलोक्य व्याकुलाभवम् । अथापि क्षणादात्मानमवस्थाप्य धैर्यं चावष्टभ्य देव्या राज्ञ्यास्साहाय्येन व्रजेन्द्र रत्न गृहमनयम् ।

बहुषूपायेष्वनुतिष्ठितेषु परेद्यवि प्रातरयं चेतनामध्यगच्छम् । सचेतने चास्मिन्महाराजाय ज्ञापयितु पुनराश्रम प्रत्यागच्छम् । स्वर्णसम्पुटे या कुञ्चिकावर्तत , तयैव रत्नगृहद्वारकवाटिकायास्तालयन्त्रमुद्घाटितम् ।

॥ इति ससारचक्रे द्वितीयभागे अष्टादश चक्रम् ॥



## ॥ अथ एकोनविंशं चक्रम् ॥

### ( देव्याराज्ञ्या वृत्तान्तः )



वृद्धस्तावदेवमवदत् " या किलान्नपूर्णाया अपरोवतार इव, यामहं महालक्ष्म्या एकमंश कथयन्नातिशयरक्ता भवामि , यया किल विलक्षणन बुद्धिबलेन बहूना प्राणा रक्षिता , यस्यै रत्नपूर्णां वसुमतीं कृत्वा प्रतिपाद यन्तोऽपि वयं न कृतप्रत्युपकारा भवाम , यस्याश्च मया लब्धास्सर्वेऽप्यु- दन्ता. , यस्या एव प्रभावेन मुषितो मे वत्सो गुप्त च रत्नगृह वियुक्ता च प्राणप्रिया मया प्राप्ताः , यस्या लोकदुर्लभास्सर्वेऽपि गुणा ऐकाधिकरण्य

भजमाना नियमन्ति, सेय दयामयी देवी राज्ञी कथयत्वात्मनो वृत्तान्तान्, वर्णयतु व्रजेन्द्रभूषणरक्षणोदन्तम्, सर्वेऽपि मे सभासदस्समुत्कण्ठिता प्रती क्षन्ते तदीय वचनसुधारसं पातु दत्तावधाना ।" इति ।

श्रुतवत्याश्चेव देव्या राज्ञ्या लज्जया मुखमण्डलमारक्तमभवत्। अव-नतकन्धरा च भूमिमालोकयन्ती क्षणादेवमारेभे वक्तुम्—

"मदीयतातपादादीनां वृत्तान्तास्तु महाराजेन वर्णिता पूर्वमेव, अथाह विजानामि यत्किञ्चिदवशिष्टम्, तदेव तावन्नुर्णयामि । बाल्य एव मे मातापितरौ यशश्शेषतामभजताम् । सर्वज्येष्ठभगिन्या विषये किमप्यह न जानामि । अह मध्यमा भगिनी चेत्यावां गृहे बन्दिनीवदवर्तिष्वहि । इम मेव राय तातवज्जानन्ती बृहन्मातुलशब्देन सम्बोधयन्ती चासमहम् । आ-वयोः पालनपोषणभार एतस्यैवोपरि निहित आसीत् । अयं साक्षात्पापस्य परा मूर्तिरिति परस्तोहराणां समूहस्य कस्यचिदय नेतेति च विदित मम तदानीमेव । बन्धुवर्गेषु कोऽप्यस्मत्निकटमागन्तुमवसरमेव न लभेत । राय एव सर्वथावयोर्नियन्ता भूत् ।

यदा मम मध्यमा भगिनी शशिबाला पूर्णयौवनाजायत, तदा मा-तुलस्यास्य मनश्चञ्चलतामभजत् । अचिन्तितमेकस्मिन् दिने शशिबालान्त र्हिताभवत् । अह तु बहुरुदम्, मातुलस्य चरणयोरपतम्, अथापि किमप्यनेनोत्तर न दत्तम् । तदात्वे चाह चतुर्दशवयस्काभूवम्, अतएव भगिन्या किमपि साहाय्यमाचरितु नाशकम् ।

एकदा रायो मामेवमवदत्—शशिबालयाः कृते किमित्येव व्या-कुला भवसि । तस्या समीचीने कुले पाणिग्रहो जात, न चिरात्त्वमपि ता द्रक्ष्यसि । त्वमपि तावदिदानीं विवाहयोग्या दशामसि प्राप्ता । इत पर विना पाणिग्रहमवस्थापन ते न युज्यते । अस्ति कश्चिद्वरोऽपि त्वदर्थमन्विष्ट । इतश्चतुर्थेऽह्नि भविता ते पाणिग्रहः । विवाहस्तु यद्यपि भविष्यन्ति नूनम्, परं त्वया छन्नयावस्थेयम् । वरस्य कन्यायाश्च सम्मेलनं न भविष्यति,

पाणिग्रहो मे भभूवेति मनस्येव त्वया ज्ञेयम् , विवाहदिवसे यथा त्वं मदिच्छाविरुद्धं किमपि न करिष्यसि—तथाह त्वा कुत्रचिदपवरके निधास्यामि। विवाहकार्ये निर्वृत्ते वरे च प्रतियाते गृहं त्वामपवरकाद्बहिर्मोक्ष्यामि "। इति। रायस्य वचनानां नाशकं भावमह ज्ञातुम् पर यथा सोऽवदत्तथैव सर्वं कार्यं निर्वृतम्।

बहिस्तु विवाहदिने महान् समारोहोऽभवत् , गृहाभ्यन्तरे तु न कोऽपि विशेषः , यदाहं मातापितरावनुचिन्त्य रुदन्त्यभवम्, तदा मध्यमा मे भगिनी शनैश्शनैरागत्य मत्पार्श्वे समुपविशन्तीमपश्यम्। तत उभावप्यावा चिरात्सम्मिलिते सुचिरमरुदिव। भगिन्या एव मुखात्ता रायेण सह मिथुनी भवन्तीं धर्मभ्रष्टामवगत्य महद्दुःखिताभवम्। आत्मनोऽप्येतादृशीं दशां सम्भावयन्ती च महद्भीताभवम्।

विवाहदिनात्पूर्वस्मिन्नेव दिनेऽह कुत्रचिदपवरके बन्दीकृताभवम्। विवाहदिनात्त स्मिन् दिने वरे स्वगृहं यातेऽहमुन्मुक्ता च। भगिन्यास्तु तत पर दर्शन नाभवत्। क्रमाज्जग्मुस्सप्ताहदिनानि , क्वापि नवीना घटना न समजनि।

गोविन्दकालोऽस्य पितुर्मे प्रीतिपात्रं भृत्यः, अयमेव तस्मिन् काले मम परमस्सहायोऽभवत् , अस्यैवानुमतेऽह पुरुषवेषमधारयम् , रायेणात्र कोऽपि विरोधो न कृतः , प्रत्युत प्रसन्नोऽभवत्। बाल्य एवास्माक भगिनीना गानवादनादिष्वभ्यासो रायेण कारितोभूत्। ज्येष्ठभगिन्यास्तु विषयेऽह किमपि न जानामि। पर सापि समर्थाभवत्तत्रेति श्रुतं मया। मया तु मध्यम भगिन्यैव सहाभ्यासः कृतः।

विवाहदिनात्सप्तसु दिवसेष्वतीतेष्वाचिन्तितमेव समागत्य शशिबाला वदत्' अद्य मन्ये वरः पुनरपि समागमिष्यत्यत्र, पुरतस्तस्य त्वया न गन्तव्यम्, रायस्येयमाज्ञा। मयैव वधूवेषेण तस्य पुरतो गन्तव्य भविष्यति। येन केनाप्युपायेन विषं पाययित्वा स मारयितव्यश्च। कारण तत्राह न जानामि।" इति। एतावदुक्त्वा शशिबाला निरगात्।

मम तु मनसि महती पीडा समजायत। अचिन्तयं चैवमहं मनसि– " को नाम तपस्वी दुरदृष्टशाली मम भर्ता, यो न चिरात्समयमिनीं यास्यति! " इति। ततश्चाहं गोविन्दलालेन सम्मन्त्र्य प्रभुः प्राणरक्षाकेनाप्युपायेन कर्तव्य निरचिनवम्। गोविन्दलालस्य निकटे किमपि विषमस्ति, यस्य गुणाः पूर्वमेव वर्णिताः। ततो गोविन्दलालस्तथा प्रायतत, यथा तदेव स्वनिकटवर्ति विषं स पायितस्स्यात्।

बालवेषधारिण्या मया स दिवसः कथकथचिद्यापितः। अर्धरात्रे कोणवर्तिन्यपवरके भगिन्यास्सल्लपन्त्याश्शब्दश्श्रुतः। सावधानया कवाटरन्ध्रेण यन्मया दृष्टम्, तदिदानीं न वर्णयितुं शक्नोमि। निनामेव भगिनी शशिबालां मम पतिं विषमिश्रं भक्ष्यम्, यत्र गोविन्दलालेन तदेव विषं सयोजितमभूत, भोजयन्तीमपश्यम्। यदा विषस्य प्रभावेन ते ( ब्रजेन्द्रः ) सम्यक् अचेतनतामभजत्तदा गोविन्दलालयोक्तया दशमांकचिह्निते कारागृहे निहिता अभवन्। गोविन्दलालसहायया मया बालकवेषधारिण्या महता परिश्रमेण पतिर्मे कारागृहान्निष्कास्य मङ्गलानाम्न्या जरठायाः गृहं मापितोऽभवत्। ततोऽपि पुनर्निष्कास्य तमन्धकार एव कुल्यायास्तीरमनयम्। तत्र सह नौकया गोविन्दलालस्सन्नद्ध उपलब्ध। यदाय नौकामारुह्य पलायनपरोऽभवत्तदा रायस्य केनचिच्चरेण दृष्टोऽभवत्, यतोऽस्य कारागृहान्निर्गमनं ज्ञात्वा रायेण बहवश्चरा एतदन्वेषणाय नियुक्ता अभवन्। चराणां दुष्प्रयत्नैर्धत्रायमार्सीत्सा नौका जले न्यमज्जत्। भगवतस्तु कृपयास्य प्राणवियोगो न जात, देवनारायणमुखोपाध्यायस्य दर्शनं चाभवत्। देवनारायणमुखोपाध्यायेन स्वगृहं नीतोऽय पुत्रनिर्विशेषं पाल्यमानश्चावर्तत। अस्मद्गृहे त्वस्य कारागृहान्निष्क्रमणवृत्तान्तस्सर्वतः प्रसृतोऽभवत्। मयि रायस्य सन्देहोऽपि जातः। सन्दिहानेन तेनाहं बहुधा परीक्षिताभवम्।

देवनारायणमुखोपाध्यायस्य भृत्यश्शङ्करो नाम रायस्य मित्रमासीत्। अतएव तेषां ( ब्रजेन्द्रस्य ) देवनारायणमुखोपाध्यायगृहेऽवस्थानं रायेण

ज्ञातमभूत् । ज्ञातमात्र एव वृत्तान्ते रायो देवग्रामं सह सहचरैः प्रापत् । अहमपि बालकवेषप्रतिच्छन्ना गोविन्दकाकेन सह तत्रागमम् । दुष्टो रायस्तत्र कस्मिंश्चिद्भृतकगृहीते गृहे क्रय्यं प्रसार्य वाणिज्यमारभत । एतेषां ( गजेन्द्रस्य ) बन्दीकरणाय प्रतिदिनं नवा नवा उपायाः क्रियमाणा अभूवन् । देवनारायणमुखोपाध्यायगृहवृत्तान्तान्प्रतिदिनं शङ्करो रायाय कथयतिस्म । एकदा मध्याह्ने ' यद्येतैस्सम्मेळनं दैवाद्भवेत्तु र्णयिष्यामि रायस्यान्तरमभिप्रायं—अवहितांश्च कारयिष्यामि ' इति विचिन्त्य देवनारायणमुखोपाध्यायगृहसमीपमगमम् , परं त्वेतैस्सम्मेळनं नाभवत् । रथ्यापार्श्ववर्तिन्यपवरके शेरत एत इति केनाप्यवगत्य , रथ्यायामेव गवाक्षादधो मन्दमेकं गीतं गायन्ती क्षणमतिष्ठम्, अप्येतेन वा शब्देन प्रबुद्धा एते मां प्रत्यभिजानन्तो बहिरागच्छेयुरिति । परं सोऽपि मनोरथो मे सफलो नाभवत् । विफलमनोरथैव च ततः प्रतिनिवृत्ताभवम् ।

देवग्रामादुत्तरतः क्रोशचतुष्टयदूरे कुत्रचिद्वने वने मयैका कुटी निरमायि । आवश्यकेषु समयेषु सैव मे निवासस्थानमभवत् । तस्मिन्नेव दिने सायं , यस्मिन्नहं देवनारायणमुखोपाध्यायगृहान्तिकमगमम् , दुष्टैरेते गृहीता महत्कष्टं प्रापिताश्चेत्यश्रृणवम् । न केवलमियदेव, रायस्य कश्चिद्भृत्य एतैर्हत इत्यपि । ततो गृहीतमन्त्रं जयपालं कारागृह एतेषां समीपं प्रैषयम् । स च तत्र गत्वैतान् कृष्णकम्बळेनैकेनावृतदेहान् कृत्वा भूगृहेऽवस्थाप्य प्रतिनिवृत्तोऽभवत् । यत्र गृह एतेऽभवंस्तत्र गतया मया कवाटरंध्रेणैषां रोदनं श्रुतम् , सान्त्वनाय च गीतमेकमगायि , येनैषां धैर्यावष्टंभः कियानपि समजनि । ततस्तत्रैव कारागृहे देवनारायणमुखोपाध्यायस्य शवोऽपि निहित इत्यवगत्य महान्तमानन्दमविन्दम् । ' एका क्रिया द्व्यर्थकरी बभूव ' इति न्यायेनैकदैवाद्योभयोः प्राणान् रक्षिष्य इति निरचिनव मनसि । अकरवं च यथाविचिन्तितम् ।

बहुलीभवति च ममैतैस्सहवासे धैर्यं मे विगलितुमारभत । देवनारायणमुखोपाध्यायसंजीवनानन्तरमेतैस्सह कुटीं प्रतिनिवर्त्तमाना बालक रूपं परित्यज्य वास्तवरूपमधारयम् ।

निर्मलकुमारो विमातुः कुत्सितेन चरित्रेण दुःखितो निजं गृहं परित्यज्य मातामहगृहान् गच्छन् मध्येमार्गमेव शङ्करमुखाद्विदितवृत्तान्तेन रायेण गृहीतोऽभवत् । ततः प्रभृति सोऽयं कुत्रचित्खण्डगृहे बन्दीकृतो महत्कष्ट मनुभवन्नवर्तत, तस्यापि तस्मात्कष्टादुन्मोचनमावश्यकमन्यमाना पतिं मे बालकरूपधारिणं कृत्वा स्वयं योगिनीवेषमधारयम्। निर्मलं कारागृहादुन्मोच्य तस्मै सर्वानपि देवनारायणमुखोपाध्यायसंबद्धान् वृत्तान्तानवर्णयम् । तस्मिन्नेव दिने जयकालीं बध्वा देवनारायणसादकरवम् । देवनारायणो जयकालीं परित्यक्ष्यतीत्ययमर्थोऽपि मया निर्मलकुमाराय कथित आसीत् । अतएव परित्यक्तमात्रायामेव जयकाल्यां निर्मलो निजपितृसमीपं प्रापत् ।

अस्मिन् पर्याये मम स्त्रीजनसाधारणेनाविचारेणैते पुनरपि पदयतोहराणां हस्ते पतिता अभवन् । देवनारायणमुखोपाध्यायस्य पत्नीपरित्यागं द्रष्टुमेतान् प्रेषयन्त्या मया सहैवैतैर्गोविन्दलालस्य प्रेषणमुचितं कर्तव्यमासीत् । तथा न कुर्वन्त्या एकाकिन एवैतान्प्रेषयन्त्या मया महदनुचितमाचरितम् । गोविन्दलालेन हस्तसंकेतेनैतान् देवनारायणमुखोपाध्यायसमीपगमनात्प्रतिषेधता वनमार्गेण कुटीनिवर्तनं प्रतिबोधिता अप्येते तथा नाचरन्तो जनसमूहमेव प्राविशन् । अन्ततश्च ममानेनाविचारेणैते पुनरपि रायस्य हस्तगता अभवन् ।

कारागार एवैते ज्वरेण पीडिता अभूवन् । गोविन्दलालप्रदत्तेनौषधेन तु पुनरेते सुस्थतामभजन् । तदात्वे रायः पुनर्मयि शङ्कितोऽभवत् । तेनैते तत्त्वकथनाय बहुनिर्बद्धा अभवन् । दैवाद्यैतैरस्माकं नामानि न कथितानि । यदि कथितान्यभविष्यन् तदा पञ्चमारं वयं मारिता अभविष्याम ।

एतन्मध्य एव ' देवनारायणमुखोपाध्यायो निर्मलकुमारं सर्वाधिकारिणं विधाय स्वपदे स्थापयित्वा गृहान्निरित्य वनमगात् ' इत्यर्थ श्रोत्रदहनो वृत्तान्तो मया श्रुतः । निर्मलकुमार एकाकी तदास्ते निजगृहकृत्यं निर्वहन्नवर्तत । रायस्तु पुनरपि तं छलेन हस्तगतमकरोत् । यदा दुष्टा कुलटा च जयकाली निर्मलस्य वक्षस्यारूढा तस्य गळं मर्दयन्त्यासीत्, तदाहं पतिं मे कारागृहाल्लिष्कास्य तस्मै भयानकं दृश्यमिदमदर्शयम् । ततश्चातुर्यान्निर्मलस्य प्राणानरक्षम् । तां च धूर्तां बन्धकरवम् । निर्मलं च स्वगृहान् प्रैषयम् ।

ततोऽहमेनान् ( ब्रजेन्द्रं ) स्वगृहानानयम् । तत्रापि काचिद्भयावहा दुर्घटना समभवत् । जयकाली ताराकालीनाम्नी तस्या एव पितृवंशजा च रायस्योपपत्नीभावमाश्रित्यातिष्ठताम् । एकदा ताराकाली काचित्पोटलिका-यत्र मेऽत्यावश्यकानि पत्राण्यासन्, द्रष्टुं निर्बन्धं महान्तमकरोत् । चिरं रायो युक्त्या पोटलिकां तामदर्शयन्नेव कालमयापयत् । अन्ततस्तु रहस्य-पूर्णा सा पोटलिका ताराकाल्या दृष्टाभवत् । ततो रायस्ताराकालीमुखेन रहस्यभेदं सम्भावयन्नात्मनो महतीं विपदं भाविनीमालोच्य बिभ्यत् ताराकालीममारयत् । मद्गृहस्य नातिदूर एवास्ति किंचित्खण्डगृहम् । तदेव रायस्य यथेच्छविहारस्थानम् । तत्रैव च ताराकाल्या हिंसाप्यभवत् । तत्रैव भूमौ कुत्रचित्तस्याश्शवो निहितोऽवर्तत । दैवाच्च तैस्सा पोटलिका तत्रैव खण्डगृहे लब्धा, यस्यां मे प्राणास्सर्वस्वं चावसन् । मत्पितृपितामहादिभिर्लिखिता बह्व्य- पत्रिकाश्चासन् ।

एकदा मम गुप्तचरेष्वन्यतमो मामेवमब्रवीत्— " हरिहरवन्द्योपाध्यायस्य निकटे रत्नगृहस्य काचिदस्ति कुञ्चिका, तां च स महताऽवधानेन रक्षति " इति । इदं च श्रुत्वा तस्याः कुञ्चिकाया येनकेनाप्युपायेन तस्माद्ग्रहणमत्यावश्यकं मनसि निरचिनवम् । हरिहरेण नाहं दृष्टा कदाचिदपि मम भगिनीं शशिकलां तु स सम्यग्जानाति, यस्य समयद्याहं वृत्तान्तं

वर्णयामि । ततः पूर्वमेव शशिबाला लोकान्तरं गताभूत् । हरिहरस्त्विमं वृत्तान्तं न जानातिस्म । शशिबालाभ्रमेण मय्येव सोऽभिचारमारभत । यदाह तस्य निकटे काचिद्दलगृहकुश्चिकां वर्तमानामभूणवम्, तस्मिन्दिने मया किंचिदतिकुत्सित कार्यं कर्तव्य समभूत् । शशिबालावेषेण तन्निकटं गत्वा मद्य पाययित्वा निश्चेतनाचस्मात्कुञ्चिकामगृह्णाम् ।

ततः परं जयकालीनिकटस्थस्य पत्रस्य विनिमयणकारणम् । यदा रायप्रभृतिभिस्सह जयकाली मयमदमता यत्र विपेत्तनासीत्, तदाहमार्य-पुत्रेण सह तत्रागच्छम् । जयकाल्याः कटेर्हरिहरलिखित पत्र गृहीत्वा तस्या भयोत्पादनाय किंचिदन्यत्तत्र तत्स्थानेऽस्थापयम् । ततो नौकामारूढा कल्कत्तानगरमगच्छम् । तत्र हरिहरस्य गृहान् गत्वा ततोऽप्यावश्यकानि पत्राण्यगृह्णाम् । तत आर्यपुत्राचेन खण्डगृहे लब्धानि पितृपितामहादीनां हस्तलिखितानि पत्राण्यकथे । आर्यपुत्रस्तु पुनारायस्य हस्तगतोऽभूत्, परमह कमप्युन्मोचनोपाय कर्तु नाशकम् ।

एकदा रायस्य किञ्चिद्वचन श्रुत्वाह हर्षविस्मयपूर्णाऽभवम् । तच्चेदं वचनम् –" भैरवपुरस्थे भयानके कारागृहे, यत्र कश्चिद्वृद्धो बहुभ्यो वर्षेभ्यो बन्दीकृतस्तिष्ठति, वृजेन्द्रोऽपि तत्रैव तावत् स्थाप्यताम्, यावदस्मन्मनोरथ. पूर्णो न भवति " इति । रायेणैवमयम्मम दः कुतः कृत इति तु नाह जानामि, आर्यपुत्र भैरवपुरकारागृह प्रेषित ज्ञात्वाह गोविन्दलालादि-भिस्सह भैरवपुरमेवागच्छम् । तत्र गत्वा च वृद्धेन सह वृजेन्द्रस्य सञ्लापो भवतीति, पर तौ परस्परसम्बन्धं न जानीत इति चावागच्छम् । ततोऽह-मेतैस्सम्मेळनाय बहूनुपायानरचयम्, पर रायस्य भृत्यैरहर्निशं सावधानं रक्षद्भिर्मम मनोरथो विफलो जातः । अन्ततो गोविन्दलालस्य पन्त्रणेन यः प्रतिदिनमेषा भोजनादिक नयति तमुत्कोचेनात्माधीनमकरवम् । तद्द्वारेणा-न्नस्थालेऽन्नादधो निधाय काचित्पत्री प्रेषयम् । तत्र च नगतिचिह्नेण सकस्य इति लिखित मया । किन्तु कोऽप्युपायस्सफलो मे नाभवत् ।

एतावत्स्येव कश्चिच्चरो मह्यं नीलाचलस्य समीपे काचित्तपस्विनी निवसतीत्यकथयत् । तपस्विनीवृत्तान्तं श्रुतवत्या मे 'नूनं सैव मे श्वश्रूः' इति प्रत्यभात् । ततोऽविळम्बेन नीलाचलमगच्छम् । अवर्णयं तस्यै सर्वानपि वृत्तान्तान् याथातथ्येन । हरिद्रालब्धया कुञ्चिकया सुरङ्गाया द्वारमुद्घाटितम् , यथा च कियद्भ्यः क्षणेभ्यः पूर्वं तपस्विनी समकर्षयत् ।

ततःपरमहं भैरवपुरमेव पुनः प्रतिनिवृत्ताभवम् । परंत्वतीतेपि मासत्रये एतेषामुन्मोचनोपायः कोऽपि फलं नादर्शयत् । ततः परं गोविन्दलालस्य साहाय्येन पितुः पुत्रस्य च सम्मेळनं वृद्धस्य मरणमित्यादि यन्मया कृतं तत्सर्वं महाराजस्य मुखाद्भवद्भिः श्रुतमेव । महाराजस्य मरणसमये मङ्गळां जरठां रायस्य मातरं तत्रैव मन्दमागच्छन्तीमवलोक्याहं ततोऽपासरम् ।

एते च ( ब्रजेन्द्रः ) ततो निर्गत्य पळायिता इत्यहमशृणवम् । अनन्तरं च तत्र यद्वृत्तं तन्महाराजेन वर्णितम् ।

बहुष्वपि दिवसेष्वतीतेष्वेतत्सम्बन्धिवृत्तान्तानवगमादधिकमहं व्याकुलान्तराभवम् । एकदा चाचिन्तितमेव कश्चिन्मे चरस्समागत्याब्रवीत्— " वृजेन्द्रप्रभुर्भगवतः कृपया माधुरात्मनोऽन्तिके प्रापत् " इति । श्रुत्वा चेदं महानन्दो मे समजनि । तस्मिन्नेव क्षणे नीलाचलं प्रति प्रातिष्ठे । तत्र गत्वा चाहं सर्वं वृत्तान्तजातं तपस्विन्यै मात्रेऽकथयम् । सा च निजं प्रमुषितं पुत्ररत्नं लब्ध्वाऽऽनन्दसागरे जलचरभावमिवाशिश्रियत् । ततो रत्नगृहद्वारोद्घाटनादिकं यथा निर्वर्तितं तथा श्रुतमेव श्रीमद्भिः । अयमेव मे वृत्तान्तः । अतोऽधिकं नाहं किमपि जानामि " इति ।

॥ इति संसारचक्रे द्वितीयभागे एकोनविंशं चक्रम् ॥

## ॥ अथ विंशं चक्रम् ॥

### ( परिपूर्तिः )



सर्वेषामेषां वृत्तान्तानां श्रवणेन कस्य का दशाऽजायतेति नाहं वक्तुं प्रभवामि। अनुभवकुशलास्स्वयमेव विचारयन्तु।

कियन्तंचन कालं तत्र निश्शब्दतावर्तत। ततो महाराजश्भीनारायणवंद्योपाध्यायः परितोऽवलोक्य मन्दम्मन्दं गम्भीरमित्थमवदत्—"हे रायाः! हे हरिहरप्रभवः! कं वा दण्डमहं युष्मभ्यं विदध्याम्, येन मे कोपश्शान्तो भवेत्, न जानामि विचारयन्नपि। नाहं वः प्राणान्पहर्तुमिच्छामि, तथा सति हि युष्माकं शीघ्रमेव दुःखान्मोचनं भवेत्। इदं तु न विस्मरत, यद्भगवान् कदापि युष्मदीयानपराधान्न क्षमिष्यत इति। अस्तु, कृतस्य पापस्य फलमत्रैव भोक्तव्यं युष्माभिः। हरिहर! विचारय तावत्त्वं मनसि कीदृशः पाप्यहमस्मीति। अल्पेन पश्चात्तापेन स्वकृतस्य पापस्य प्रायश्चित्तं भवेदिति न मनुष्व। यद्यहमद्य त्वां नगररक्षणसैनिकसात्करिष्यं नूनं ते मरणदण्डोऽभविष्यत्। परमहमिदं नेच्छामि, निजदुष्कर्मफलभोगाय त्वामहं परित्यजामि। वारीशालमण्डले वज्रपुरनामा कश्चिदस्ति ग्रामः। तमेव ग्रामं तुभ्यमहं ददामि। तत्रैव गत्वा त्वं निजया पत्न्या सह वस। अवशिष्टमायुः परमेश्वरस्य स्मरणेन यापय" इति।

असम्पूर्ण एव महाराजस्य वचने हरिहरो झटित्युत्थाय महाराजस्य चरणयोरपतत्, अरुदच्च चिरं सकरुणम्। सगद्गदमित्थमवदच्च—"धन्योऽसि महाराज धन्योऽसि! श्लाघनीया ते दयनीयेषु दया! कृपयैव तेऽद्य जीवामि नराधमोऽहं, अन्यथा प्राणानां कथापि न श्रूयेत। किमधिकं विज्ञापयामि! मुखाच्छब्दो न निस्सरति। नेच्छामि मुखमहमितः क्षणमपि प्रदर्शयितुम्। अद्यैव श्रीमतामाज्ञां पालयन्नहं निर्यामि। श्रीमन् भूमेन्द्रनारायणबहादुर! भवन्तोऽपि मां क्षाम्यन्तु। मयैव मजेन्द्रभूपण इति

नामान्तरं श्रीमतां निहितमभूत् । अष्टादशवर्षानहमेव भवतः पिता मत्पत्न्येव च माताभूताम् । तावन्तं कालं पालनपोषणादिकं पुत्रनिर्विशेषमेवावाभ्यां भवतः कृतम् । किमिदमेकं वा मनसि कृत्वा ममापराधान् क्षमिष्यति भवान् । यदा भवानष्टादशवर्षवयस्कोऽभवत्, तदाहं रहस्यप्रकटीभावभिया भवन्तं तत्र विवाहव्याजेनानयम्, कष्टं चेममलाभम् । अथाहं भवन्तं पुनः पुनः क्षमां प्रार्थयामि, पुरातनं स्नेहं स्मरन्मां क्षाम्यतु । याम्यहमद्य पत्न्या सह, देव्या राज्ञ्या राज्यं पालय । भुङ्क्ष्व चानुत्तमान् भोगान्, अयमेवाशीर्वादो मे " इति । एतावदुक्त्वा निरगाद्धरिहरः ।

निर्गते हरिहरे महाराजस्सविस्फुलिङ्गाभ्यां नयनाभ्यां रायं निरीक्ष्यावददित्थम्— " राय ! तव त्वपराधा हरिहरीयेभ्योऽप्यधिकाः, अपराधानुगुणो दण्डस्ते को वा विधातुमुचितः ? जानासि वा ? आगळं भूमौ निखाय श्वभिर्भक्ष्यमाणे त्वयि तत्र लवणप्रक्षेपस्समुचितो दण्डस्स्यादिति मन्येऽहम् । परमहमेव नेच्छामि कर्तुम् । हरिहरस्य यादृशो दण्डो विहितस्तादृशमेव तवापि विधातुमिच्छामि । गच्छ त्वमपि, रायपुरं नाम ग्रामं भुङ्क्ष्व, निजानपराधाननुचिन्त्य पश्चात्तापं भज । क्षणमप्यत्र न विळम्बस्व " इति । रायस्तु किमप्यवदन्नेव लज्जावनतशिरास्सह निजैरनुचरैर्निर्ययौ ।

इत्थं निर्गतेषु सर्वेषु निश्शब्दतायां जातायां महाराजो महताऽऽनन्देन गद्गदीभूतस्सप्रेमभरं व्रजेन्द्रभूषणं भूपेन्द्रनारायणनामधेयमाश्लिष्य शिरस्युपाघ्राय चेत्थं तमब्रवीत्— " वत्स ! रत्नगृहस्यास्य कृते मम पितृपितामहाद्यास्सप्त पूरुषा महान्तं प्रयत्नमकुर्वन्, कस्यापि तेषु दृष्टिगतमिदं नाभूत् । भगवतः कृपया मात्रा तेऽन्विष्योपलब्धम् । अत इदं सर्वं त्वय्येव निक्षिपामि । चिरायुर्भूत्वा चिरमिदं सर्वमनुभुङ्क्ष्व " - इति ।

ततो देवीं राज्ञी चाशिषा संयोज्यावददेवम्— "वत्से! तवैव कृपयाद्य पुत्रमुखनिरीक्षणसुखमहमनुभवामि, धन्यासि त्वम्, यत्र त्वमजायथास्तच्च कुलं धन्यम्, यच्च त्वं प्रविष्टा तदपि धन्यं कुलम्, भगवांस्ते सौभाग्यमतिचिरं रक्षतु, आगच्छ, मृगेन्द्रस्य पार्श्वे समुपविश, येनावां नेत्रयोः फलं लभेवहि" इति।

ततो गोविन्दलालादीनित्थमवदत्— "गोविन्दलाल! विजय! जयपाल! गङ्गाधर! यूयं मे हितैषिणो मित्राणि। यादृशो युष्माभिरुपकारो ममाचरितस्तस्य जन्मसु शतिष्वपि न भविष्याम्यनृणः। किं वाधिकं वदामि। यथापूर्वं यूयं निजे निजे पदे पुनः स्थाप्यन्ते सहोन्नत्या। सर्वेपि यूयं दम्पत्योरनयोराशिषः प्रयुञ्जाना भगवन्तं प्रार्थयत मङ्गलम्" इति। उपसंहृतवचने च महाराजे सर्वेप्येकदैव "विजयतां महाराजः" इत्युच्चैरुदघोषयन्।

ततो महाराजः पुनरपि तपस्विनीं (महाराज्ञीं) एवमवदत्— "प्रिये! विंशतिवर्षेभ्यः परस्ताद्भवत्या वध्वाश्च मुखदर्शनमपारकरुणानिधेर्भगवतः कृपाया एव फलम्। अनुभूतं दुःखं विस्मर। एतावेव राज्ये स्थापयित्वा गच्छावावां वनमेव। चिरं स्वस्संसारचक्रेण कृताः। किमितोऽपि विलम्ब्यताम्" इति। एतावदुक्त्वा महाराजो महाराज्ञ्या सह मृगेन्द्रं देवीं राज्ञीं च रत्नसिंहासन उपवेश्याशिषः प्रयुज्य वनं प्राविशत।

मृगेन्द्रो देवी राज्ञी च सुखेन राज्यमपालयताम्। न्यायपरायणतया औदार्येण च तयोः प्रजास्सुखमन्वभूवन्। निर्मलस्य मृगेन्द्रस्य च मैत्री दिने दिनेऽभ्यवर्धत। परस्परं तौ मैत्रीं सम्यङ् निरवहताम्।

रायस्य गमनानन्तरं जयकाली वेश्याभावमवलम्ब्य कलकत्तानगरेऽवसत्। रूपसौन्दर्यादिशालिन्यास्तस्याः कियानपि कालस्सुखेनात्यगात्।

ततोऽतिचारेण महता सर्वाङ्गेषु व्रणैरुत्पन्नैः पीडिता, तत्रापि कृमिभिर्जातै र्जुगुप्सिता, पुलाकमेकमप्यलभमानाऽन्ततो महत्कष्टमनुभूय प्राणानजहात्। तां च मृतां चण्डाला निमतलाघट्टस्थे श्मशानेऽदहन्। "अत्युत्कटैः पुण्य पापैरिहैव फलमश्नुते" इतीदं सत्यमभवत्।

भगवन्! दयानिधे! त्वदीये संसारचक्रे पतितो व्रजेन्द्रभूषणः परिभ्रमन्नन्ततो भूपेन्द्रनारायणो बभूव। महिमैव मायायास्ते। इत्थमेव सर्वेषामापद्ग्रस्तानां समीचीनं पर्यवसानं कुरु।

इति संसारचक्रे द्वितीयभागे विंशं चक्रम्।



इति संसारचक्रे द्वितीयो भागः।

॥ संसारचक्रं समाप्तम् ॥

ततो देवीं राज्ञीं चाशिषा संयोज्यावददेवम्— " वत्से ! तवैव कृपयाद्य पुत्रमुखनिरीक्षणसुखमहमनुभवामि , धन्यासि त्वम् , यत्र त्वमजा-यथास्तच्च कुलं धन्यम् , यच्च त्वं प्रविष्टा तदापि धन्यं कुलम् , भगवा स्ते सौभाग्यमतिचिरं रक्षतु , आगच्छ , मृगेन्द्रस्य पार्श्वे समुपविश, येना-वा नेत्रयोः फलं लभेवहि " इति ।

ततो गोविन्दलालादीनित्थमवदत्— " गोविन्दलाल ! विजय ! जयपाल ! गङ्गाधर ! यूय मे हितैषिणो मित्राणि । यादृशो युष्माभिरुपकारो ममाचरितस्तस्य जन्मसु प्रतिकुर्वन्नपि न भविष्याम्यनृणः । किं वाधिकं वदामि । यथापूर्वं यूय निजे निजे पदे पुनः स्थाप्यन्ते सहोत्सवा । सर्वेपि यूय दम्पत्योरनयोराशिषः प्रयुञ्जाना भगवन्तं प्रार्थयत मङ्गलम् " इति । उपसंहृतवचने च महाराजे सर्वेप्येकवेव " विजयतां महाराजः " इत्युच्चैरुदघोषयन् ।

ततो महाराजः पुनरपि तपस्विनीं ( महाराज्ञीं ) एवमवदत्— " प्रिये ! विंशतिवर्षेभ्यः परस्ताद्वृत्तस्य वध्वाश्च मुखदर्शनमपारकरुणानिधे-र्भगवतः कृपाया एव फलम् । अनुभूतं दुःखं विस्मर । एतावेव राज्ये स्थापयित्वा गच्छावावां वनमेव । चिरं स्वस्संसारचक्रेण कृताः । किमि-तीतो विलम्ब्यताम् " इति । एतावदुक्त्वा महाराजो महाराज्ञ्या सह मृगेन्द्रं देवीं राज्ञीं च रत्नसिंहासन उपवेश्याशिषः प्रयुज्य वनं प्राविशत ।

मृगेन्द्रो देवी राज्ञी च सुखेन राज्यमपालयताम् । न्यायपरायणतया औदार्येण च तयोः प्रजास्सुखमन्वभूवन् । निर्मलस्य मृगेन्द्रस्य च मैत्री दिने दिनेऽभ्यवर्धत । परस्परं तौ मैत्रीं सम्यक् निरवहताम् ।

रायस्य गमनानन्तरं जयकाळी वेश्याभावमवलम्ब्य कल्कत्तानगरे ऽवसत् । रूपसौन्दर्यादिशालिन्यास्तस्याः कियामपि कालस्सुखेनात्यगात् ।

ततोऽतिघोरेण महता सर्वाङ्गेषु व्रणैरुत्पन्नैः पीडिता, तत्रापि कृमिभिर्जाते र्जुगुप्सिता, पुलाकमेकमप्यलभमानाऽन्ततो महत्कष्टमनुभूय प्राणानजहात्। तां च मृतां चण्डाला निमतलाघट्टस्थे श्मशानेऽदहन्। "अत्युत्कटैः पुण्य पापैरिहैव फलमश्नुते" इतीदं सत्यमभवत्।

भगवन्! दयानिधे! त्वदीये संसारचक्रे पतितो व्रजेन्द्रभूषणः परिभ्रमन्नन्ततो भूपेन्द्रनारायणो बभूव। महिमैष मायायास्ते। इत्थमेव सर्वेषामापद्ग्रस्तानां समीचीनं पर्यवसानं कुरु।

इति संसारचक्रे द्वितीयभागे विंशं चक्रम्।

---

## इति संसारचक्रे द्वितीयो भागः।

॥ संसारचक्रं समाप्तम् ॥

## ॥ अथ विंशं चक्रम् ॥

### ( परिपूर्तिः )



सर्वेषामेषां वृत्तान्तानां श्रवणेन कस्य का दशाऽजायतेति नाहं वक्तुं प्रभवामि। अनुभवकुशलास्स्वयमेव विचारयन्तु।

कियन्तंचन कालं तत्र निश्शब्दतावर्तत। ततो महाराजश्रीनारायणवंधोपाध्यायः परितोऽवलोक्य मन्दम्मन्दं गम्भीरमित्थमवदत्— "हे रायाः! हे हरिहरप्रभवः। कं वा दण्डमहं युष्मभ्यं विदध्याम्, येन मे कोपश्शान्तो भवेत्, न जानामि विचारयन्नपि। नाहं वः प्राणानपहर्तुमिच्छामि, तथा सति हि युष्माकं शीघ्रमेव दुःखान्मोचनं भवेत्। इदं तु न विस्मरत, भगवान् कदापि युष्मदीयानपराधान्न क्षमिष्यत इति। अस्तु, कृतस्य पापस्य फलमत्रैव भोक्तव्यं युष्माभिः। हरिहर! विचारय तावत्त्वं मनसि कीदृशः पाप्यहमस्मीति। अल्पेन पश्चात्तापेन त्वत्कृतस्य पापस्य प्रायश्चित्तं भवेदिति न मनुष्व। यद्यहमद्य त्वां नगररक्षणसैनिकसादकरिष्यं नूनं ते मरणदण्डोऽभविष्यत्। परमहमिदं नेच्छामि, निजदुष्कर्मफलभोगाय त्वामहं परित्यजामि। बारीशालमण्डले यमपुरनामा कश्चिदस्ति ग्रामः। तमेव ग्रामं तुभ्यमहं ददामि। तत्रैव गत्वा त्वं निजया पत्न्या सह वस। अवशिष्टमायुः परमेश्वरस्य स्मरणेन यापय" इति।

अश्रुपूर्ण एव महाराजस्य वचने हरिहरो झटित्युत्थाय महाराजस्य चरणयोरपतत्, अरुदच्च चिरं सकरुणम्। सगद्गदमित्थमवदच्च— "धन्योऽसि महाराज धन्योऽसि। श्लाघनीया ते दयनीयेषु दया। कृपयैव तेऽद्य जीवामि नराधमोऽहं, अन्यथा प्राणानां कथापि न श्रूयेत। किमधिकं विज्ञापयामि। मुखाच्छब्दो न निस्सरति। नेच्छामि युष्मदृष्टितः क्षणमपि मद्दर्शयितुम्। अद्यैव श्रीमन्महाराजं पालयन्नहं निर्यामि। श्रीमन् भूपेन्द्रनारायणबहादुर! भवन्तोऽपि मां क्षाम्यन्तु। सदैव भवेन्द्रभूपन इति

नायान्तर श्रीमता निहित रभूत् । अष्टावशवर्षानहमेव भवतः पिता मत्पत्न्येव च माताभूताव । तावन्त कालं पालनपोषणादिकं पुत्रनिर्विशेषमेवावाभ्यां भवतः कृतम् । किमिदमेकं वा मनसि कृत्वा ममापराधान् क्षमिष्यति भवान् । यदा भवानष्टादशवर्षवयस्कोऽभवत्, तदाहं रहस्यप्रकटीभावभिया भवन्तं तत्र विवाहव्याजेनानयम् , कष्टं चेमत्सादाम् । अथाहं भवन्त पुनः पुनः क्षमां प्रार्थयामि , पुरातनं स्नेहं स्मरन्मां क्षाम्यतु । याम्यहमथ पत्न्या सह, देव्या राज्ञ्या राज्यं पालय । भुङ्क्ष्व चानुपमान् भोगान्, अयमेवाशीर्वादो मे " इति । एतावदुक्त्वा निरगाद्धरिहरः ।

निर्गते हरिहरे महाराजस्सविस्फुलिंगाभ्यां नयनाभ्यां राय निरीक्ष्या-यदिदित्थम्— " राय ! तव त्वपराधा हरिहरीयेभ्योऽप्यधिकाः , अपराधा नुगुणो दण्डस्ते को वा विधातुमुचित ? जानासि वा ? आगळ मूगे निखाय श्वभिर्भक्ष्यमाणे त्वयि तत्र लवणप्रक्षेपस्समुचितो दण्डस्स्यादिति मन्येऽहम् । परमहमेव नेच्छामि कर्तुम् । हरिहरस्य यादृशो दण्डो विहित-स्तादृशमेव तवापि विधातुमिच्छामि । गच्छ त्वमपि , रायपुरं नाम ग्राम भुङ्क्ष्व , निजानपराधाननुचिन्त्य पश्चात्ताप भज । क्षणमप्यत्र न विलम्ब स्व " इति । रायस्तु किमप्यवदन्नेव लज्जावनतशिरास्सह निजैरनुचरै निर्ययौ ।

इत्थं निर्गतेषु सर्वेषु निश्शब्दतायां जातायां महाराजो मदताऽऽनन्दे गद्गदीभूतस्समेमभरं भ्रजेन्द्रभूषणं भूपेन्द्रनारायणनामधेयमाश्लिष्य शिरस्युपा-घ्राय चेत्थं तमब्रवीत्— ' वत्स ! रत्नगृहस्यास्य कृते मम पितृपिता-महादयास्सदा पूरया महान्तं प्रयत्नमकुर्वन् , कस्यापि तेषु दृष्टिगतमिदं ना-भूत् । भगवतः कृपया मात्रा तेऽन्विष्योपलब्धम् । अत इदं सर्वं त्वय्येव निक्षिपामि । चिरायुर्भूत्वा चिरमिदं सर्वमनुभुङ्क्ष्व ' - इति ।

ततो देवी राज्ञी चाशिषा संयोज्यावददेवम् — " वत्से! तवैव कृपयाद्य पुत्रमुखनिरीक्षणसुखमहमनुभवामि, धन्यासि त्वम्, यत्र त्वमजायथास्तत्र कुलं धन्यम्, यच्च त्वं प्रविष्टा तदपि धन्यं कुलम्, भगवांस्ते सौभाग्यमतिचिरं रक्षतु, आगच्छ, मृगेन्द्रस्य पार्श्वे समुपविश, येनावां नेत्रयोः फलं लभेवहि " इति।

ततो गोविन्दलालादीनित्थमवदत् — " गोविन्दलाल! विजय! जयपाल! गङ्गाधर! यूयं मे हितैषिणो मित्राणि। यादृशो युष्माभिरुपकारो ममाचरितस्तस्यतु जन्मसु प्रतिकुर्वन्नपि न भविष्याम्यनृणः। किं वाधिकं वदामि। यथापूर्वं यूयं निजे निजे पदे पुनः स्थाप्यन्ते सहोत्सवा। सर्वेपि यूयं दम्पत्योरनयोराशिषः प्रयुञ्जाना भगवन्तं प्रार्थयत मङ्गलम् " इति। उपसंहृतवचने च महाराजे सर्वेप्येकदैव " विजयतां महाराजः " इत्युच्चैरुद्घोषयन्।

ततो महाराजः पुनरपि तपस्विनीं ( महाराज्ञीं ) एवमवदत् — " प्रिये! विंशतिवर्षेभ्यः परस्तादुत्तरस्य वध्वाश्च मुखदर्शनमपारकरुणानिधेर्भगवतः कृपाया एव फलम्। अनुभूतं दुःखं विस्मर। एतावेव राज्ये स्थापयित्वा गच्छावावां वनमेव। चिरं स्वस्संसारचक्रेण कृताः। किमितीतो विलम्ब्यताम् " इति। एतावदुक्त्वा महाराजो महाराज्ञ्या सह मृगेन्द्रं देवीं राज्ञीं च राजसिंहासन उपवेश्याशिषः प्रयुज्य वनं प्राविशत।

मृगेन्द्रो देवी राज्ञी च सुखेन राज्यमपालयताम्। न्यायपरायणतया औदार्येण च तयोः प्रजास्सुखमन्वभूवन्। निर्मलस्य मृगेन्द्रस्य च मैत्री दिने दिनेऽभ्यवर्धत। परस्परं तौ मैत्रीं सम्यक् निरवहताम्।

राज्ञ्य गमनानन्तरं जयकान्ती वैराग्यभावमवलम्ब्य कल्कत्तानगरेऽवसत्। रूपसं प्रदर्शनादिशाम्नियामस्या स्त्रियामपि कान्स्तुमेनात्यगात्।

ततोऽतिचारेण महता सर्वाङ्गेषु व्रणैरुत्पन्नैः पीडिता, तत्रापि कृमिभिर्जातै र्जुगुप्सिता, पुलाकमेकमप्यलभमानाऽन्ततो महत्कष्टमनुभूय प्राणानजहात्। तां च मृतां चण्डाला निमतलाघट्टस्थे श्मशानेऽदहन्। "अत्युत्कटैः पुण्य पापैरिहैव फलमश्नुते" इतीदं सत्यमभवत्।

भगवन्! दयानिधे! त्वदीये संसारचक्रे पतितो व्रजेन्द्रभूषणः परिभ्रमन्नन्ततो भूपेन्द्रनारायणो बभूव। महिमैष मायायास्ते। इत्थमेव सर्वेषामापद्ग्रस्तानां समीचीनं पर्यवसानं कुरु।

इति संसारचक्रे द्वितीयभागे विंशं चक्रम्।



## इति संसारचक्रे द्वितीयो भागः।

॥ संसारचक्रं समाप्तम्॥

ततो देवीं राज्ञीं चाशिषा संयोज्यावददेवम्— " वत्से ! तवैव कृपयाद्य पुत्रमुखनिरीक्षणसुखमहमनुभवामि , धन्यासि त्वम् , यत्र त्वमजायथास्तच्च कुलं धन्यम् , यच्च त्वं प्रविष्टा तदपि धन्यं कुलम् , भगवास्ते सौभाग्यमतिचिरं रक्षतु , आगच्छ , मृगेन्द्रस्य पार्श्वे समुपविश, येनावां नेत्रयोः फलं लभेवहि ' इति ।

ततो गोविन्दलालादीनित्थमवदत्— " गोविन्दलाल ! विजय ! जयपाल ! गङ्गाधर ! यूयं मे हितैषिणो मित्राणि । यादृशो युष्माभिरुपकारो ममाचरितस्तस्य जन्मसु प्रतिकुर्वन्नपि न भविष्याम्यनृणः । किं वाधिकं वदामि । यथापूर्वं यूयं निजे निजे पदे पुनः स्थाप्यन्ते सहोत्सवम् । सर्वेऽपि यूय दम्पत्योरनयोराशिषः प्रयुञ्जाना भगवन्तं प्रार्थयत मङ्गलम् " इति । उपसंहारवचने च महाराजे सर्वेऽप्येकदैव " विजयतां महाराजः " इत्युच्चैरुदघोषयन् ।

ततो महाराजः पुनरपि तपस्विनीं ( महाराज्ञीं ) एवमवदत्— " प्रिये ! विंशतिवर्षेभ्यः परमाद्यतस्य वध्वाश्च मुखदर्शनमपारकरुणानिधेर्भगवतः कृपाया एव फलम् । अनुभूतं दुःखं विस्मर । एतावेव राज्ये स्थापयित्वा गच्छावावां वनमेव । चिरं स्वसंसारचक्रेण कृताः । किमितीतो विलम्ब्यताम् " इति । एतावदुक्त्वा महाराजो महाराज्ञ्या सह मृगेन्द्रं देवीं राज्ञीं च रत्नसिंहासन उपवेश्याशिषः प्रयुज्य वनं प्राविशत ।

मृगेन्द्रो देवी राज्ञी च सुखेन राज्यमपालयताम् । न्यायपरायणतया औदार्येण च तयोः प्रजास्सुखमन्वभूवन् । निर्मलस्य मृगेन्द्रस्य च मैत्री दिने दिनेऽभ्यवर्धत । परस्परं तौ मैत्रीं सम्यक् निरवहताम् ।

राज्ञ्य गमनानन्तरं जयकाली वेश्याभावमवलम्ब्य कलकत्तानगरेऽवसत् । रूपसौन्दर्यादिशालिन्यामन्यस्यां क्रियामपि कालस्सुखेनात्यगात् ।

ततोऽतिचारेण महता सर्वाङ्गेषु व्रणैरुत्पन्नैः पीडिता, तत्रापि कृमिभिर्जातै र्जुगुप्सिता, पुलाकमेकमप्यलभमानाऽस्ततो महत्कष्टमनुभूय प्राणानजहात्। ता च मृतां चण्डाला निमतलाघट्टस्थे श्मशानेऽदहन्। "अत्युत्कटैः पुण्य पापैरिहैव फलमश्नुते" इतीदं सत्यमभवत्।

भगवन्! दयानिधे! त्वदीये संसारचक्रे पतितो व्रजेन्द्रभूषणः परिभ्रमन्नन्ततो भूपेन्द्रनारायणो बभूव। महिमैष मायायास्ते। इत्थमेव सर्वेषामापद्ग्रस्तानां समीचीनं पर्यवसानं कुरु।

इति संसारचक्रे द्वितीयभागे विंशं चक्रम्।

इति संसारचक्रे द्वितीयो भागः।

॥ संसारचक्रं समाप्तम् ॥